# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]




४७ वर्षे

३-४ अङ्कौ

मार्गशीर्ष-फाल्गुनपूर्णिमे

दिसम्बर-मार्च, १९९२-९३ ई०

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

[ त्रैमासिकी ]

सम्पादकः

डॉ० भागीरथप्रसादत्रिपाठी 'वागीशः शास्त्री'

अनुसन्धानसंस्थाननिदेशकः

उप-सम्पादकः

डॉ० हरिश्चन्द्रमणित्रिपाठी

प्रकाशनाधिकारी




४७ वर्षं

३-४ अङ्कौ

वार्षिकं मूल्यम्—३० रूप्यकाणि

दिसम्बर-मार्च, १९९२ ९३ ई०

# विषयानुक्रमणी





# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

| ४७ वर्षे | मार्गशीर्ष-फाल्गुनपूर्णिमे, वि० सं० २०४९ | ३-४ अङ्कौ |
|---|---|---|

# कतिपयपाणिनीयसूत्रमीमांसा*

आचार्यश्रीरामप्रसादत्रिपाठी
व्याकरण-योगतन्त्रागमविभागाध्यक्षचरः
वेदवेदाङ्गसंकायाध्यक्षचरश्च,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

## [ दिक्संख्ये संज्ञायाम्—अष्टा० २।१।५० ]

अत्र 'प्राक्कडारात् समासः'[1] इति सूत्रतः प्राक् समास इति पदद्वयस्याधिकारो भवति। 'समर्थः पदविधिः'[2] इति परिभाषासूत्रतः समर्थ इति पदस्योपस्थितिर्भवति। 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन'[3] इति सूत्रतः समानाधिकरणेनेति पदमनुवर्तते। 'सुबामन्त्रिते पराङ्गवत् स्वरे'[4] इत्यतः सुबिति पदम्, 'सह सुपा'[5] इत्यतः सुपा इति पदं चानुवर्तते। 'विशेषणं विशेष्येण बहुलम्'[6] इत्यतो बहुलपदरहितं सम्पूर्णं सूत्रमनुवर्तते। 'तत्पुरुषः समानाधिकरणः कर्मधारयः'[7] इत्यस्यापि सम्बन्धः। संज्ञायाः कार्यकालपक्षमादाय 'प्रथमानिर्दिष्टं समास उपसर्जनम्'[8] इति संज्ञासूत्रस्याप्यत्रैकवाक्यता कार्या, ततश्च 'उपसर्जनं पूर्वम्'[9] इत्यस्यापि सम्बन्धो मन्तव्यः।

* निबन्धोऽयं "सारस्वती सुषमायाः" षट्चत्वारिंशद्वर्षीयतृतीयचतुर्थाङ्कतः क्रमशः प्रचलन्नस्ति।

१. अष्टा० २।१।३; २. तत्रैव—२।१।१; ३. तत्रैव—२।१।४९।
४. तत्रैव—२।१।२; ५. तत्रैव—२।१।४; ६. तत्रैव—२।१।५७।
७. तत्रैव—१।२।४२; ८. तत्रैव—१।२।४३; ९. तत्रैव—२।२।३०।

एवं च विशेषणात्मकदिक्संख्यान्यतरवाचिप्रातिपदिकप्रकृतिकसुबन्ततदादेः समर्थसमानाधिकरणविशेष्यवाचिप्रातिपदिकप्रकृतिकसुबन्तेन तदादिना सह विकल्पेन समासो भवतु, स च समासः कर्मधारयाख्यतत्पुरुषो मन्तव्यः, समस्यमानपदं संज्ञारूपं चेत्। एतत्समासविधायकसूत्रघटकप्रथमान्तपदनिर्दिष्टमुपसर्जनसंज्ञं स्यात्, तस्य च पूर्वं प्रयोगः स्यादिति सूत्रार्थः सम्पन्नः। पूर्वा चासौ इषुकामशमी चेति 'पूर्वेषुकामशमी', सप्त च ते ऋषयश्च 'सप्तर्षयः' इत्युदाहरणद्वयम्। प्रथमं ग्रामविशेषस्य संज्ञा, द्वितीयं तु सप्तानामृषिविशेषाणां संज्ञा। 'उत्तरा वृक्षाः', 'पञ्च ब्राह्मणाः' इत्यादिषु न भवत्ययं समासः, असंज्ञात्वात्।

ननूक्तोदाहरणद्वये विशेषणं विशेष्येणेत्येव समासे सिद्धे पुनरिदं सूत्रं किमर्थमिति चेदुच्यते—संज्ञायामेवायं समासो भवतु—इति नियमार्थमिदम्। नियमश्चायं पाक्षिकसिद्धविधेयकत्वविशिष्टः, न तु परिसंख्यारूपः। यथा—'व्रीहीनवहन्ति' इत्यनया श्रुत्या पाक्षिकप्राप्तस्यावघातस्य नियमः क्रियते—अवघातेनैव तण्डुलानां वितुषीकरणं भवतु, न तु नखविदलनादिना। तथैवात्रापि संज्ञात्वविशिष्टस्यैव समासस्यानेन साधुत्वं बोधनीयम्, न तु तदन्यस्य। यथा व्याकरणशास्त्रेऽपि कर्मणि द्वितीययैव साधुत्वं बोध्यताम्, न तु तदन्यविभक्त्या। एष च नियमः कर्मधारयतत्पुरुषस्यैव। तेन पञ्च गावो यस्यासौ 'पञ्चगुः' इत्यादौ बहुव्रीहिर्भवत्येव। त्रिलोकनाथ इत्यत्रापि त्रयो लोका यस्यासौ त्रिलोक इति बहुव्रीहिः, त्रयश्चासौ नाथश्चेति त्रिलोकनाथ इति कर्मधारयतत्पुरुषः। तत्त्वबोधिनीकृता तु "लोकशब्दस्य लोकसमुदाये लक्षणा। त्र्यवयवश्चासौ लोकश्चेति त्रिलोकः, मध्यमपदलोपिसमासः शाकपार्थिवादित्वात् कर्तव्यः, ततः षष्ठीतत्पुरुषो विधेयः" इत्येवं सिद्धान्तितं प्रकृतसूत्रे। तत्तु क्लिष्टकल्पनागर्भमुपायान्तरपरं विभाव्यताम्।

## [ पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन—
## अष्टा० २।१।४९ ]

अत्र सूत्रेऽपि पूर्ववत् 'समास-समर्थ-सुप्-सुपा' इत्यादिकं सर्वं सम्बध्यते। अतश्च विशेषणात्मकपूर्वकालाद्यर्थवाचकमेवादि च यत् प्रातिपदिकं तत्प्रकृतिकं सुबन्तं तदादिविशेष्यात्मकसमर्थसमानाधिकरणप्रातिपदिकप्रकृतिकसुबन्तेन तदादिना सह विकल्पेन समासभावापन्नं भवतु, स च समासः कर्मधारयाभिधतत्पुरुषः स्यात्, एतत्समासविधायकसूत्रघटकप्रथमान्तपदनिर्दिष्टमुपसर्जनसंज्ञं भवतु, तस्य च पूर्वं प्रयोगो विधेय इति सूत्रार्थः सम्पद्यते। उदाहरणं च—'पूर्वं स्नातः पश्चादनुलिप्तः' इति 'स्नातानुलिप्तः', 'पुराणमीमांसकः' इत्यादि।

ननु 'विशेषणं विशेष्येण' इत्यनेनैवात्र समाससिद्धौ एतत्सूत्रं किमर्थमिति चेत्—उच्यते, पूर्वकालादीनां पूर्वनिपातस्य नियमार्थमिदम्। अयमपि नियमः

पाक्षिकप्राप्तौ विधेयविषयक एव, न तु परिसंख्यारूपः । तथा हि—संज्ञाविषयक-कार्यकालपक्षेण प्रथमानिर्दिष्टमित्यस्यैकवाक्यतया प्रथमानिर्दिष्टस्योपसर्जनसंज्ञायाम्, 'उपसर्जनं पूर्वम्'[1] इत्युपसर्जनस्य पूर्वं प्रयोगो विधीयते। तत्र 'विशेषणं विशेष्येण'[2] इत्यनेन समासकरणे स्नातानुलिप्त इतिवत् 'अनुलिप्तस्नातः' इत्यपि प्रसज्येत ।

यतश्च गुणशब्दयोः परस्परं विशेषणविशेष्यभावे कामचारो भवति। यथा—'खञ्जकुब्जः' इति 'कुब्जखञ्जः' इति च । यस्य यदा विशेषणत्वविवक्षा, तस्य तदा पूर्वप्रयोगः। एवमेव क्रियाशब्दयोरपि स्थितिः, 'पाचकपाठकः' 'पाठकपाचकः' इति च। तथा गुण-क्रियाशब्दयोरपीयमेव व्यवस्था, यथा—'खञ्जपाचकः' 'पाचकखञ्जः' इति वा। एवमेव प्रकृते स्नातानुलिप्तशब्दयोः क्रियाशब्दत्वाद् द्विधा द्वयी प्रसक्ता, सा पूर्वनिपातनियमेन वार्यते, पूर्वकालादीनामेव प्रथमानिर्दिष्टतया पूर्वनिपातस्य विधानं न तु तत्समर्थसमानाधिकरणस्यान्यस्य ।

स च पूर्वनिपात एतेषां पूर्वकालादीनां विशेषणत्वविवक्षायां पूर्वतो विशेषणं विशेष्येणेत्यनेन सिद्ध एव। अतश्च विशेष्यत्वविवक्षायामपि पूर्वमेव प्रयोगो भवतु—इति विशेषः प्रतिपादितोऽनेन नियमेन । अतश्च सूत्रार्थकरणे विशेषणविशेष्यान्यतरात्मकपूर्वकालादीनां तदन्यतरात्मकसमर्थसमानाधिकरणेन सह समासविधानव्यवस्था बोद्धव्या ।

इदमप्यत्र बोध्यम्—विशेषणविशेष्ययोः ससम्बन्धिकतयाऽन्यतरोपादानमात्रेणेतराक्षेपसम्भव उभयोरुपादानं स्पष्टार्थमिति प्रदीपकृतः श्रीकैयटस्याभिमतिः । एतच्च 'कुत्सितानि कुत्सनै'[3] इत्यत्रापि तुल्यम् । पदमञ्जरीकृता श्रीहरदत्तमिश्रेण तु—"समस्यमानपदद्वयजन्यबोधप्रकारयोर्विशेषणविशेष्यधर्मयोर्यत्र परस्परव्यभिचारस्तत्रैव समासो यथा स्यान्नान्यत्रेत्येतदर्थमुभयोपादानम् । तथा च नीलोत्पलादौ समासो भवति, न तु 'तक्षकः सर्पः' इत्यादौ, न हि तक्षकत्वं सर्पत्वं व्यभिचरति" इत्युक्तम्। तत्तु न रोचयामहे—कैलासाद्रिः, मन्दराद्रिः, भावपदार्थः, तर्कविद्या, व्याकरणशास्त्रम्, भोजराजः, इत्यादौ तादृशव्यभिचाराभावे साधुत्वानापत्तेः ।

ननु विशेषणविशेष्यभावे कामचारात् 'पाचकपाठकः' इत्यादिवद् नीलोत्पलादावप्यव्यवस्थितः पूर्वनिपातः स्यादिति चेदत्राहुः—जातिशब्दस्य गुणक्रियाशब्दानां समभिव्याहारे विशेष्यसमर्पकतैव, तेन 'नीलोत्पलम्', 'पाचकब्राह्मणः' इति व्यवस्थित एव प्रयोगः। अत्रोपसर्जनमिति महासंज्ञा मूलम्, अप्रधानं ह्युपसर्जनम् । गुणक्रिययोश्च द्रव्यं प्रत्यप्राधान्यं स्पष्टमेवेति तत्त्वबोधिनी द्रष्टव्या । एवं च—पूर्वकालादीनामेव पूर्वनिपातेन 'स्नातानुलिप्तः' इत्यादिप्रयोगाणां साधुत्वं बोधनीयमिति नियमनिष्कर्षो ज्ञातव्यः। यदि पूर्वं तैलादिनाऽनुलेपः क्रियते, पश्चात् स्नानं क्रियते, तदा

---

१. अष्टा० २।२।३०;　　२. तत्रैव—२।१।५७;　　३. तत्रैव—२।१।५३ ।

'अनुलिप्तस्नातः' इत्यपि प्रयोगो भवत्येव, अनुलेपस्य पूर्वकालिकत्वात् । यदि पूर्वं स्नानं पश्चाच्चन्दनादिनाऽनुलेपः, तदा स्नातपदस्य विशेष्यवाचकत्वविवक्षायामपि 'स्नातानुलिप्तः' इत्येव भवतीत्यपि द्रष्टव्यम् ।

## [ उपमानानि सामान्यवचनैः—अष्टा० २।१।५५ ]

अत्रापि पूर्ववदनुवृत्त्यादिकं विधाय—उपमानवाचिप्रातिपदिकप्रकृतिकसुबन्त-तदादि-समर्थसमानाधिकरणसामान्य-( साधारणधर्म )-वाचकप्रातिपदिकप्रकृतिकसुबन्तेन तदादिना सह विकल्पेन समासभावापन्नं भवतु—स च समासः कर्मधारय-तत्पुरुष इति कथ्यते । एतत्समासविधायकसूत्रघटकप्रथमान्तपदजन्यबोधविषय उपसर्जन-संज्ञो भवतु तस्य च पूर्वं प्रयोगो भवतु—इति सूत्रार्थः सम्पद्यते । उदाहरणं च—घन इव श्यामः 'घनश्यामः' इति । 'विशेषणं विशेष्येण' इत्येव सिद्ध इदमपि पूर्वनिपात-नियमार्थम् । उपमानवाचकस्योपसर्जनसंज्ञायां तस्यैव पूर्वनिपातेन साधुत्वं स्यात्, न तु कामचारः । अत एव तत्त्वबोधिन्यामप्युक्तम्—अन्यथाऽनियमः स्यात् खञ्जकुब्जादि-वदिति भावः ।

किञ्च 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' (अष्टा० ६।२।२) इति सूत्रे प्रतिपदोक्तस्यैवोपमानग्रहणेन ग्रहणार्थमपोदं सूत्रम् । अत एव मयूरव्यंसकादि-त्वात् समास उपमानस्वरो न प्रवर्तत इति सिद्धान्तः । एवं च पाक्षिके सति विकल्पित-विधेयक एवायमपि नियमः, न तु परिसंख्यारूपः । विशेषणं विशेष्येणेत्यनेन पर्यायेणो-भयोः पूर्वनिपातस्य साधुत्वं प्राप्तमनेन नियम्यते—उपमानवाचकस्यैव पूर्वनिपातेन साधुत्वं मन्तव्यम्, न तु सामान्यवाचकस्यापि । तेन 'घनश्यामः' इत्यस्यैव साधुत्वम्, न तु 'श्यामघनः' इत्यस्यापि । यदि तु श्यामश्चासौ घनश्चेति विग्रहविवक्षा, तदा तु 'श्यामघनः' इति भवत्येव । प्रकृतोदाहरणे तु पूर्वपदं स्वसदृशे लाक्षणिकमत एवेव-शब्दस्य प्रयोगेण लौकिकविग्रहः कृतः । एवं च सामानाधिकरण्येन 'मृगीव चपला' इति विग्रहे 'मृगचपला' इत्यादौ पुंवद्भावः सिद्धति । उत्तरपदोपस्थापितश्यामत्व-चपलत्वादिद्वारकमेव सादृश्यं गृह्यते सन्निधानात्, उपमानता तु भूतपूर्वगत्या शक्यार्थ-मादाय बोध्या ।

## [ युवाखलतिपलितवलिनजरतीभिः—अष्टा० २।१।६७ ]

युवन्-प्रातिपदिकप्रकृतिकं यत् सुबन्तं तदादि, तत् समर्थसमानाधिकरणखल-त्यादिप्रातिपदिकप्रकृतिकसुबन्तेन तदादिना सह विकल्पेन समासभावापन्नं भवतु, स च कर्मधारयतत्पुरुषः, तत्समासविधायकसूत्रघटकप्रथमान्तपदजन्यबोधविषयस्योपसर्जनसंज्ञा भवतु, तस्य च पूर्वं प्रयोगो भवतु—इति सूत्रार्थः ।

अत्र सूत्रे जरतीग्रहणेन 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषा ज्ञाप्यते, तेन युवादिशब्दैः स्त्रीत्वविशिष्टबोधकस्यापि युवत्यादेर्ग्रहणं भवति। अतश्च युवा चासौ खलतिश्च 'युवखलतिः' इतिवद् युवतिश्चासौ खलती च 'युवखलती' इत्यपि प्रयोगो भवति, तत्र विशेषणं विशेष्येणेत्यनेन समासे तु द्वयोः पर्यायेण पूर्वनिपाते प्राप्ते सत्येतत्सूत्रेण समासे तु प्रथमानिर्दिष्टतया युवन्शब्दस्यैव पूर्वनिपातो भवति, न तु खलत्यादीनाम्। 'युवजरती' इत्यत्र तु युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात् सामानाधिकरण्यं बोध्यम्, न तु जरत्यां युवतिधर्मारोपेण। अयमाशयः—यदि युवत्यां जरतीधर्मारोपस्तदा जरतीशब्दस्य विशेषणताप्रयोजकत्वम्, युवतिशब्दस्य विशेष्यताप्रयोजकता, अस्यां स्थितौ जरतीशब्दस्य पूर्वनिपातः प्राप्तः; किन्त्वेतेन सूत्रेण विशेषवाचकस्य युवतिशब्दस्य प्रथमानिर्दिष्टत्वेनोपसर्जनत्वात् पूर्वनिपातो भवति।

जरत्यां युवतिधर्मारोपे तु युवतिशब्दस्यारोपितप्रवृत्तिनिमित्तकतया विशेषणतासमर्पकता स्यात्, ततश्च तस्य पूर्वनिपातो विशेषणं विशेष्येणेत्येव सिद्ध एवेति विशेष्यस्य पूर्वनिपातविधायकत्वमेवास्यापि सूत्रस्य, न तु नियामकत्वम्।

यदीदं सूत्रं न स्यात् तदा 'युवजरती' इत्युदाहरणस्य स्थाने विशेषणसमासे 'जरद्युवतिः' इति स्यात्। जरत्यां युवतिधर्मारोपे सति 'युवजरती' स्यात्, अस्मिन् सूत्रे सति तु द्वयोरप्यवस्थयोः 'युवजरती' इति प्रयोगा भविष्यति, प्रकरणानुरोधेनार्थस्य बोधः करणीयः।

'पोटायुवतिस्तोक....'[1] इत्यस्यापि पूर्वनिपातविधायकतैव, यतश्चात्र जातिवाचकस्य प्रथमानिर्दिष्टतयोपसर्जनत्वेन पूर्वनिपातो भवति, तस्य च पोटाद्यपेक्षया प्राधान्यमेव, जातिवाचकत्वात्। एवं च विशेष्यस्य पूर्वनिपातः क्रियत एतत्सूत्रेण।

एवमेव 'कतरकतमौ जातिपरिप्रश्ने'[2], 'वृन्दारकनागकुञ्जरैः पूज्यमानम्'[3], 'किं क्षेपे'[4] 'वर्णो वर्णेन'[5], 'कुमारश्रमणादिभिः'[6] 'कृत्यतुल्याख्या अजात्या'[7] इत्यादि-सूत्र-विषयेऽपि यथायोग्यं नियामकत्वव्यवस्था ज्ञातव्या।

## [अमैवाऽव्ययेन—अष्टा० २।२।५०]

अत्र 'नित्यं क्रीडाजीविकयोः'[8] इत्यतो नित्यमित्यनुवर्तते। 'उपपदमतिङ्'[9] इत्यत उपपदमिति चानुवर्तते। एवं च—अमैव तुल्यविधानं यदुपपदम्, तदेवाव्ययेन समर्थेन सह नित्यं समस्यत इति सूत्रार्थः सम्पन्नः। उपपदमतिङिति नित्यसमासे

१. अष्टा० २।१।६५; २. तत्रैव—२।१।६३; ३. तत्रैव—२।१।६२।
४. तत्रैव—२।१।६४; ५. तत्रैव—२।१।६९; ६. तत्रैव—२।१।७०।
७. तत्रैव—२।१।६८; ८. तत्रैव—२।२।१७; ९. तत्रैव—२।२।१९।

सिद्धे नियमार्थमिदम्। अदसोयमुद्देश्यताऽवच्छेदकम्—अव्ययप्रतियोगिकसाहित्यविशिष्टम् अमैव तुल्यविधानं यदुपपदम्, तद्गतमुपपदत्वम्। तद्व्यापकं च रूपम्—अव्ययप्रतियोगिक साहित्यविशिष्टोपपदत्वम्। उपपदमतिङितिसूत्रीयमुद्देश्यताऽवच्छेदकम्—समर्थप्रतियोगिकसाहित्यविशिष्टमुपपदत्वम्, तद्व्याप्यं च रूपम्—अव्ययप्रतियोगिकसाहित्यविशिष्टोपपदत्वम्। तद्रूपाऽवच्छिन्नातिरिक्तत्वेन समर्थप्रतियोगिकसाहित्यविशिष्टोपपदत्वाऽवच्छिन्नेऽव्ययप्रतियोगिकसाहित्यविशिष्टोपपदत्वावच्छिन्नस्य नित्यतत्पुरुषसमासश्चेदव्ययप्रतियोगिकसाहित्यविशिष्टममैव तुल्यविधानं यदुपपदम्, तद्गतोपपदत्वावच्छिन्नस्यैव। तेन 'स्वादुङ्कारं भुङ्क्ते' इत्यत्र भवति नित्यसमासः। इह च न भवति—'कालः समयो वेला वा भोक्तुम्' इत्यादौ। अमैवेति पदसमूहस्य फलम्—अग्रे भोजमित्यादौ समासाभावः, अमा चान्येन च तुल्यविधानमेतत्। अत्र तत्त्वबोधिनी—यस्मिन्नुपपदे येन वाक्येनामैव विहितस्तदेवोपपदमव्ययेन सह समस्यते। नियमबललभ्योऽयमेवकारो न तु सूत्रस्थः। स्वादुङ्कारमिति स्वादुमि णमुल्, अव्ययेनेति किम्—कुम्भकारः। असति हि अव्ययग्रहणेऽमैव यत् तुल्यविधानं तदेव केनचित् समर्थेन सह समस्यते। तथा सति स्वादुङ्कारमित्यत्रैव समासः स्यान्न तु कुम्भकार इत्यत्र। अत्र पूर्वसूत्रवैयर्थ्यभीत्याऽव्ययविषयकनियम इति चेत्, अमन्तविषयक एव किं न स्यात्, अमन्तेन यः समासः, सोऽमैव तुल्यविधानस्येति। तथा चाग्रे भोजम् इत्यत्र समासो मा भूत्, अग्रे भुक्त्वा, कालो भोक्तुमित्यादौ तु स्यादेवेति भावः।

तदेवेति किम्—कालो भोक्तुम्, समयो भोक्तुम्। अमैवेत्येवकारेणाऽमा चान्येन च तुल्यविधानस्योपपदस्य समासवारणेऽपि तुमुना तुल्यविधानस्य स्यादेवातस्तन्निवारणाय तदेवेति गृहीतम्।

अयमाशयः—अमिति खमुञ्णमुलोः सामान्यग्रहणम्, तेन चोरङ्कारमित्यादिसिद्धिः। येनाऽमैव विधीयते, तेन यस्योपपदसंज्ञा भवति, तदुपपदमव्ययेन सह समस्यते, नान्येन तुल्यविधानमित्यर्थः। संज्ञायास्तुल्यविधानत्वमाश्रित्य तत्संज्ञकस्य तुल्यविधानत्वमुक्तम्।

## [अशाला च—अष्टा० २।४।२४]

संघातार्था या सभा तदन्तस्तत्पुरुषो नपुंसके स्यात्। स्त्रीसभम्, स्त्रीसंघात इत्यर्थः। अशाला किम्—'धर्मसभा', 'धर्मशाला' इत्यर्थः।

अयमाशयः—'सभाराजाऽमनुष्यपूर्वा' (अष्टा० २।४।२३) इति पूर्वसूत्रे योगविभागः कर्तव्यः। 'सभा' इत्येको योगः,'राजाऽमनुष्यपूर्वा' इति द्वितीयो योगः। एवं च सभाशब्दान्तस्तत्पुरुषो नपुंसके स्यादिति प्रथमयोगस्यार्थः। ततश्च—राजपर्यायपूर्वोऽमनुष्यशब्दपूर्वश्च सभाशब्दान्तस्तत्पुरुषो नपुंसके भवतु—इति द्वितीयस्यार्थः। प्रथमेनैव सिद्धेऽयं

द्वितीयो योगो व्यर्थीभूय प्रथमस्य क्वाचित्कत्वं ज्ञापयति । तेन स्त्रीसभमिति सिद्धयत्येव, अशाला चेति सूत्रं किमर्थमिति शङ्कायामुच्यते—विनिगमनाविरहेण 'धर्मसभा' इत्यत्र नपुंसकवृत्तित्वं स्यात्, स्त्रीसभमित्यत्र च न स्यात्—इत्यपि सम्भाव्येतेति कृत्वा 'अशाला च' इति सूत्रमावश्यकम् । यद्यपीदं नियामकं नास्ति, तथाप्येतत्सार्थक्योपपादन उक्तस्य द्वितीययोगस्य व्यर्थतया नियमसादृश्यगर्भा कथाऽत्र समागतेति कृत्वा नियमशास्त्रकोटावदसीया चर्चा कृता । एषा चर्चा परमगुरुवर्यश्रोत्रिपाठिचरणानां सम्प्रदायतः प्राप्तेति महनीयं महत्त्वमस्याः ।

## [द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्—अष्टा० २।४।२]

एषां समाहार एव स्यादित्यर्थः । स च समाहारः 'चार्थे द्वन्द्वः'[1] इत्यनेनैव सिद्धः । अतश्च सिद्धे सत्यस्य नियामकता मन्तव्या । एवं च—प्राण्यङ्ग-तूर्याङ्ग-सेनाङ्गवाचिनां द्वन्द्वसमासः साधुत्वमनुभवेच्चेत्, समाहारद्वन्द्व एव, न त्वितरेतरयोगः । अतश्च पाक्षिकप्राप्तावयं नियमो न तु परिसंख्यात्मकः । 'चार्थे द्वन्द्वः' इत्यनेन समाहारस्येतरेतरयोगस्य च सिद्धत्वात् । एवं च—पाणिपादम्, मार्दङ्गिकपाणविकम्, रथिकाश्वारोहमित्यादीनि चोदाहरणानि समाहारद्वन्द्वेनैव साधूनि भवन्ति ।

न च पाणिपादमित्यादो 'जातिरप्राणिनाम्'[2] इत्येव सिद्धौ' द्वन्द्वश्च प्राणि…' इति सूत्रे प्राणिग्रहणं किमर्थमिति चेत्, उच्यते—जातिप्राधान्यस्याविवक्षायां द्रव्यप्राधान्यविवक्षायां प्राणिग्रहणस्य चारितार्थ्यमवगम्यतामित्येक आचार्या वदन्ति । 'पाणिपणवौ' इति व्यतिकरे मा भूदयं नियम इत्येवं बोधयितुं तदग्रहणमित्यन्य आचार्याः ।

एवमेव—'अनुवादे चरणानाम्'[3] 'अध्वर्युक्रतुरनपुंसकम्'[4] अध्ययनतोऽविप्रकृष्टाख्यानाम्'[5] जातिरप्राणिनाम्'[6] विशिष्टलिङ्गो नदीदेशोऽग्रामाः'[7] 'क्षुद्रजन्तवः'[8] 'येषां च विरोधः शाश्वतिकः'[9] 'शूद्राणामनिरवसितानाम्'[10] 'गवाश्वप्रभृतीनि च'[11] इत्येतानि सूत्राणि पूर्वदेव पाक्षिकप्राप्तिनिमित्तकनियामकानि द्रष्टव्यानि । 'विभाषा वृक्ष….'[12] इति सूत्रं तु विकल्पेन समाहारद्वन्द्वविधायकम् । तत्र येऽप्राणिनस्तेषां जातिरप्राणिनामिति नित्ये प्राप्ते समाहारविकल्पार्थं ग्रहणं कृतमस्ति । पशुग्रहणं हस्त्यश्वादिषु सेनाङ्गत्वाद 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' इति नित्यं समाहारे प्राप्ते मृगाणां मृगैरेव, शकुनीनाम् शकुनिभिरेवोभयविधो द्वन्द्वः,

---

१. अष्टा० २।२।२९;　२. तत्रैव—२।४।६;　३. तत्रैव—२।४।३ ।
४. तत्रैव—२।४।४;　५. तत्रैव—२।४।५;　६. तत्रैव—२।४।६ ।
७. तत्रैव—२।४।७;　८. तत्रैव—२।४।८;　९. तत्रैव—२।४।९ ।
१०. तत्रैव—२।४।१०;　११. तत्रैव—२।४।११;　१२. तत्रैव—२।४।१२ ।

अन्यैस्तु सहेतरेतरयोग एवेति नियमार्थं मृगशकुनिग्रहणम्। एवं[1] पूर्वापराधरोत्तरमित्यपि। अश्ववडवग्रहणं तु पक्षे नपुंसकत्वार्थम्, अन्यथा परत्वात् 'पूर्ववदश्ववडवौ'[2] इति स्यात्।

## [रोः सुपि—अष्टा० ८।३।१६]

अत्र "खरवसानयोर्विसर्जनीयः"[3] इत्यतः खरिति विसर्जनीय इति च पदद्वयमनुवर्तते।

सुप्पदं चात्र न प्रत्याहारपदमपि तु खरा विशेषितत्वात् खरादौ सुपि इत्यर्थेन सप्तमीबहुवचनमेव। अन्यथा प्रत्याहारपक्षे पयोभ्यामित्यादौ विध्यर्थमेतत् स्यात्। एवं च खरादौ सुपि (सप्तमीबहुवचने सुपि) रोर्विसर्गः स्यादित्यर्थः सम्पद्यते। तत्र च 'खरवसानयोर्विसर्जनीयः' इत्यनेनैव विसर्गस्य सिद्धौ सत्यामिदं सूत्रं नियमार्थम्। अस्य चोद्देश्यताऽवच्छेदकं रूपम्—सप्तमीवचनाव्यवहितपूर्वत्वविशिष्टं रुत्वम्=उकारेत्संज्ञकरत्वम्, तद्व्यापकं च रूपम्—सप्तमीवचनाव्यवहितपूर्वत्वविशिष्टं रत्वम्। खरवसानयोरित्यस्योद्देश्यताऽवच्छेदकं रूपम्- खरवसानाव्यवहितपूर्वत्वविशिष्टं रत्वम्। तद्व्याप्यं च रूपम्—सप्तमीबहुवचनाव्यवहितपूर्वत्वविशिष्टं रत्वम्, एतद्रूपाऽवच्छिन्नातिरिक्तत्वेन खरवसानयोरित्यस्योद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचेन सुबव्यवहितपूर्वत्वविशिष्टस्योकारेत्संज्ञकरत्वावच्छिन्नस्यैवेत्यर्थः सम्पद्यते। तेन 'चतुर्षु', 'गीर्षु', 'पूर्षु' इत्यादौ न विसर्गः।

## [श्लिष आलिङ्गने—अष्टा० ३।१।४६]

अत्र योगो विभज्यते। श्लिष इत्येको योगः—श्लिष्-धातोः परस्यानिटश्च्लेः क्सः स्यादित्यर्थः। अत्र 'च्लेः सिच्'[4] इत्यतः 'च्लेः' इत्यनुवर्तते। 'शल इगुपधादनिटः क्सः'[5] इत्यतः 'अनिटः क्सः' इति च पदद्वयमनुवर्तते। एवं सत्युक्तो ऽर्थः सम्पन्नः। ततश्च द्वितीयो योगः—'आलिङ्गने' इति। तत्र 'श्लिषः' इति पूर्वसूत्रम्, च्लेरिति पदम्, अनिट क्सः इति च पदद्वयमनुवर्तते। अतश्चार्थः सम्पद्यते—आलिङ्गनार्थकश्लिष्धातोः परस्यानिटश्च्लेः क्सादेशः स्यादिति।

अत्र 'श्लिष्' इत्यनेन प्रथमेन योगेनैवेष्टसिद्धौ 'आलिङ्गने' इति द्वितीयो योगो व्यर्थ इति कृत्वा नियमार्थता तस्य भवति। तत्र तदीयोद्देश्यताऽवच्छेदकं रूपमालिङ्गनार्थकश्लिषधात्वव्यवहितपरत्वविशिष्टानिट्च्लिप्रत्ययत्वम्। तद्व्यापकं च रूपम्—श्लिषधात्वव्यवहितपरत्वविशिष्टानिट्च्लिप्रत्ययत्वम्। योगविभागसामर्थ्याद्

---

१. अष्टा० २।२।१; २. तत्रैव—२।४।२७; ३. तत्रैव—८।३।१५।
४. तत्रैव—३।१।४; ५. तत्रैव—३।१।४५।

व्यवहितस्य 'शल इगुपधाद्' इत्यस्याप्ययं नियमः। अन्यथा 'श्लिष आलिङ्गने' इत्येकमेव सूत्रं विदध्यात्।

एवं च—शल इगुपधादित्यस्य श्लिष् इत्यस्य चोद्देश्यताऽवच्छेदकं रूपम्—इगुपधशलन्तधात्वव्यवहितपरत्वविशिष्टानिट्च्लिप्रत्ययत्वश्लिष्धात्वव्यवहितपरत्वविशिष्टानिट्च्लिप्रत्ययत्वेत्येतदन्यतरत्। अथवा—'इगुपधकशलन्तधातु-श्लिष्धातु' इत्येतदन्यतराव्यवहितपरत्वविशिष्टानिट्च्लिप्रत्ययत्वम्, तद्व्याप्यं च रूपम्—श्लिष्धात्ववधिकाव्यवहितपरत्वविशिष्टानिट्च्लिप्रत्ययत्वम्। इदमेव च 'आलिङ्गने' इत्यस्योद्देश्यताऽवच्छेदकव्यापकमिति कृत्वा तावदिदं मध्यपातिरूपम्। एतद्रूपाऽवच्छिन्नातिरिक्तत्वेनोक्तसूत्रद्वयीयोद्देश्यताऽवच्छेदकाऽवच्छिन्ने सङ्कोचे कृते सति—श्लिष्धात्वव्यवहितपरत्वविशिष्टस्याऽनिटश्च्लेः क्सादेशश्चेत्, आलिङ्गनार्थकश्लिष्धातुविहितानिट्च्लिप्रत्ययस्यैवेति नियमस्वरूपं सम्पद्यते। इदमेव स्वरूपं फलत उक्तम्—'श्लिषः परस्यानिटश्च्लेः क्सः स्यात् तर्हि आलिङ्गन एव, इति 'आश्लिक्षत् कन्यां देवदत्तः'। अनालिङ्गने तु 'समाश्लिषज्जतुकाष्ठम्'। आलिङ्गनं तु प्राणिकर्तृकमेव भवति, अत्र पुषादित्वादङादेशश्च्लेः। एतदुदाहरणे तु पुषाद्यङोऽपवादत्वम्। पुरस्तादपवादन्यायेन पुषाद्यङ एवापवादत्वम्, न तु 'चिण्भावकर्मणोः'[1] इति चिणः।

यद्यनेन 'श्लिष्' इत्यस्यैव नियमनं स्यात् तदा शल इगुपधादित्यस्य नियमनाभावे तेन क्सः स्यादेवानालिङ्गनेऽपि। एवं सति योगविभागो व्यर्थः स्यात्। आलिङ्गनानालिङ्गनोभयोरपि क्सस्य प्रसङ्गवत्। नियमफलं तु—कर्मण्यनालिङ्गने 'अश्लेषि' इत्यत्र णिजेकवचने। अन्यत्र सिच्—अश्लिक्षाताम्, अश्लिक्षत।

## [तपस्तपः कर्मकस्यैव—अष्टा० ३।१।८८]

अत्रास्ति योगद्वयम्, 'तपः' इति प्रथमो योगः, तत्र 'कर्मवत् कर्मणा तुल्यक्रियः' (अष्टा० ३।१।८७) इति सम्पूर्णं सूत्रमनुवर्तते। एवं च तप्धातोः कर्मस्थक्रियया तुल्यक्रियः कर्ता कर्मवत् स्यादित्यर्थः सम्पद्यते। कर्मवत् कर्मणा-इत्यनेनैव कर्मवद्भावे सिद्ध इदं नियामकम्। अदसीयोद्देश्यताऽवच्छेदको धर्मः—तप्धातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम्, तद्व्यापको धर्मः—सकर्मकत्वविशिष्टधातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम्। 'कर्मवत् कर्मणा' इति च नियमसूत्रमस्ति। तस्यार्थः—कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवत् स्यादिति। तदीयोद्देश्यताऽवच्छेदको धर्मः कर्मस्थक्रियातुल्यक्रियकर्तृत्वम्। तद्व्याप्यो धर्मः—सकर्मकत्वविशिष्टधातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम्। यतो हि कर्मवद्भावविषये द्विविधाः सकर्मका व्यवहृताः सन्ति। सकर्मकत्वविशिष्टाः, तदुपलक्षिताश्च कर्मणः कर्तृत्वविवक्षायां सकर्मका अकर्मका भवन्ति। यथा 'चैत्रस्तण्डुलं पचति' इत्यत्र चैत्रस्य

1. अष्टा० ३।१।६६।

व्यापारो यदा न विवक्ष्यते; अपि तु तण्डुलादिकर्मण एव कर्तृत्वविवक्षा क्रियते, तदा 'तण्डुलः स्वयमेव पच्यते' इति प्रयोगो भवति, अस्यामवस्थायां पच्धातुरकर्मकः सम्पन्नः, स एव सकर्मकत्वोपलक्षित इति व्यवह्रियते ।

केचन धातव ईदृशाः सन्ति, येषां कर्मणः कर्तृत्वविवक्षायामप्यन्येन कर्मणा सकर्मकत्वं तिष्ठत्येव । यथा 'अजां ग्रामं नयति चैत्रः' इत्यत्र 'चैत्रः अजां ग्रामं किं नयति' अजा स्वयमेव ग्रामं नयति, स्नेहातिशयादजा ग्रामेणात्यन्तं सम्बद्धाऽस्ति, अतिशयितस्नेहेन ग्रामं परिचिनोति, अतस्तत्र झटिति गन्तुमुत्सहत इति । ग्रामं नीयमानायामजायां यादृशः संयोगानुकूलो व्यापारः, स तु न चैत्रव्यापारजन्यः; अपि तु स्वाभाविक इति कृत्वा कर्मस्था क्रिया, यस्यामजायामीदृशो व्यापारो नास्ति, तत्र न भवत्ययं प्रयोगः ।

एवं चेमे नीप्रभृतिधातवः कर्तुः कर्मवद्भावे कृतेऽप्यन्येन ग्रामादिकर्मणा सकर्मकास्तिष्ठन्त्येवेति कृत्वा तावदिमे सकर्मकत्वविशिष्टा उच्यन्ते, पच्यादयस्तु सकर्मकत्वोपलक्षिता इति द्विविधा ज्ञेयाः । वस्तुतस्तु—क्रियाकृतविशेषोपलम्भनाद् उद्देश्यताऽपि कर्मवद्भावे प्रयोजिका । एवं च कर्मवृत्तिक्रिया यदा कर्तुरुद्दिष्टा, तदा कर्मस्था क्रिया, कर्तृवृत्तिक्रिया यदोद्दिष्टा, तदा कर्तृस्था क्रिया । अत एव 'हस्तिपका हस्तिनमारोहन्ति, तानारोहतो हस्तिपकान् महामात्र आरोहयति' इत्यत्र ण्यन्तावस्थायामणौ कर्तुर्णौ कर्मत्वं दृश्यते, अधिकं तत्त्वबोधिन्यां द्रष्टव्यम् । तत्र कर्मणः कर्तृत्वविवक्षायामपि द्विकर्मकाणां सकर्मकत्वं स्पष्टमुक्तमस्ति । एवं च कर्मणः कर्तृत्वविवक्षायां सकर्मका अप्यकर्मका भवन्ति—य एककर्मका धातवः सन्ति, द्विकर्मका नीप्रभृतयस्त्वेकस्य कर्मणः कर्तृत्वे विवक्षितेऽप्यपरकर्मणा सकर्मका एव । अतश्च कर्मवद्भावविषये द्विविधाः सकर्मकाः, सकर्मकत्वोपलक्षिताः सकर्मकत्वविशिष्टाश्चेत्यायातम् ।

एवं च तप इति विभक्तसूत्रीयोद्देश्यताऽवच्छेदकव्यापकं रूपम्—सकर्मकत्वविशिष्टधातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम् । एतदेव नियम्यसूत्रस्य 'कर्मवत् कर्मणा' इत्यस्योद्देश्यताऽवच्छेदकव्याप्यं रूपम् । यतश्च द्विविधा अपि सकर्मकास्तत्रोद्देश्यकोटौ प्रविष्टाः सन्ति ।

अतश्च सकर्मकत्वविशिष्टधातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वाऽवच्छिन्नस्य कर्मवद्भावश्चेत्, तप्धातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वाऽवच्छिन्नस्यैवेति नियमाकारः सम्पद्यते । अतश्च सकर्मकाणां कर्मवद्भावश्चेत्, तप्धातोरेवेत्यपि संक्षिप्तं नियमस्वरूपं प्रतिफलितं भवति, तेन—'सकर्मकाणां प्रतिषेधो वाच्यः' इति वार्त्तिकस्य गतार्थता भवति । द्वितीयो योगः—'तपः कर्मकस्यैव' । तस्यार्थः -'तपः' इत्यस्य, 'कर्मवत् कर्मणा' इत्यस्य चानुवृत्त्या—तप्धातोः कर्मस्थक्रियातुल्यक्रियः कर्ता कर्मवद् भवति, तर्हि तपः कर्मकस्यैवेति । अदसीयोद्देश्यताऽवच्छेदकं रूपम्—तपःकर्मकतप्धातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम् । तद्व्यापकं

रूपम्—तप्धातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम् । तप इति योगस्योद्देश्यताऽवच्छेदकं रूपमुक्तमेव, तस्य व्याप्यमपीदमेव—तप्धातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वम् ; परन्तु यद्येतद्रूपावच्छिन्नातिरिक्तत्वेन 'तपः' इत्येतदीयोद्देश्यताऽवच्छेदकाऽवच्छिन्न एव सङ्कोचः क्रियते, तदास्य योगविभागस्य वैयर्थ्यमेव स्यात्, एकरूपेण विधिसूत्रत्वेनैव सिद्धत्वात् । अतश्चानेन द्वितोयेन योगेन 'कर्मवत् कर्मणा' इत्यस्यापि नियमनं क्रियते ।

एवं च 'तपः' इत्यस्य, 'कर्मवत् कर्मणा' इत्यस्य चान्यतरत्वेनोद्देश्यताऽवच्छेदकमादाय तद्व्याप्यत्वेन तप्धातुसम्बन्धिकर्मस्थक्रियातुल्यक्रियकर्तृवृत्तिकर्तृत्वमेव गृहीत्वा तद्रूपाऽवच्छिन्नातिरिक्तत्वेन तादृशाऽन्यतरावच्छिन्ने सङ्कोचेन व्यवस्था कर्तव्या । अतश्च—'तपः' इत्यनेन, तद्भावे कर्मवदित्यनेन च न कर्मवद्भावो द्वयोरपि नियमनात् । एवं च 'सुवर्णं सुवर्णकार उत्तपति' इत्यत्र कर्मवद्भावो न भवतीति व्यावृत्तिः फलति, वृत्त्यनुसारिणस्तु सूत्रस्यास्य विधित्वमेवाद्रियन्ते, एवकारस्य दृष्टफलकत्वाभावमेव मन्यन्ते ।

तेषामयमाशयः—यदुपवासादितपस्तापसं तपति, दुःखाकरोति । एवं च तापसस्य कर्मत्वे तपेर्दुःखजननमर्थः, कर्तृत्वे तु तापसस्तपस्तप्यते—इत्यत्र 'अर्जयति' इत्यर्थः । एवं च दुःखजननार्जनयोः क्रिययोर्भेदात् कर्मवद्भावस्याप्राप्तौ विधित्वमस्य सूत्रस्येति ; किन्तु नेदं सम्यक्तरम्, एवशब्दं गृह्णता सूत्रकृताऽस्य नियामकत्वबोधनात् । तथा हि—तापसस्य कर्मत्वाऽवस्थायां यथा दुःखजननरूपो व्यापारस्तप्धातोरर्थः, दुःखभवनरूपं च तत्फलत्वेनार्थः, तथैव 'तापसस्तपः तप्यते' इत्यत्र तापसस्य कर्तृत्वेऽपि तस्यार्जनाख्ये व्यापारे दुःखीभवनरूपं फलं बुध्यत एव । दुःखीभवनमन्तरा तपसामर्जनस्याशक्यत्वात् । एवं च यथा 'तण्डुलः पच्यते' इत्यत्र विक्लित्तिरूपफलात्मककर्मस्थक्रियया तण्डुलरूपकर्तृविक्लित्तिरूपा क्रिया तुल्या तामादाय कर्मवद्भावः, तथैव प्रकृतेर्दुःखीभवनरूपफलात्मकक्रियया तुल्यत्वमादाय कर्मवद् इत्यनेन कर्मवद्भावे सिद्धेऽस्य नियमार्थता निराबाधा ।

## [ आतः—अष्टा० ३।४।११० ]

अत्र सूत्रे 'झेर्जुस्'[1] इति सूत्रम्, 'सिजभ्यस्तविदिभ्यश्च'[2] इत्यस्यैकदेशः सिजिति चानुवर्तते । तेन सिच आकाराच्च परस्य झेर्जुस् स्यादित्यर्थ आयाति । तत्र सिचः परत्वं प्रत्ययलक्षणेन सम्भवति सिचो लोपे सति । आकारात् परत्वं तु साक्षाच्छ्रुत्या, एवं च—सिज्लुकि आदन्तादेव झेर्जुस् भवति—इति फलितोऽर्थो भवति । तत्रापि 'आतः' इति वर्णग्रहणे झेरिति प्रत्ययेन तदाद्युपस्थितौ च तत् स्याद् इत्यनेन विशेषणात् तदन्तविधिनाऽऽदन्तादित्यर्थो जायते । एवं चाभूवन्नित्यत्र 'गातिस्था०'[3] इति सिचो लुकि सति—सिज्लुकि आदन्ताद् झेर्जुस् स्यादित्यर्थः सम्पद्यते ।

---

१. अष्टा० ३।४।१०८; २. तत्रैव—३।४।१०९ ; ३. तत्रैव—२।४।७७ ।

तत्र सिजभ्यस्तविदिभ्यश्च इत्येव सिद्धे नियमार्थमिदम् । अस्योद्देश्यताऽवच्छेदको धर्मः—अतिदिश्यमानसिच्त्ववदवधिकाव्यवहितपरत्वसमानाधिकरणादन्ततदाद्यव्यवहितपरत्वविशिष्टझिप्रत्ययत्वम् । तद्व्यापको धर्मः—अतिदिश्यमानसिच्त्ववदवधिकाव्यवहितपरत्वविशिष्टझिप्रत्ययत्वम् । वैयर्थ्यप्रयोजकं नियम्यशास्त्रमस्ति सिजभ्यस्तविदिभ्यश्चेति । सिजंशे तदीयोद्देश्यताऽवच्छेदको धर्मः—श्रौतातिदिश्यमानान्यतरसिच्त्ववदवधिकाव्यवहितपरत्वविशिष्टङित्लकारसम्बन्धिझिप्रत्ययत्वम् । सिजभ्यस्तेति सूत्रे सन्ति त्रयो भागाः, तत्र प्रथमस्य सिज्रूपभागस्यैवात्र वैयर्थ्यप्रयोजकता । तद्व्याप्यो धर्मः—अतिदिश्यमानसिच्त्ववदवधिकाव्यवहितपरत्वविशिष्टङित्लकारसम्बन्धिझिप्रत्ययत्वम् ।

तद्धर्माऽवच्छिन्नातिरिक्तत्वेन सिजभ्यस्तेति सूत्रीयसिजंशीयोद्देश्यताऽवच्छेदकधर्माऽवच्छिन्ने सङ्कोचेन अतिदिश्यमानसिच्त्ववदवधिकाव्यवहितपरत्वविशिष्टतादृशझिप्रत्ययत्वावच्छिन्नस्य जुसादेशश्चेत्, अतिदिश्यमानसिच्त्ववदवधिकाव्यवहितपरत्वविशिष्टादन्ततदादित्वावच्छिन्नाव्यवहितपरत्वविशिष्टतादृशझिप्रत्ययत्वाऽवच्छिन्नस्य झिप्रत्ययस्यैव—इति नियमाकारः सम्पन्नः । कौमुद्यां मूले—अयमेव नियमाकारः सिज्लुकि आदन्तादेव झेर्जुस् स्यादित्येवंरूपेण लिखितोऽस्ति ।

## [ एको गोत्रे—अष्टा० ४।१।९३ ]

अत्र जातिपरतया गोत्रशब्द एकवचनान्तः । एकशब्दः संख्यापरः । 'तस्यापत्यम्'[1] इत्यतोऽपत्यमित्यनुवर्तते । एवं च—गोत्रे बुबोधयिषितेऽपत्यबोधकप्रत्यय एकः स्यादिति सूत्रार्थः सम्पद्यते ।

यदि त्वनन्तरापत्यप्रत्ययान्तादपि स्यात् तर्हि 'एकः स्यात्' इत्युक्तिर्न सङ्गच्छेत, अनेकस्यापि प्रसञ्जनात् । अत एकस्यैवाऽनेकस्यापि प्राप्तौ सूत्रमिदं नियमार्थम्, एक एव स्यान्न त्वनेक इति । नियमश्चायं पाक्षिकप्राप्तौ सत्याम्, न तु परिसंख्यारूपः । विधेयांश एवकारस्य सन्निपातात् । अनेकप्रत्ययवारणप्रकारमेव दर्शयितुमुपक्रमते—

गोत्रे स्वैकोनसंख्यानां प्रत्ययानां परम्परा ।
यद्वा स्वद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिः प्रसज्यते ॥
अपत्यं पितुरेव स्यात् ततः प्राचामपीति च ।
मतभेदेन वद्धान्यै सूत्रमेतत् तथोत्तरम् ॥ इति ।

अयमाशयः—स्वं गोत्रं तदपेक्षया एका ऊना संख्या येषां तेषां प्रत्ययानां परम्परा, अर्थात् तृतीये द्वयोः, चतुर्थे त्रयाणाम्, पञ्चमे तु च–इत्यादिप्रत्ययानां परम्परा प्रसज्येत । तथा हि—उपगोस्तृतीये अणिञोः परम्परा, चतुर्थे अणिञ्फकाम्, पञ्चमे तु अणिञ्फगिञाम्, यद्यप्यत्र 'यस्येति च'[2] इति लोपेनाणादेरसत्वाद् 'अणिञादीनां

---

१. अष्टा० ४।१।९२ ;    २. तत्रैव—६।४।१४८ ।

परम्परा' इत्युक्तिर्न सङ्गच्छते, तथाप्यणन्तादिञ् उत्पद्यते, इञन्तात् फगित्युत्पत्तिमात्राभिप्रायेण प्रत्ययपरम्परोक्तिर्बोध्या।

स्वद्व्यूनसंख्येभ्य इति—स्वं गोत्रं तदपेक्षया द्वे ऊने संख्ये येषां तेभ्यः प्रातिपदिकेभ्यस्तृतीय एकस्मादनिष्टोत्पत्तिः, चतुर्थे द्वाभ्यां पञ्चमे त्रिभ्य इत्यादीत्यर्थः।

अत्र स्वैकोनसंख्यानामित्यत्र स्वपदं गोत्रार्थकप्रत्ययपरम्, अतः स्वपदघटितबहुव्रीहौ स्वपदेन यद् गृह्यते, तदेवान्यपदार्थोऽपि भवति—इति नियमोऽपि सङ्गच्छते। स्वद्व्यूनसंख्येभ्य इत्यत्र स्वपदेन गोत्रप्रत्ययान्तः प्रकृतिभूतः शब्दः (प्रातिपदिकम्) गृह्यते। स एव बहुव्रीहावन्यपदार्थतया वर्तते। गोत्रपदेन द्विविधमपत्यं गृह्यते, मतभेदात्। प्रथमे मते पितुरेवापत्यमिति सिद्धान्तः। तत्र प्रमाणं तन्मत उपस्थाप्यते—न पतत्यनेनेति व्युत्पत्त्याऽपत्यशब्दः सिद्ध्यति। एवं च पिण्डदानतर्पणादिना पुत्रः पितरं तर्पयति—इयं व्युत्पत्तिः प्रथमे पक्षे प्रमाणम्। अथ च—

आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी।
आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे॥

इत्यमरकोषोक्तिरपि पितुरेवापत्यमिति प्रथमे पक्षे प्रमाणम्। अथ च—देवदत्तस्य पिता स्वकीयं पौत्रं (देवदत्तस्य पुत्रम्) स्वाङ्के समादाय लालयति, तस्मिन्नवसरे कश्चन जिज्ञासते—कस्येदमपत्यमिति? तदा तेनोत्तरं दीयते—देवदत्तस्येति। अनेनाप्युत्तरदानेन प्रतीयते—यत् पितुरेवापत्यमिति न तु पितामहादेरपि, अन्यथा पितामहेन ममापत्यमिति वक्तुं शक्येत। एवं चैतानि त्रीणि प्रमाणान्यस्मिन् मते। पितामहादेरप्यपत्यमिति द्वितीयमते तु—'अपत्यं पौत्रप्रभृति गोत्रम्'[1] इति पाणिनिसूत्रमेव मुख्यं प्रमाणम्। या च न पतन्त्यनेनेति योगव्युत्पत्तिर्दर्शिता, सा त्वत्र द्वितीयपक्षेऽप्यनुकूलैव। पितामहादिभ्योऽपि पौत्रादिभिः पिण्डदानादिविधानात्। एतच्च श्रुतिस्मृत्यादिषु प्रसिद्धमेव। 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी' इत्यमरोक्तिर्नावधारणपरा, यदात्मज एवापत्यमिति; अपि तु समुच्चयपरा। आत्मजोऽपि अपत्यमिति।

इदमपत्यं कस्येति प्रश्ने पितुर्नामग्रहणमपि न द्वितीयमते बाधकम्। अस्य जनकः क इति जिज्ञासया प्रष्टुस्तथा व्यवहारात्। एवं चायं द्वितीय एव पक्षः प्रामाणिकः। प्रथमस्तु न प्रामाणिकतां भजते। अपत्यं पौत्रप्रभृति गोत्रमिति सूत्रसङ्गत्या अपत्यमिवापत्यमित्यपत्यपदस्य गौणीवृत्तिराश्रयणीया स्यात्। अर्थात् पौत्रादावपत्यत्वारोपः कर्तव्यो भविष्यति, द्वितीयपक्षे तु स्वरसतोऽस्य सूत्रस्यानुगुण्यमस्ति। अस्तु, पक्षेऽपि दोषः सम्भाव्यत इति कृत्वा तद्वान्ये सूत्रमिदं प्रथमपक्षे प्रत्ययमालानिवृत्तये। द्वितीये पक्षे स्वद्व्यूनसंख्येभ्योऽनिष्टोत्पत्तिनिवृत्तय इत्यर्थः।

1. अष्टा० ४।१।१६२।

अयमाशयः—प्रथमे पक्षे उपगोस्तृतीये वाच्य औपगवादिञ् स्यात्। तृतीयस्योपगुं प्रत्यपत्यत्वाभावात्। एवं चासत्यस्मिन् सूत्रेऽत्र पक्ष औपगविरित्यनिष्टमेव स्यात्। इष्टमौपगव इति रूपं न स्यात्। चतुर्थे वाच्ये तु—अजीवज्ज्येष्ठे मृतवंश्य औपगवेः फक् स्यात् जीवज्ज्येष्ठे, जीवद्वंश्ये तु युवसंज्ञायां सत्यां गोत्रसंज्ञैव नास्ति। इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्र एकोनशतं प्रत्यया भविष्यन्ति। ते च सर्वेऽनिष्टा एवेत्यनिष्टप्रत्ययमालाप्राप्तिरस्मिन् पक्षे।

पितामहादीनामप्यपत्यमिति सिद्धान्तपक्षेऽप्युपगोस्तृतीये वाच्ये—उपगोरण्प्रत्ययेऽनिष्टे सिद्धेऽप्यणन्तादिञपि स्यात्। अस्मिन् पक्ष औपगवस्य यदपत्यं तदुपगोरप्यपत्यमिति सिद्धान्तपक्षेऽप्युपगोर्यदा प्रत्ययस्तदा 'औपगवः' इतीष्टं रूपं यद्यपि सिद्ध्यति, तथापि 'औपगविः' इत्यनिष्टं प्राप्नोत्येव। चतुर्थे वाच्ये तु 'यञिञोश्च'[1] इति फक् स्यात्। इत्थं फगिञोः परम्परायां मूलाच्छततमे गोत्रे विवक्षितेऽष्टनवतिः प्रकृतयः प्रत्ययाश्चानिष्टाः सम्भाव्येरन्। पक्षद्वयीयदोषोन्मूलनार्थमेतत् सूत्रं नियमार्थम्। तथोत्तरसूत्रं 'गोत्राद्यून्यस्त्रियाम्'[2] इत्यपि। नियमश्चायं न परिसंख्यारूपः; अपि तु पाक्षिकप्राप्तौ सत्यामयं नियमः, विधेयांशे सङ्कोचकरणात्। एक इत्यंशोऽपत्यप्रत्ययात्मकविधेयस्य विशेषणम्।

नन्वाद्यपक्षे तत्तत्पितृवाचकादेव प्रत्ययो न तु मूलभूतात् स्यादनन्तरापत्ये मुख्यसम्बन्धे चरितार्थस्याणादेर्गौणसम्बन्धेऽपि प्रवृत्तेरन्याय्यत्वात्। तथा चौपगवापत्येनापगार्मुख्यसम्बन्धाभावात् तत्राप्राप्ते विध्यर्थमेवेदं सूत्रमस्तु, न तु नियमार्थमित्यौपगवादपि प्रत्ययो दुर्वार इति चेत्, अत्राहुः—गोत्रे बोधनीये क्रमेणानेकप्रत्ययप्रसङ्ग एक एवापत्यप्रत्ययः स्यादिति सूत्रार्थे कृत औपगवशब्दस्यापत्यप्रत्ययान्तत्वात् पुनरपत्यप्रत्ययस्ततो नोत्पत्तुमर्हति—इत्यगत्या परम्परासम्बन्धाभ्युपगमेन तावदुपगोरेव तदुत्पत्तिः, न त्वौपगवशब्दादिति सिद्ध्यतीष्टम्।

न च प्रथमपक्षे प्रत्ययपरम्परायां प्राप्तायाम्—'एको गोत्रे'[3], इत्यनेनैकः प्रत्ययो विधीयते. तत्रैको नामैकजातीय इत्यर्थकरणान् मूलप्रकृतेर्योऽपत्यप्रत्ययस्तज्जातीय एव गोत्रे बोधनीये तत्तत्पितृवाचकाद् भवत्यणन्तादण्, इञन्तादिञ्, यञन्ताद् यञ् इति। एवं चाणिञोः परम्परायां निवर्तितायां नास्ति कश्चन दोषोऽतश्च विध्यर्थमेवास्त्विदं सूत्रमिति वाच्यम्। फगन्तात् फकि नाडायन इत्यादौ महतोऽनिष्टस्य प्रसङ्गात्।

एवमेव 'गोत्राद्यून्यस्त्रियाम्'[4] इत्युत्तरसूत्रमपि नियामकम्। अन्यथा तदभावे मुख्यपक्षे पञ्चमादौ यून्यपत्ये विवक्षित गोत्रप्रत्ययान्ताद् युवप्रत्ययोत्पत्ताविष्टे सिद्धेऽपि मूलप्रकृत्यनन्तरयुवभ्योऽपि स्यादिति पाक्षिकानिष्टप्राप्तौ नियमार्थमिदम्। अतः सूत्रार्थ उक्तः—यून्यपत्ये गात्रप्रत्ययान्तादेव प्रत्ययः स्यादिति। एवेन मूलप्रकृत्यनन्तरयुवभ्यः प्रत्ययव्यवच्छेदकः। अत्र गोत्रप्रत्ययान्तादित्यस्य गोत्रप्रत्ययान्तप्रकृतिक एवेत्यर्थः। अयमंशो विधेयांशे विशेषणम्।

---

१. अष्टा० ४।१।१०१; २. तत्रैव-४।१।९४; ३. तत्रैव-४।१।९३; ४. तत्रैव-४।१।९४।

## [अनुदात्तङित आत्मनेपदम्—अष्टा० १।३।१२]

अनुदात्तश्च ङश्चेत्यनुदात्तङौ, ताविती यस्य सोऽनुदात्तङित्। द्वन्द्वान्ते श्रूयमाणेच्छब्दस्य प्रत्येकं सम्बन्धेऽनुदात्तेत् ङित् इत्येवं सम्पद्यते। 'उपदेशेऽजनुनासिक इत्'[1] इत्यतः 'उपदेशे' इत्यनुवर्तमाने ङिदंशेनैव सम्बध्यते, न त्वनुदात्तेदित्यंशेनाप्यव्यभिचारात्।

अत्र धातोर्लस्य चाधिकाराभावेऽपि विधेयभूतात्मनेपदेन उभयोरनयोर्लाभ आपेक्षादिना, 'येन विना यदनुपपन्नं तत् तेन आक्षिप्यते' इति नियमात्। एतेन—'भूवादयो धातवः'[2] इत्यतो मण्डूकप्लुत्या धातव इत्यनुवर्त्य पञ्चम्येकवचनान्तेन विपरिणमय्य धातोरित्यस्य लाभो भवितुमर्हतीति केनचिदुक्तम्, तत् परास्तम्, मण्डूकानुवृत्तौ गौरवात्। तया रीत्या धातोरित्यस्य लाभेऽपि लस्येत्यस्यालाभात्। धातोरित्यनेन सह ङिदंशस्य विशषणत्वेन तदन्तविधिः। अनुदात्तेदित्यंशेन सह तु न तदन्तविधिः, फलाभावात्, 'उपदेशे' इत्यनुवृत्तिफलं तु कुटितुमिच्छति 'चुकुटिषति' इत्यत्रात्मनेपदाभावः। उपदेशे ङित्वाभावात्।

पुनश्च ङिदंशे धातुना सह तदन्तविधेः फलम्—'अदुद्रुवत्', 'अवोचत्' इत्यादौ चङोर्ङित्त्वेऽप्यात्मनेपदाभावः, तदन्तस्याधातुत्वात्। एवं च—अनुदात्तेत उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थान आत्मनेपदं स्यादिति सूत्रार्थः सम्पन्नः। अथ च—धातुमात्राल्लस्य स्थाने तिबादीनां 'तिप्तस्झि'[3] इत्यादिसूत्रेण सिद्धत्वादिदं सूत्रं व्यर्थमिति चेदुच्यते—अनुदात्तेत उपदेशे यो ङित्तदन्ताच्च धातोर्लस्य स्थाने तिबादयः स्युस्तर्हि त आत्मनेपदसंज्ञका एवेति नियमपरत्वेनादोषात्। नियमश्चायं विकल्पात्मक एव, न तु परिसंख्यारूपः। विधेयस्यात्मनेपदस्य 'तिप्तस्झि' इत्यनेन पक्षे सिद्धत्वात्।

अतश्च यद्यनुदात्तेत उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थाने तिबाद्यादेशेन साधुत्वं स्यात् तर्हि आत्मनेपदादेशेनैव, न तु परस्मैपदादेशेन—इत्येवंरीत्या 'नियमः पाक्षिके सति' इत्यस्य लक्षणस्य समन्वयो बोध्यः। एवं चेदृशधातोर्लस्य स्थाने परस्मैपदादेशेन साधुत्वाभाव एव लभ्यते। यथाऽवघातेनैव व्रीहीणां वितुषीकरणम्, न तु नखविदलनादिना।

ननु लस्य स्थाने तिबाद्यादेशेषु कृतेषु तङानावात्मनेपदमिति सूत्रेणाऽऽत्मनेपदसंज्ञा भविष्यति। ताद्यादेशात् पूर्वं त्वादेशानामभावेनात्मनेपदसंज्ञाया एवाभावे कथमस्य नियामकतेति चेत्, उच्यते—सूत्रशाटकन्यायेन भाविन्याः संज्ञायाः समाश्रयणेनास्य दोषस्य निरास इति। यथा—'एषां सूत्राणां शाटकं वय' इत्युक्तः कश्चन जनो मनसि विचारयति यत् 'शाटको न वातव्यः' यश्च वातव्यः स तु न शाटक एवं च निश्चिनोति—यदेतानि सूत्राणि वय ऊयमाने सूत्रे शाटक इति संज्ञा चेत्, तथैवात्रापि लस्य स्थाने तिबादय आदेशाः क्रियेरन्; किन्त्वनुदात्तेत उपदेशे यो ङित् तदन्ताच्च धातोर्लस्य स्थाने ये तिबाद्यादेशाः क्रियेरन्, तेषामात्मनेपदसंज्ञा भाविनी स्यात्। अयमेव सूत्रशाटकन्यायेन भाविसंज्ञासमाश्रयणपक्षः।

---

१. अष्टा० १।३।२;　　२. तत्रैव—१।३।१;　　३. तत्रैव—३।४।७८।

अथ च—धातोरित्यस्य यत् फलमुक्तम्—'अदुद्रुवत्', 'अवोचत्' इत्यादिकम्, तदपरे न सहन्ते। तथा हि लावस्थायामेव वृतादि धातुभ्यः 'स्यतासी' इत्यादिना स्यप्रत्यये कृते व्यवधानादात्मनेपद-परस्मैपदरूपनियमाप्रवृत्तावपि लकारसामान्याश्रयत्वेनान्तरङ्गत्वात् स्यप्रत्ययात् पूर्वमेव लस्य स्थाने तिवादिषु सत्सु परस्मैपदम्, पक्षे चात्मनेपदम्, सिद्ध्यत्येवेति व्यर्थं स्यसनोरिति सूत्रे स्यग्रहणमिति, तेनैव स्यग्रहणेन विकरणेभ्यो नियमो बलीयानिति ज्ञाप्यते। ततश्चानुदात्तेत्वाद् 'वर्तिष्यते' इत्यत्र नित्यमात्मनेपदे प्राप्ते 'वृद्भ्यः स्यसनोः'[1] इति परस्मैपदमपि पक्षे भवति। तथा च विकरणेभ्यो नियमो बलीयानित्यस्य ज्ञापनेन चङ्ङोर्न दोषः, विकरणात् प्रागेव परस्मैपदप्रवृत्तेरिति चेत्, सत्यम्—यग्रहणं विकरणव्यवधानेऽपि नियमप्रवृत्तिं ज्ञापयति—इति कृत्वा पक्षे चङ्ङोर्दोषः स्यादेव। अयं च पक्षः 'शदेः शितः'[2] इत्यत्र भाष्यकैयटयोः स्पष्टः। किञ्च, तदन्तविधिलाभार्थमपि धातुग्रहणमावश्यकम्। तत्फलं तु 'धातोरेकाच्'[3] इत्यादिना यङि 'बोभूयते' इत्यत्र, 'ऋतेरीयङ्'[4] इति ईयङि 'ऋतीयते' इत्यादावात्मनेपदसिद्धिः। 'शेते', 'ह्नुते' इत्यादौ तु व्यपदेशिवद्भावेन तत्सिद्धिः।

'नमोवरिवश्चित्रङः क्यच्'[5] इति क्यचि सति 'चित्रीयते' इत्यत्र कथमात्मनेपदसिद्धिः? क्यचो ङित्त्वाभावादिति चेदुच्यते—अवयवेष्वचरितार्थोऽनुबन्धः समुदायस्योपकारक इति नियमेन चित्रङो ङित्त्वस्य क्यजन्तोपकारकत्वात्। एवं च तथापि ङकारस्य समुदायानुबन्धत्वे व्यपदेशिवद्भावेन ङिदन्तत्वम्। परिसंख्यारूपोऽयं नियमो नास्ति। तथा सति धातोर्लस्य स्थान आत्मनेपदं चेत्, अनुदात्तेत औपदेशिकङिदन्ताच्चेवेति स्वरूपं स्यात्, तथा च महदनिष्टं स्यात्। अन्येषां समेषामात्मनेपदविधायकानां वैयर्थ्यप्रसङ्गात्। एवं चेषां प्रत्येकमात्मनेपदविधायकस्य परस्मैपदविधायकस्योभयपदविधायकस्य परिसंख्याताकनियमपरत्वं च न सम्भवति।

एवमेव भावकर्मणोरित्यादेरपि विकल्पात्मकसिद्धौ सत्यामेव नियमपरत्वम्। अतश्च धातोर्विहितस्य भावकर्मान्यतरार्थकलकारस्य स्थाने तिवादय आदेशाश्चेत्, तर्हि तादय आत्मनेपदसंज्ञका एव। क्रियाक्रियात्वकारकसंख्याकालाः पञ्चकं धात्वर्थ इति पक्षेऽयं नियमविषयो न त्वन्यपक्षे, अत एव भावकर्मवृत्ताद्धातोर्लस्य स्थाने तिबादयश्चेत्, आत्मनेपदसंज्ञका एवेति नियमो भाष्ये सङ्केतितः। एवमेव—'कर्तरि कर्मव्यतिहारे'[6] इत्यस्यापि नियमपरता, तथा हि—धातोर्विहितस्य कर्त्रर्थकलकारस्य स्थाने तिबाद्यादेशा स्युः, तर्हि आत्मनेपदसंज्ञका एव, क्रियाविनिमये द्योत्ये। एवमेव समेषामात्मनेपदविधायकानां पाक्षिकप्राप्तौ सत्यां नियमपरत्वं बोध्यमिति।

[ क्रमशः ]

१. अष्टा० १।३।९२; २. तत्रैव—१।३।६० ; ३. तत्रैव ३।१।२२।
४. तत्रैव—३।१।२९ ; ५. तत्रैव—३।१।१९ ; ६. तत्रैव—१।३।१४।

# वेदेष्वङ्गिरस ऋषेः स्वरूपविवेचनम्

डॉ० केशवप्रसादमिश्रः
पूर्वप्राचार्यः,
गौतम-आश्रमः, कैलासनगरम्, छतरपुरम्,
मध्यप्रदेशः

❁ ❁ ❁

अङ्गिरश्शब्दश्चतुर्णां वेदानां प्रकाशितास्वेकादशसंहितासु षोडशाधिकचतुश्शतकृत्वो भिन्नभिन्नविभक्तिषु प्रयुक्तो दरीदृश्यते । सर्वेषां पदानां महत्त्वमत्र प्रतिपाद्यते ।

अङ्गिरस ऐतिहासिकतायां कीथमैकडानलौ संदिहानौ वर्तेते । एतमर्धपौराणिकं तौ मन्वाते । प्रस्तुते लेखे अङ्गिरस ऋषेरस्तित्वं वेदवेदाङ्गप्रमाणैर्निरूप्यते ।

केषुचिन्मन्त्रेष्वग्निरेवाङ्गिराः, न हि कश्चित्तन्नामा ऋषिरिति केषाञ्चिन्मतं भाष्यकर्तॄणां तन्न समीचीनम् । सन्ति बह्व्य ऋचो यत्राङ्गिराः प्रोच्यते ।

एकस्यामृचि (ऋ० सं० १.१.६) अङ्गिरसः कारणभूतोऽग्निः । तस्मादग्निरन्यः, अङ्गिरा अन्यः । नाग्निरङ्गिरा इत्याह स्कन्दस्वामी ।

ऐतरेयिणोऽपि ( ऐ० ब्रा० ३.३४ ) ये अङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति समामनन्ति । तस्मादङ्गिरो मुनिकारणत्वाद् अङ्गाररूपस्याग्नेरङ्गिरस्त्वमिति सायणः । निरुक्ते ( ३.१७ ) अङ्गिरःपदव्याख्यानेऽङ्गारेष्वङ्गिरा ऋषिर्बभूवेति यास्कः । एकस्यामृचि (ऋ० सं० १.४५.३) प्रस्कण्वोऽग्निं स्तौति—हे अग्ने, यथा प्रियमेधस्यात्रेः, विरूपस्याङ्गिरस आह्वानं श्रुतं तथैव मम प्रस्कण्वस्याऽऽह्वानं शृणु । इत्यनेन मन्त्रेणाङ्गिरसः स्थितिरभिधीयते ( यथैतेषामृषीणामेवं प्रस्कण्वस्य शृणु ह्वानम् ) । तदुक्तं बृहद्देवतायाम्—

त्रिसांवत्सरिकं सत्रं प्रजाकामः प्रजापतिः ।
आहरत्सहितैः साध्यैर्विश्वेदेवैः सहेति च ॥
तत्र वाग्दीक्षणीयायामाजगाम शरीरिणी ।
तां दृष्ट्वा युगपत्तत्र कस्याथ वरुणस्य च ॥
शुक्रं चस्कन्द तद्वायुरग्नौ प्रास्यद् यदृच्छया ।
ततोऽर्चिभ्यो भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिः ॥ (५।९७-९९)

ऐतरेयब्राह्मणे (३.३४) प्रजापतिर्वै स्वां दुहितरमभ्यध्यायद् दिवमित्यन्य आहु-रुषसमित्यन्ये तामृश्यो (मृगो) भूत्वा रोहितं भूतामभ्यैत् तं देवा अपश्यन्। अकृतं वै प्रजापतिः करोतीति ते तमैच्छन्य एनमारिष्यत्येतमन्योऽन्यस्मिन्नाविन्दंस्तेषां या एव घोरतमास्तन्व आसंस्ता एकधा समभरंस्ताः संभृता एष देवोऽभवत्तदस्यैतदभूत-वन्नाम इति × × × × × तं रुद्रं देवा अब्रुवन्निमं विध्येति। स तथेत्यब्रवीत् × × × × रुद्रस्तमभ्यायत्याविध्यत्स विद्ध ऊर्ध्व उदप्रपतत्तमेतं मृग इत्याचक्षते य उ एव मृगव्याधः स उ एव स या रोहित् सा रोहिणी। तद् वा इदं प्रजापते रेतः सिक्तमधावत्तत्सरोऽभवत् × × × × १३.३३ × × तदग्निना पर्यादधुस्तन्मरुतोऽधून्वंस्तद् वैश्वानरः प्राच्यावयत्। तस्य पिण्डीभूतस्य रेतसो यत्प्रथमं पिण्डरूपं तत आदित्यो जातः। द्वितीयपिण्डतो भृगुः। अनन्तरं तृतीयपिण्डत आदित्या अभवन्। ये रेतःपिण्डा दग्धासन्तोऽङ्गारा अभवंस्ते सर्वेऽप्यङ्गिरोनामका ऋषयोऽभवन्। (१३.३४)

सायणभाष्ये निरुक्ते बृहद्देवतायां च यत् किञ्चिद् वृत्तमुपलभ्यते तस्य सर्वस्य मूलमैतरेयब्राह्मणम्। निरुक्ते दुर्गभाष्यत एतत्स्पष्टं भवति यत् तेऽङ्गिरसः सूनवस्तेऽग्नेः परिजज्ञिरे। अत्राङ्गिरःप्रधानका गणा अङ्गिरस इत्युच्यन्ते।

ऋग्वेदसंहितातो ( ३.३१.५ ) ज्ञायते यदेतेऽङ्गिरसः सप्तसङ्ख्याका आसन्। सायणोऽपि स्वभाष्ये सप्तानामङ्गिरसां मध्ये वरिष्ठोऽङ्गिरा ऋषिरिति मनुते। (३.३१.७)

हिरण्यस्तूप आङ्गिरसो वक्ति यद् हे अग्ने ( ऋ० सं० १.३१.१ ) त्वं प्रथमः = आद्यः, अङ्गिरसानामृषीणां जनकत्वात्। तादृशोऽङ्गिरोनामक ऋषिरभवः।

**अङ्गिरः** —(ऋ० सं० १.३१.१७) हे अग्ने, त्वं मनुष्वद् अङ्गिरस्वद् ययातिवत् सदने आगच्छ। अत्र अङ्गिरसा तुल्यमङ्गिरस्वत्। "तेन तुल्यं क्रिया चेद् वतिः" इत्यनेन वतिप्रत्यये। अङ्गिरस्वत्पदेन अङ्गिरसोऽस्तित्वं द्योत्यते। कुत्स आङ्गिरस आत्मानं सम्बोध्य (ऋ० सं० १.१२.१८) कथयति—हे अङ्गिरः अङ्गिरसां गोत्रज त्वमश्विनौ स्तुहि। एकस्मिन् मन्त्रे (ऋ०सं० ५ ८.४) सायणोऽग्निमङ्गिरसः पुत्रं मनुते। कार्यकारणयो-रभेदोपचारादङ्गिरसां प्रकृतिभूतोऽप्यग्निरङ्गिरा इत्युच्यते[1]। हे अग्ने, त्वामङ्गिरसः = अङ्गिरोवंशोद्भवा ऋषयः, अप्सु प्रविष्टं लेभिरे = अन्विष्य प्रापुः। पुनर्नष्टं त्वां वने वने शिश्रियाणं नानावनस्पतिष्वाश्रितं प्रापुः। अत एवाग्निः अरणिभ्य उत्पद्यसे[2]। मन्त्रेऽत्र सर्वेभ्य ऋषिभ्योऽङ्गिरसां वैशिष्ट्यं परिलक्ष्यते, ये ह्यग्नेरन्वेषणे सफलता-

---

१. ऋ० सं० ५।१०।७, ५।११।६।

२. ऋ० सं० ५।११।६; मा० सं० १५।२८; तै० सं० ४।४।४; काठ० सं० ३९।१४; कौ० सं० २।२५८।

मापुः । बहुत्र सायणोऽङ्गिरःपदं ह्यग्नेः सम्बोधनं मनुते[1]। अङ्गिरसः सप्त ऋषयः सन्ति (ऋ० सं० ३.३१.५) । तत्राङ्गिरसां मध्य एकोऽग्निरपि भवति (८.६०.२, ८.७४.११) । अङ्गिरसां वरिष्ठ इत्यपि कथ्यते (८.८४.४) । अत एवाग्निरङ्गिरस्तम इत्युच्यते (२.१३.५) । महीधरोऽङ्गिरःपदमग्नेः सम्बोधनं मन्वानो निर्वक्ति यदङ्गिरोभिर्ऋषिभिः पूर्वं सम्पादितत्वाद् अङ्गसौष्ठत्वाद्वाऽङ्गिरा अग्निः[2] । एतेन स्पष्टं यदङ्गिरसः सर्वतः प्रागग्निमजनयन् ।

नोधाः (ऋत्विजः प्रति) ब्रवीति । यूयमिन्द्राय नमो भरध्वम् । येन मम पूर्वे पितरः पूर्वपुरुषा अङ्गिरसः पणिनाम्नाऽसुरेणापहृतानां गवां पदज्ञा मार्गज्ञाः सन्तो गा अविन्दन्[3] । शक्तिपुत्रः पराशर-ऋषिर्वक्ति यदस्माकं पितरोऽङ्गिरसो दृढाङ्गमपि पणिनामानमसुरमभञ्जन् (ऋ० सं० १.७१.२) । एतेनेदं प्रतीयते यत् पराशरोऽङ्गिरो गोत्रज आसीत् । विश्वामित्रो ब्रूते यद् भोजा विरूपा मेधातिथिप्रभृतयोऽङ्गिरसो दिवः पुत्राः सन्ति (ऋ० सं० ३.५३.७) । तेऽसुरस्य वीरा मह्यमश्वमेधे धनानि ददत आयूंषि प्रवर्धयन्ति । एतेन स्पष्टमेतद् यद् विरूपा अङ्गिरसो विश्वामित्रसमय आसन् । अन्यस्मिन्नपि मन्त्रे तेऽङ्गिरसो दिवस्पुत्रास उच्यन्ते[4] ।

अथास्य आङ्गिरस ऋषिर्ब्रवीति यदङ्गिरस ऋतं शंसन्तः कल्याणकर्म ध्यायन्तोऽग्नेः पुत्रा दिवःपुत्राश्चाङ्गिरसे विप्रं पदं दधाना यज्ञस्य प्रथमं धाम स्तुवन्ति । वामदेवोऽन्यैः षड्भिरङ्गिरोभिर्ब्रूते, वयं मातुरुषसः सकाशात् सप्तसङ्ख्याका विप्राः प्रथमाः श्रेष्ठा नॄन् जनयामः । वयं दिवस्पुत्रा अङ्गिरसो भूतिमन्तः स्याम । वयमुदकवन्तं मेघं भिन्द्याम । अङ्गिरसो मेधातिथिप्रभृतय ऋतेन अद्रिम्=पर्वतं भिन्दन्तो व्यक्षिपन् । ततस्ते गोभिः समगच्छन्त । अङ्गिरस उषसो व्युषि गवामावरकेऽन्धकारेऽपवृते सति गोभिः संजग्मिरे । आसां गवामुत्कृष्टे स्थान उदकस्योत्सः (बिलम्) आसीत् । तेन उदकस्य मार्गेण सरमा गा अलभन्त । अङ्गिरसां देवविषया स्तुतिः सत्यफला अभवत्, यतस्ते स्तोत्रेण तमांस्यविदारयन् । तमोऽपहृते गवां समूहं निरगमयन् ।

वसिष्ठो ब्रवीति यद् ब्रह्माणोऽङ्गिरसः सर्वत्र व्याप्नुवन्तु । एतेन सिद्ध्यति यद् ब्रह्माणो नामका अङ्गिरस आसन् । तुरण्यवोऽङ्गिरसः सवितुः प्रार्थनां कुर्वन्तः सवितृसम्बन्धिरत्नमाश्नुवन्तः प्राप्तवन्तः ।

---

१. ऋ० सं० १।१।६; १।७४।५; ४।९।७; ५।८।४; ५।११।६; ५।२१।१; ६।२।१०; ८।७५।५; ८।१०२।१७; खि० २।१३।४; ५।२०।४; मा० सं० १२।८; तै० सं० ४।२।१।७ ।

२. मा० सं० ११।४५; तै० सं० ४।१।४।७ ।

३. ऋ० सं० १।६२।२; मा० सं० ३४।१७ ।

४. ऋ० सं० १०।६७।२; शौ० सं० २०।९१।२ ।

मन्त्रद्रष्टा वैवस्वतो यमो ब्रूते[१]—अङ्गिरसोऽथर्वाणो भृगवश्च नः पितर आसन्। नवग्वा अभवन् तथा सोम्यासः सोममर्हन्तीति सोम्यास आसन्। वयं तेषां सुमतौ भद्रे सौमनसे च स्याम। अस्य मन्त्रस्य देवता अङ्गिरसः सन्ति। गम्भीरकर्माणो विरूपासस्तेऽङ्गिरसः सूनवः सन्ति। तेऽङ्गिरसोऽग्नेः परिजज्ञिरे, अग्नितः प्रादुर्भूताः (ऋ० सं० १०.६२.५)। विश्वरूपा अङ्गिरसः सामगाः सन्ति (१०.७८.५)। अङ्गिरसां सत्रमासीनानां मध्ये केचन नवसु मास्सूदतिष्ठन् (ऋ० सं० १०.१०८.८)। ते नवग्वास्तथैव दशग्वाः. उभयविधा अङ्गिरसस्तेषां प्रथमोऽयास्यनामा तथैत ऋषय आगच्छेयुः। ते गवां समूहं विभागं कुर्युः। सरमा पणीन् प्रति कथयत्येतत्। अङ्गिरसस्तपसा गाश्चक्रुः कृतवन्तश्चित्रा यागादिलक्षणेन (ऋ० सं० १०.१६९.२)। अङ्गिरसां प्रार्थना क्रियते यत्ते मह्यं मेधां दद्युः[२]। ज्योतिषा अङ्गिरसो महिमानं प्राप्तवन्तः।

आदित्याश्चाऽङ्गिरसश्च सर्वप्रथममग्नीनादधत ते दर्शपूर्णमासौ प्रैप्सन्, तेषामङ्गिरसां निरुप्तं हविरासीदथादित्या एतौ होमावपश्यन् तावजुहवुस्ततो वैते दर्शपूर्णमासौ पूर्वमालभन्त[३]। अङ्गिरसां द्विरात्रविधिर्वर्तते। तस्यैतत्फलं य एवं विद्वान् द्विरात्रेण यजते सुवर्गमेव लोकमेति[४]। अङ्गिरसो मास्य यज्ञस्य प्रथमानुवाकैरवन्तु। अङ्गिरसो मेऽस्य यज्ञस्य प्रातरनुवाकैरहौषुः। अङ्गिरसां त्वा देवानां व्रतेनादध इति। एतेन सुस्पष्टमेतद् यदङ्गिरसो देवा आसन्। आदित्येष्वङ्गिरस्सु च स्वर्गलोकप्राप्त्यै सुस्पर्धा परिलक्ष्यते[५]। अङ्गिरसस्तु बहूनां यज्ञानां प्रवर्तकास्सन्ति[६]। अग्निचयनमपि तेऽकुर्वन्। तस्यापि त एव प्रवर्तका इत्यर्थः। अङ्गिरसां (देवानां) षण्मन्त्राः सन्ति[७]। नाभानेदिष्ठ एभिरङ्गिरसां स्तुतिं करोति। यूयं दक्षिणया सङ्गता इन्द्रस्य सख्यममृतत्वं च प्राप्ताः स्थ[८]। हे अङ्गिरसः, तेभ्यो वो युष्मभ्यं भद्रं कल्याणं कर्म अस्तु। हे अङ्गिरसः, पितृभूता यूयं पणिभिरपहृतं गोधनमुदगमयन्। यज्ञेन बलनामकमसुरं व्यनाशयन्। तेभ्यो दीर्घायुष्ट्वमस्तु[९]। हे अङ्गिरसो यूयमृतेन दिवि सूर्यमस्थाप-

---

१. ऋ० सं० १०।१४।६; मा० सं० १९।५०; तै० सं० २।६।१२।१७; शौ० सं० १८।१।५८।

२. खि० ४।८१; का० गृ० ४१।१८।

३. तै० सं० ५।७।२।५; काठ० सं० २२।१० ; ३८।१३ क० ३५।४; तै० सं० ३।५।१।५।

४. तै० सं० ७।१।४।१।

५ काठ० सं० ४।१४;३१।१५; भा० श्रौ० ४।१२।४ ; आप० श्रौ० ४।९।२ ; काठ० सं० ५।४;३२।४; भा० श्रौ० ४।१८।७; काठ० सं० ८।४,७।१३; क० ६।९; काठ०सं० ९।१६।

६. काठ० सं० ४०।५ ; ७. ऋ० सं० १०।६२।१–६।

८. ऋ० सं० १०।६२।१; ९. ऋ० सं० १०।६२।३, ४; शौ० सं० ४।२९।३।

यन् तथा पृथिवीमप्रथयन्। तेभ्यः सुप्रजास्त्वमस्तु[१]। हे अङ्गिरसो देवपुत्रा ऋषयोऽयं नाभानेदिष्ठः कल्याणं वचो वदति यूयं शृणुत, तेभ्यः सुब्रह्मण्यमस्तु[२]। मित्रावरुणयोः स्तुतिः क्रियते। हे मित्रावरुणौ, युवामङ्गिरसमवथः, अगस्तिं जमदग्निमत्रिं कश्यपं वसिष्ठञ्चावथः। तौ न अंहसो मुञ्चतम्[३]। एतेन मन्त्रेण सुस्पष्टमेतद् यदङ्गिरोनामा ऋषिरासीत्। षट्सु ऋषिषु मध्ये अङ्गिरा ऋषिः।

अङ्गिरसामृषीणां प्रेषणे सरमा स्वपुत्रायान्नमविन्दत्[४]। कक्षीवान् कथयति यदस्माकमङ्गिरसां स्तुतीरिन्द्रः कदा शृणुयात्[५]। अग्निरङ्गिरसां मध्ये ज्येष्ठ उच्यते[६]। अङ्गिरसां पुत्रः कक्षीवान् यत्सवननमवेत्, तेन विश्वेदेवाः प्रियं समवीवनन्[७]। अङ्गिरसां तपः प्रकृष्टमासीत्। भृगूणामङ्गिरसां तपसा तप्यध्वमिति[८]। यत्र प्रथमान्तानि नामान्यङ्गिरसस्सन्ति, तानि निर्दिश्यन्ते। पूर्वमप्युक्तानि। हे अग्ने, त्वमाद्योऽङ्गिरोनामक ऋषिरभवः[९]। प्रियमेधः, कण्वः, अत्रिः, मनुरित्येतेषामृषीणां पङ्क्तावङ्गिरोगणनादयमङ्गिरा ऋषिरेव। एते सर्वे ऋषयो दिवोदासपुत्रस्य परुच्छेपस्य मन्त्रद्रष्टुर्मम जन्म विदुः[१०]। अङ्गिरा ऋषिः सर्वाणि स्तुत्यादिलक्षणानि सत्यानि चकार[११]। अङ्गिरा ऋषिर्जन्मना पूर्वः प्रत्नः देवान् स्तौति[१२]। अङ्गिरसः सोम्यासः पितरो मां शत्रुजयार्थमुद्युक्तं शत्रून् निग्रहीतुमुद्युक्ता भवत[१३]। अन्यैर्देवैस्सहाङ्गिरसो देवाः क्रव्यादग्निशमनायाहूताः[१४]। एतं खदिरफालमणिं बद्ध्वाऽङ्गिरसश्शत्रूणां पुरो विभिदुः[१५]। स्कम्भस्य ब्रह्मणो नेत्रस्वरूपा अङ्गिरसोऽभवन्[१६]। स्तुता मनीषिणोऽङ्गिरसो देवा मां पापान्मुञ्चन्तु[१७]। घृतयुक्तं हविरङ्गिरसामस्ति[१८]। नवग्वा अङ्गिरसोऽस्मिन् मादयध्वम्[१९]। त्वामङ्गिराः पूर्व्या ब्राह्मणा विदुः[२०]। अङ्गिरसो देवा आसन्निति स्पष्टरूपेण तैत्तिरीयसंहितायामुल्लिख्यते[२१]। देवा अङ्गिरोभ्यो धेनुं दत्तवन्तः[२२]।

अयमाशयः—एकादशसु संहितासु यानि नामान्यङ्गिरसस्सन्ति, तत्र सप्तविंशत्यधिकशतद्वयनामान्येकवचने सन्ति। तैर्नामभिरङ्गिरा ऋषिर्वेदमन्त्रप्रमाणैः प्रमाणितः।

---

१. ऋ० सं० १०।६२।३; २. तत्रैव—१०।६२।४; ३. शौ० सं० ४।२९।३।

४. ऋ० सं० १।६२।३; ५. तत्रैव—१।१२१।१।

६. ऋ० सं० १।१२७।२, काठ० सं० ३९।१५; ७. खि० ३।१५।३२, ५।१।३।

८. मा० सं० १।१८; का० १।६।४; श० १।२।१।१३; तै० ग० ३।२।७।६।
तै० सं० १।१।७।२; काठ० सं० ३१।६।

९. ऋ० सं० १।३१।१ मा०सं ३४।१२; १०. ऋ०सं० १।१३९।९; ११. तत्रैव–५।४५।७।

१२. तत्रैव—१०।९२।१५; १३. शौ० सं० २।१२।५; १४. तत्रैव—३।२१।८।

१५. तत्रैव—१०।६।१०; १६. तत्रैव—१०।७।१८; १७. तत्रैव ११।८।१३।

१८. तत्रैव—१२।३।४५; १९ तत्रैव—१८।३।२०; २०. तत्रैव—१९।३४।६।

२१ तै० सं० ७।१।१८।२, काठ० सं० ४।१९; २२. ऋ० सं० १।१३९।७।

उद्धरणानि च पूर्वमेव दत्तानि। एकं नाम द्विवचने वर्तते। अष्टाशीत्यधिकशतनामानि बहुवचने पठितानि। एतेनेदं प्रमाणितं यदङ्गिरसामेको गण आसीत्। तस्मिन् गणे सप्त ऋषय आसन्; परं तेषां सप्तानां नामानि निश्चयेन वक्तुं न शक्यन्ते। तत्राङ्गिरा ऋषिः, अग्निः, वामदेवः, विरूपो भोजः, मेधातिथिः, ब्रह्माणः, तुरण्यवः, अथर्वाणः, विश्वरूपाः, अयास्य इत्येत एकादशसंख्याका अङ्गिरसां मध्ये अङ्गिरोमध्ये परिगण्यन्ते, परं तत्र वामदेवो राहूगणगोतमपुत्रोऽतः स गौतमो नाङ्गिरसां गणे पठितुं शक्यते। अयास्य आङ्गिरस उच्यते नाङ्गिरोगणमध्ये। शेषेषु नवसु सप्तैवाङ्गिरोमध्ये पठितुं शक्यन्ते। तत्र द्वयोर्नाम पृथक्करणे भूयसोऽध्ययनस्य विचारस्य वा स्थानम्।

अधुना ब्राह्मणारण्यकेषूपनिषत्सु च नामानि विविच्यन्ते। अङ्गिरसस्समिद्भिरग्निमैन्धत[1]। आदित्याश्चैवेहासन्नङ्गिरसश्च तेऽग्नेऽग्निनाग्निमयजन्त ते स्वर्गलोकमायन्[2]। आदित्याश्च ह्वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त वयं पूर्व एष्यामो वयमिति ते हादित्या पूर्वे स्वर्गलोकं जग्मुः पश्चेवाङ्गिरसः षष्टयां वा वर्षेषु। अङ्गिरसो विलम्बेन षष्टिसङ्ख्याकेषु वर्षेष्वतीतेषु स्वर्गं प्राप्ताः[3]। नाभानेदिष्ठस्य भ्रातरोऽस्मै ब्रह्मचर्यं वसन्तं पैतृकं दायं न दत्तवन्तः। स स्वपितरमब्रवीत्। तस्य पिता कथयति तम्प्रति। अङ्गिरसो वा इमे स्वर्गाय लोकाय सत्रमासते, ते षष्ठ षष्ठमेवाहरागत्य मुह्यन्ति मन्त्रबाहुल्ये भ्रान्ताः। तान् महर्षीन् षष्ठेऽह्नित्वं गत्वा सूक्तद्वयं शंसय। स्वर्गं गच्छन्तस्ते तुभ्यं सहस्रं सत्रपरिवेषणं धनं दास्यन्ति। शंसने कृतेऽङ्गिरसस्तस्मै धनं दत्तवन्तः[4]। अङ्गिरसामादित्यानां च स्वर्गगमनं प्रत्यङ्गिरसोऽग्निमूचुः श्वः सुत्यां स्वर्गस्य लोकस्य करिष्यामः। परमादित्याः सद्यः सुत्यां प्रब्रूहि—इत्यग्निं प्रार्थितवन्तः। अग्निश्च स्वीचकार। अङ्गिरस आदित्यानयाजयन् परं तैर्दत्तां दक्षिणां न गृहीतवन्तो भूमिं पूर्णाम्[5]। अङ्गिरसो देवा अपि सन्ति[6]। अथ मेखलां परिहरते—अङ्गिरसो वै दीक्षितानबल्यमविन्दत्तेनान्यद् व्रतादशनमवाकल्पयँस्त एतामूर्जमपश्यन् समाप्तिं तां मद्ध्यत आत्मन ऊर्जमदधत सामाप्तिं तया समाप्नोति[7]। देवा रेतः प्राजनयँस्ततोऽङ्गाराः समभवन्नङ्गारेभ्योऽङ्गिरसः[8]। अङ्गिरसः सुवर्गं लोकं यन्तोऽप्सु दीक्षातपसी प्रावेशयन् यत्पुण्डरीकमभवत्[9]। अङ्गिराश्चतुर्थवेदप्रवर्तकाचार्यस्तस्य कुले समुत्पन्नाः सर्वेऽप्यङ्गिरसः[10]। इष्टकोपधानेऽङ्गिरसो देवा धिष्णियैरग्निभिस्सहाऽऽ-

---

१. श० ब्रा० १।४।१।२५;
२. ऐ० ब्रा० १।१६।
३. ऐ० ब्रा० ४।१७, श० ब्रा० १२।२।२।९; तै० सं० २।२।३।५-६।
४. ऐ० ब्रा० ५।१४;
५. तत्रैव—६।३४-३५।
६. तत्रैव—८।१२, १४, १७, १९;
७. श० ब्रा० ३।२।१।१०।
८. तत्रैव—४।५।१।८;
९. तै० ब्रा० १।८।२।१;
१०. तत्रैव—२।१।१।१ सायणः।

गच्छन्तु[१]। अङ्गिरसः स्वर्गं लोकं यतो रक्षांस्यन्वसचन्त तान्येतेन हरिवर्णोऽपाहन्त यदेतत् साम भवति रक्षसामपहत्यै[२]। अङ्गिरसां वै सत्रमासत तेषामाप्तः स्पृतः स्वर्गो लोक आसीत्। पन्थानं तु देवयानं न प्रजानन् कल्याण आङ्गिरसस्तूर्णायुगन्धवंतो विज्ञायाङ्गिरसः प्रत्यकथयद् देवयानपन्थानम्[३]। अङ्गिरसां व्रतमप्युत्कृष्टमासीद् यतोऽन्यन्वाधाने "भृगूणां त्वाङ्गिरसा व्रतपते व्रतेनादधामि" इति मन्त्रेणाङ्गिरसां व्रतेनाग्निराधीयते[४]। यमभिव्याहरिष्यन् स्यात्तमभिव्याहरेत्—रौद्रेण त्वाङ्गिरसां मनसा ध्यायामि[५]। अङ्गिरसां गोष्ठः साम भवति[६]। अङ्गिरसां चोत्सेधनिषेधौ[७]। अन्यत्राऽङ्गिरसां चैव निषेधः[८]। जैमिन्यार्षेयब्राह्मणे—अङ्गिरसा संक्रोशास्त्रयः[९]। जैमिनीयोपनिषद्ब्राह्मणे-व्युषि सविता भवसि। अपररात्रे अङ्गिराः[१०]। अङ्गिरा ऋषिरासीदत्र पुष्टं प्रमाणं शाङ्खायनारण्यके-तद् अहः (यज्ञविशेषः) इन्द्रोऽङ्गिरसे प्रोवाचाङ्गिरा दीर्घतमसे। ततो दीर्घतमा ऋषिर्दश पुरुषायुषाणि जिजीव। तदेतद् ऋषिराह—"दीर्घतमा मामतेयो जुजुर्वान् दशमे युगे" तदेतदायुष्कामस्य शस्त्रमिति ह स्माह कौषीतकिस्तद् य एवं विद्वानेतदहः शंसति सर्वमायुरस्मिँल्लोक एत्याप्नोत्यमृतत्वमक्षितिं स्वर्गलोके[११]।

बलनामाख्यः कश्चिदसुरोऽङ्गिरसां गा अपहृत्य कस्मिँश्चिद्बिलेऽवस्थाप्यावस्थितः। इन्द्र एतद् विज्ञाय बलं हत्वाऽङ्गिरोभ्यो गा दत्तवान्[१२]। अङ्गिरसां साद्यस्क्रमेकाहं दर्शयति ताण्ड्ये-आदित्याश्चाङ्गिरसश्चैतत्सत्रं समदधतादित्यानामेकविंशतिरङ्गिरसां द्वादशाह आदित्या अस्मिँल्लोके ऋद्धा आदित्या अमुष्मिन् अङ्गिरसोऽस्मिन्नङ्गिरसोऽमुष्मिन् द्वयं सत्रं यावद् द्वयेन सत्रेणर्ध्नुवन्ति तावत्येतासामृद्धिः[१३]। तत्रैवाङ्गिरसां पुरस्तात् पृष्ठ्यम्। पुरस्तात्पृष्ठ्येन वा अङ्गिरसः स्वर्गं लोकमाक्रमन्त यत्पुरस्तात् पृष्ठ्यानि उदयन्ति स्वर्गस्य लोकस्याक्रान्त्यै[१४]। गवामयनं प्रथमः संवत्सरोऽथादित्यानामथाङ्गिरसाम्। एतेन वै गावः प्रजातिं भूमानमगच्छन् प्रजायन्ते बहवो भवन्ति य एतदुपयन्त्येतेन वा आदित्या एषु लोकेषु प्रत्यतिष्ठन् प्रतितिष्ठन्ति य एतदुपयन्त्येतेन वा अङ्गिरसः स्वर्गलोकमायन्। स्वर्गं लोकं यन्ति य एतदुपयन्ति[१५]। तत्रैव एतेनाङ्गिरस आदित्यानाप्नुवन् यो हीन अनुजावर इव स्यात् स एतेनाऽयजेताप्नोति पूर्वेषां प्रहामाप्नुवन् ह्येतेनाङ्गिरस आदित्यान्[१६]।

---

१. तै० आ० ३।८।१;   २. तां० ब्रा० ८।९।५ ;   ३. तत्रैव—१२।११।१०।
४. तै० ब्रा० १।१।४।८;   ५. तै० आ० ४।३८।१, वनदुर्गोपनिषत्, पृ०४६४,१४ पंक्तौ।
६. तां० ब्रा० १३।९।२४;   ७. आ० १।४२०,५।१४;   ८. आ० १।४२५,५।१२।
९. जै० आ० १।५२५ ;   १०. जै० उ० ४।५।१।३;   ११. शां० आ० २।१७।
१२ ऐ० ब्रा० ६।७;   १३. तां० ब्रा० २४।२।२;   १४. तत्रैव—२५।२।१।
१५. तत्रैव—२६।१६।१-२;   १६. तत्रैव— १६।१४।१।

उपनिषत्सु—मैत्र्युपनिषदि—तावदङ्गिरसो नामायातम्[१]। मुण्डकोपनिषदि ब्रह्मा यां ब्रह्मविद्यामथर्वणे प्रोक्तवान्। अथर्वा तामङ्गिरसे प्रोक्तवान्। शौनको ह महाशालोऽङ्गिरसं विधिवदुपप्रयच्छ। कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति। तस्मै स होवाच द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषम्। अथ परा यया तदक्षरमधिगम्यते[२]। तदेतत् सत्यमृषिरङ्गिराः पुरोवाच नैतदचीर्णव्रतोऽधीते। नमः परमऋषिभ्यो नमः परमऋषिभ्यः। सकलस्य मुण्डकोपनिषदः प्रवक्ता अङ्गिरा एव[३]। आत्मोपनिषदि—अथाङ्गिरास्त्रिविधः पुरुषोऽजायतान्मान्तरात्मा परमात्मा चेति[४]।

छान्दोग्योपनिषदि—तं हाङ्गिरा उद्गीथमुपासाञ्चक्रे। एतमु एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः[५]। ब्रह्मोपनिषदि—शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादमपृच्छत्[६]। अथर्वशिखोपनिषदि—पिप्पलादोऽङ्गिराः सनत्कुमारश्चाथर्वाणं भगवन्तं पप्रच्छ[७]। द्वयोरुपनिषदोरायातः पिप्पलादोऽङ्गिरागोत्रजः। प्रणवोपनिषदि—अथर्वणां चन्द्रमा देवतम् आपः स्थानं शन्नो देवी० आदिकृत्वाऽथर्ववेदमधीयते। अद्भ्यः स्थावरजङ्गमो भूतग्रामः सम्भवति। तस्मात्—

"सर्वमापोमयं भूतं सर्वं भृग्वङ्गिरोमयम्।
अन्तरैते त्रयो वेदा भृगूनङ्गिरसः श्रिताः"॥

इत्यब्रिति प्रकृतिरपामोङ्कारेण चैतद् व्यासः। अत्राङ्गिरसां प्रकृष्टो महिमा द्योत्यते। यत्र त्रयो वेदा अङ्गिरसामाश्रिताः[८]। चतुर्थस्तु वरीवर्तत एवेति।



१. मै० त्रि० ७।५;   २. मुं० १।१।२, १।१।३-५;   ३. तत्रैव—३।२।११।
४. आ० १;   ५. छां० १।२।१०;   ६. ब्र० १।
७. अ० १;   ८. प्रण० पृ० ३७, पङ्क्तिः ३।

# ऋग्वेदसंहितामाश्रित्य व्युत्पत्तिविचारः*

डॉ० ओङ्कारनाथतिवारी

साहित्यविभागाध्यक्षः

राजकीयसंस्कृतमहाविद्यालयस्य

पटना–४

❀❀❀

७०. तुर्, ७१. तूर्ति, ७२. तूर्य॑ < √तॄ—कुत्साङ्गिरसः तृधातुना सिद्धेन तरणिना[1] साकं तुरित्यस्य तथा नृमेधाङ्गिरसः 'तॄ' इत्यनेनैव निष्पन्नानां 'तूर्ति', 'तूर्[2]', 'तुर्य', 'तरुष्यत्'[3] एषां पदानां युगपत्प्रयोगेण व्युत्पत्तिं सूचितवान्। एषु मन्त्रेषु 'ॠ' इत्यस्य विकारत्रयं वर्तते। तद्यथा—१. 'उर्' २. ऊर् ३. अर्।

७३. दधि < √धा—वत्सप्रि-भालन्दनो धारकार्थवतो हरिवद् दधिशब्दस्य धा-धातुना व्युत्पत्तेः सङ्केतं चक्रे[4]। शब्दोऽयं पूर्वपदरूपे दधिक्रा, दधिक्रावन तथा 'दध्यञ्च्' इत्यत्रापि वर्तते। यास्को दधिक्रेत्यस्य पूर्वपदस्य दधेत्यस्य व्याख्यां लोक-

---

* निबन्धोऽयं "सारस्वती सुषमायाः" सप्तचत्वारिंशद्वर्षीयप्रथमद्वितीयाङ्कतः क्रमशः प्रचलन्नस्ति।

१. '६५' तरणिः अनुगमनीयम्।

२ तूर्षु तरणिर्विभूषति। (१।११२।४)

३. त्वमिन्द्र प्रतूर्तिष्वभि विश्वा अभि स्पृधः।
अशस्तिहा जनिता विश्वतूरसि; त्वं तूर्य तरुष्यतः॥ (८।९९।५)
अस्मिन्नेव मन्त्रे तूर्यशब्दोऽवलोकितः। मन्त्रोऽयं माध्यन्दिन—३३।६६, काण्व—३२।५।१२, कौथुम—१।३११।२।९८।७, जैमिनीय—१।३२।९ तथा शौनकीयाथर्वसंहितायामपि (२०।१०५।१ इत्यत्र) धृतोऽस्ति। सायणः 'तूर्य' इति सम्बुद्ध्यन्तं पदमुवाच। उव्वट-महीधरौ क्रियापदं (तूर्य = जहि = मारय इति) स्वीकृतवन्तौ। विचारे मम 'द्वेषो युतो न दुरिता तुर्याम् मर्त्यानाम्' (५।९।६), 'तुर्याम् दस्यून् तनूभिः' (७।९।३), 'तुर्याम् यस्त आदिशामरातीः' (६।४।५) एषां मन्त्राणां 'तुर्य' अङ्गस्य छन्दोऽनुरोधेन कृतदीर्घरूपं लोट्लकारमध्यमपुरुषैकवचनस्य वर्तते।

४. दधिर्यो धायि, स ते वयांसि, यन्ता वसूनि विधत्ते तनूपाः। (१०।४६।१)

प्रसिद्ध-दधीत्यस्य पर्यायभूतेन 'दधत्' इत्यनेन कृतवान्[1]। शौनकेनापीयमेव व्युत्पत्ति-रुदिता[2]। कात्यायनोऽपि 'दधि'शब्दस्येमामेव व्युत्पत्तिं प्रदत्तवान्; किन्तु लोक एव प्रचलितोऽयं व्युत्पत्तिरित्युक्तवान्[3]।

७४. दूर < √दु—गर्गो भरद्वाजश्च 'दूर' इत्यनेन सार्द्धं दवीयसः [4]प्रयोगेणैतस्य प्रकृतेरर्थंगतस्य ध्वनिगतस्य साम्यदिशायां सङ्केतं चकार। 'इम', 'इष्ठन्', 'ईयस्-' प्रत्ययाश्च धातुना सह प्रयुज्यन्ते[5]। एतेन सिद्ध्यति यदत्र धातुः 'दु' अभिप्रेतो वर्तते।

---

१. निरुक्तम्—२।२७ : तत्र दधिक्रा इत्येतद् (१) दधत्क्रामतीति वा। (२) दधत्क्रन्दतीति वा। (३) दधदाकारो भवतीति वा। एषां निर्वचनानां व्याख्या निरुक्तपञ्चमाध्यायस्य २६३-२६४ पृष्ठेषु प्रेक्ष्या।

२. अपास्वर-गर्मेघमा-दधत् सोऽष्ट-मासिकम्।
यत्क्रन्दत्यसकृन्मध्ये दधिक्रास्तेन कथ्यते ॥ (बृहद्देवता—२।५६ )

३. ३।२।१७१ पाणिनीयसूत्रोपरि वार्तिकं द्रष्टव्यम्। भाषायां घञ्—कृ-सृ-गमि-जनि-नमिभ्यः ( किकिनौ, लिट् च )।

४. स दुन्दुभे, स-जूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून्। (६।४७।२९)

५. पाणिनिस्तृ-( तृन्, तृच् ) प्रत्ययविशिष्टप्रातिपदिकाद् एतत्प्रत्ययविधानं विधाय पुनस्तृ-लोपं कृत्वैतादृशशब्दानां साधुत्वमकरोत्। 'तुश्छन्दसि' (अष्टा० ५।३।५९) 'तुरिष्ठेमेयस्सु' (६।४।१५४)। दवीयसादिशब्दानां प्रकृतिरूपे पाणिनिः 'दूरादि'-( तृ प्रत्ययेन स्वरूपार्थ-दृष्ट्या भिन्नप्रत्ययेन निष्पन्न-) शब्दानां 'र' आद्यंशस्य लोपं कृत्वा दूर् + ईयस्, दू + ईयस् दवीयसो व्याख्यां कृतवानस्ति। स्थूल-दूर-युव-ह्रस्व-क्षिप्र-क्षुद्राणां यणादिपरं पूर्वस्य च गुणः (अष्टा० ६।४।१५६); किन्तु पाणिनीयतन्त्रस्येयन्निजात्मिका व्यवस्था विद्यते। निम्नाङ्कितशब्दानां महर्षिकृतव्युत्पत्तिभिर्विदितो जायते यत् तेषां महर्षीणामिमे प्रत्यया धातोरेव विहिता इत्यभिप्रेतोऽस्ति। तथैतेषामर्थस्तुलनातिरिक्तः कर्तृकारकोऽपि विद्यते। यथा—१. ओजिष्ठ ( ६।१९।६, ८।९७।१०, ९।६६।१६, एषु √उज् इत्यस्मात् )। २. ओजीयस् ( ९।६६।१७, √उज् )। ३. तपिष्ठ ( ६।५।४) √तप् )। ४. तवीयस् (६।१८।४, ६।२०।३, ७।१००।३, √तु)। ५. तव्यस् (५।३३।१, ७।१००।३, तु-प्रत्ययगतेकारस्य लोपो द्रष्टव्यः)। ६. दंसिष्ठ ( १।१८२।२, √दंस् )। ७. घनिष्ठ (१०।७३।१, √घन्)। ८. पतिष्ठ ( १०।१६५।५, √पत् )। ९. प्रेष्ठ ( ८।१०३।१०, √प्री*)। १०. मंहिष्ठ (६।६८।२, ८।१।३ √मह्)। ११. यजिष्ठ (२।९।६, ६।१५।१३, √यज्)। १२. यजीयस् (२।९।४, ६।११।१, १०।५३।१, ११०।३, √यज् )। १३. यमिष्ठ (६।६७।१, √यम्)। १४. येष्ठ—(५।७४।८, √या)। १५. वरीमन् (१।१५९।२, √वृ)। १६. वरीयस् (६।७५।१८, √वृ)। १७. वहिष्ठ (४।१४।४, ६।४०।३, √वह्)। १८. वाहिष्ठ (७।३७।१)। १९. वेपिष्ठ (६।११।३, √विप् वेप् वा)। २०. शचिष्ठ (४।२०।९, ८।६६।१४, √शच् √शक्)। २१. शविष्ठ (६।१९।४, ६।६८।२, ८।७०।२

यास्कः 'दूर' इति शब्दः 'द्रु' इत्यनेन यद्वा 'दुर्+अय्' (+इ) इत्यस्मान्निष्पन्न इत्यवादात्[1]। उणादिकारेण 'दूर' इत्यस्य सिद्धिः 'दुर्+इ' इत्यनेन क्रियते[2]।

---

√शु)। २२. शोचिष्ठ (८।६०।६, √शुच्)। २३. श्रेयस् (५।६०।४ √श्रि*)। २४. सवीमन् (६।७१।२, १०।३६।१२, १०।६४।७√सू)। २५. सहिष्ठ (६।१८।४,√सह्)। २६. स्कभीयस् (१०।११।५, √स्कम्भ्)। २७. हवीमन् (१।१३१।६, √हु)।

मैकडानल्-नामको विद्वान् 'प्री'-'श्री' इत्यनयोराकारान्तरूपं क्रमशः 'प्रा'-'श्रा' इत्यनेन निष्पन्न इत्याह। दी वैदिक ग्रामर-ग्रन्थस्य ११७ पृष्ठीयोऽनुच्छेदः १३३ तथा ११८ पृष्ठे पादटिप्पणी : ४ अपि विलोकनीया। विचारे मम प्री + इष्ठ > प्रेष्ठ > प्रयिष्ठ > प्र + इष्ठ > प्रेष्ठ तथा √श्रि + ईयस् > श्रयीयस् > श्रेयस् इत्यौचित्येन मन्तव्यम्।

अद्यतनस्य 'ए' इत्यस्योच्चारणं प्राचीनकाले संयुक्त 'अ इ'-वदासीत्। तथ्यमिदं सुविदितं वर्तते। अतो वर्तमानः 'प्रेष्ठः' वैदिककाले 'प्र इष्ठ'-इतिवदुच्चारणमेति स्म। एतद्विषये मैकडॉनल्-नामकस्य विदुषः निम्नाङ्कितकथनमप्येतद्दिशां सङ्केतयति। Roots in a combine that vowel with the initial-i of the suffix toc, which however is usually to be readas two syllables. (पृष्ठम्-११६) (२) 'इदं यत्प्रेण्यः शिरो दत्तम्' (अथर्व-सं० ६।८९।१) इत्यत्र प्रयुक्तः प्रेणीशब्दोऽपि मम विचारे प्रीत्यनेन निष्पन्न-प्रयिणीशब्दस्यैवंविधाया यात्राया निष्पन्न-(प्रयिणी > प्रइणी >) प्रेणीशब्दोऽस्ति। तथायं प्रियाशब्दस्य समकक्षो विद्यते। (३) ऋग्वेदसंहितायामेतद्विकसितावस्थायाः पूर्वस्या अवस्थाया एकश्शब्दोऽस्ति प्रयियोः (प्रयियु, षष्ठ्येकवचनान्तः), शब्दोऽयं ८।१९।३७ इत्यत्रैवोपस्थितोऽभूत्। अस्य व्युत्पत्तिस्तथार्थोऽपि क्लिष्ट एव। शाकल्योऽत्र नावग्रहं कृतवान्। अयमाशयो यच्छब्दोऽयं प्र + या इत्यनेन न निष्पन्नः। यथा च निरुक्ते ४।१५ इत्यत्र दुर्गः स्कन्दश्चोक्तवान्। स्कन्दोऽस्यापरामपि व्याख्यां कृतवान्; परन्तु दुर्भाग्यात् तत्रत्यपाठो बहुभ्रष्टो दृश्यते। अथवा प्रयियोरिति सुवास्त्वा तते* विशेषणे।........प्रयियोरत्यर्थं प्रयितृभ*-सुवास्त्वा (पृ० २३३*) डॉ०लक्ष्मणस्वरूपस्तारांकितशब्दानां स्थानेषु क्रमशो नद्यास्तथा प्रयित्र्याःशब्दस्य सम्भावनां प्रकटितवान्। एतेन ज्ञायते यत् सम्भवतः स्कन्देन प्रयियुरिति प्रीत्यनेन तृप्रत्ययेन निष्पन्न-प्रयित्रीशब्दस्य समानधातुजपर्यायत्वेन गृह्यते। अत्र यकारस्य लोपो नाभूत्। (४) एतद् यण्लोपस्य प्रवृत्तेरुदाहरणं 'तितउ' < तितवु इति विद्यते। 'प्रउग' (प्रयुग < प्र + युग) अत्र तथा प्रकृतान्येषु शब्देषु एक एवान्तरो विद्यते, यदत्र गुणसन्धेरभावो वर्तते। यदा च प्रकृत-प्रेष्ठादिशब्देषु गुणो जातोऽस्ति।

१. निरुक्ते ३।१९ दूरं कस्मात्? (१) द्रुतं भवति, (२) दुरयं वा।
२. उणादिसूत्रम्—१७७ (२।२०) : दुरीणो लोपश्च।

७५. दस्म, ७६. दस्र < √दंस्—√दस् —नोधस्गौतमः 'दंस्' इत्यनेन निष्पन्नस्य दंससस्तथा √दसः आख्यातदस्यन्तीत्यस्य[1] कक्षीवद् दैर्घतमसो दस्रेण दंसनया च सह दस्युरित्यस्य[2] तथा कृष्णाङ्गिरसो दस्रेण सह दंसस इत्यस्य अगस्त्यमैत्रावरुणिः 'दंसिष्ठ', 'दस्यु' इत्यनयोः[3] 'श्यावाश्वात्रेयः' दस्र तथा दस् इत्याभ्यां निष्पन्नस्य दस्यन्तीत्यस्य[4] प्रयोगं चक्रुः। अनेन ज्ञायते यत् ते शब्देष्वेषु व्युत्पत्तिदृष्ट्या सादृश्यं मन्यन्ते। अर्थादेषु 'दंस्', 'दस्' इति प्रकृतिद्वयं परस्परसम्बद्धमस्ति। अयन्निगदि व्याख्यातो वर्तते[5] यदेषु 'दस्म'-'दस्यु'-दस्रशब्दश्च दसित्यनेन तथा 'दंसना'-दसिष्ठ-दंसस्—इत्येते 'दंस्' इत्यनेन सम्बद्धाः सन्ति।

भरद्वाजबार्हस्पत्यस्य[6] 'दस्यु --जूत' इत्यस्य स्थाने कक्षीवद् दैर्घतमसौशिजः[7] 'दंसु-जूत' इत्यस्य प्रयोगमकरोत्। हिरण्यस्तूप-आङ्गिरसः[8], विश्वामित्रगाथिनः[9],

---

१. तदु प्रयक्ष-तममस्य कर्म, दस्मस्य चारु-तममस्ति दंसः। (१।६२।६)
सनादेव तव रायो गभस्तौ; न क्षीयन्ते; नोप दस्यन्ति दस्म। (१।६२।१२)

२. इषं दुहन्ता मनुषाय दस्रा, अभि दस्युं बकुरेणाधमन्ता। (१।११७।२१)
उद्वन्दनमैरत दसनाभिः, उद्रेभं दस्रा वृषणा, शचीभिः। (१।११८।६)
रथं न दस्रा, करणा समिन्वथः। .... प्र वामत्र विद्यते दंसना भुवत्। (१।११९।७)

३. दस्रा दंसिष्ठा, रथ्या रथी-तमा (१।१८२।२)। अत्र यथा 'रथ्या' तथा 'रथीतमा' सम्बद्धावेतौ तथैव व्युत्पत्तिदृष्ट्या 'दस्र'-'दंसिष्ठ' इत्येतौ सम्बद्धौ स्त इति सूच्यते।

४. न वो दस्रा उपदस्यन्ति धेनवः। (५।५५।५)

५. ता वल्गू दस्रा, पुरु-दंससा धियाऽश्विना, श्रुष्ट्या गतम्। (८।८७।६)

६. न वीकवे नमते, न स्थिरायः, न शर्धते दस्यु-जूताय स्तवान्।
अज्रा इन्द्रस्य गिरयश्चिदृष्वा, गम्भीरे चिद् भवति गाधमस्मै। (६।२४।८)

७. स व्राधतो नहुषो दंसु-जूतः शर्धस्तरो नरां, गूर्त-श्रवाः।
विसृष्टरातिर्याति बाल्हसृत्वा, विश्वासु पृत्सु सद्मिच्छूरः। (१।१२२।१०)
शाकल्याचार्योऽस्य पदपाठं 'दम्सुजूतः' इत्याचरितवान्। श्रीविश्वबन्धुरस्य 'दंसु-जूत' इति व्याख्यामकरोत्। द्र० वैदिकपदानुक्रमकोषः १।३ पृष्ठस्य १५३३ टिप्पणीः। सर्वत्र देवतायै दंस्-इत्यस्य प्रयोगसत्त्वाद् दंस्-दस् इत्यनयोः सम्बन्धः शाकल्यस्य कालेऽविदितत्वादसौ सरलशब्दस्यापि एतावत्कल्पनापेक्षिपदपाठं कृतवान्।

८. दास-पत्नीरहि-गोपा अतिष्ठन् निरुद्धा आपः पणिनेव गावः। (१।३२।११)

९. इन्द्राग्नी नवतिं पुरोदास-पत्नीरधूनुम। साकमेकेन कर्मणा। (३।१२।६)

बभ्रु-आत्रेयः[१] तथा तिरश्ची: आङ्गिरसश्च[२] 'दासपत्नी' इत्यस्य प्रयोगस्य स्थाने वामदेवगौतमः 'दंसु-पत्नी' इत्यस्य[३] प्रयोगमकार्षीत्। अनेनाप्येवं विदितो भवति यद् 'दास-दस्यु-दंसु'-शब्दा व्युत्पत्तिदृष्ट्या परस्परसम्बद्धाः सन्ति। √दंस्-इत्यस्यार्थः -भरद्वाजबार्हस्पत्यः 'अश्विनौ' दस्र तथा पुरुशाकुतम् (अत्यधिकसामर्थ्य-वत्सु श्रेष्ठः) इति कथितवान्[४]। कृष्ण एतस्य स्थाने तौ 'दस्रपुरुदंसस्' इत्यवादीत्[५]। अनेन ज्ञायते यत् 'दंस्' इत्यस्यार्थः केनापि प्रकारेण 'शक्' इत्यस्यार्थतुल्यो वर्तते। 'शक्' इत्यस्य द्वावर्थौ स्तः —१. सामर्थ्यम्, २. दानम्। अत्रानयोः कोऽर्थोऽभिप्रेत इति विषये चर्चाकरणात्प्रागहं 'दस्र' इत्यस्यार्थोपरि किञ्चिद् विचारयामि। कण्वघोरः[६], अगस्त्यमैत्रावरुणिः[७], पुरुमील्हसौहोत्रश्च[८] 'दस्र' इत्यस्य प्रयोगं रक्षायाः सन्दर्भे कृतवन्तः। सामर्थ्यवानेव रक्षिष्यति। अतो 'दस्र' इत्यस्य प्रकृत्यर्थः सामर्थ्यं प्रतीयते। प्रकृतेऽपि 'दंस्' इत्यस्यार्थः सामर्थ्यमेव मन्तुं योग्योऽस्ति। अगस्त्यमैत्रावरुणी रक्षायाः सन्दर्भे 'दंसन'स्य प्रयोगं कृतवानप्यस्ति[९]। अतः पुरुदंससोऽर्थोऽयं जातो यदधिकतर-क्रियाशक्तिमान् तथाधिकतरकर्मवांश्च। नोधसगौतमः क्रियासामर्थ्यस्य कारणादेव देवेन्द्रं 'दस्म' इत्युवाच। तथैतत्सामर्थ्यं 'कर्मन्' तथा 'दंसस्' इत्याभ्यां शब्दाभ्यां व्यक्तं चक्रे[१०]। अतोऽर्थे सूक्ष्मान्तर[११]सत्त्वेऽपि 'कर्मन्' तथा 'दंसस्' पर्यायत्वेनावलोक्यते[१२]।

---

१. ऋ० सं० ५।३०।१५;　　२. तत्रैव—८।९९।१८।

३. तत्रैव—४।१९।७। निरुक्तस्य पञ्चमाध्यायेऽपि द्रष्टव्यम्।

४. ता वल्गू, दस्रा, पुरु-शाक-तमा, प्रत्ना, नव्यसा वचसा विवासे। (६।६२।५)

५. ता वल्गू, दस्रा, पुरु-दससा धियाऽश्विना श्रुष्टया गतम्। (८।८७।६)

६. आ तत्ते दस्र, मन्तुमः, पूषन्नवो वृणीमहे। (१।४२।५)

७. युवां गोतमः, पुरु-मील्हो, अत्रिर्दस्रा, हवतेऽवसे हविष्मान्। (१।१८३।५)

८. को वां महश्चित्त्यजसो अभीक उरुष्यतं माध्वी दस्रा न ऊती। (४।४३।४)
(पाश्चात्यटिप्पण्यां समुद्धृते (१।१८३।५) मन्त्रे 'पुरु-मील्ह' इत्यस्य नाम्ना सहैतदाशयस्य चर्चासत्त्वाद् विदितो जायते यदृग्वेदस्य ४।४३ सूक्तं प्रथममण्डलीयसूक्तात्प्राचीनो विद्यते। अतोऽगस्त्यमैत्रावरुणेरपेक्षया पुरुमील्ह-सौहोत्रः प्राचीनोऽस्ति।

९. अया धिया मनवे श्रुष्टिमाव्या साकं नरो दंसनैरा चिकित्रिरे। (१।१६६।१३)

१०. तदु प्र यक्ष-तममस्य कर्म, दस्मस्य चारु-तममस्ति दंसः। (१।६२।६)

११. कर्मनित्यत्र क्रियमाणतायाः प्रमुखत्वमस्ति। दंसनित्यत्र शक्तिमत्तायाः प्रधानत्वम्। अन-पेक्षितादर्थाद् यथातथा कर्म 'दंसस्' नास्ति; अपि तु शक्तिप्रचण्डतायुक्तमेव कर्म 'दंसस्' इति कथ्यते।

१२. द्र० निघण्टुः—२।१।३, निरुक्तस्य पञ्चमाध्यायस्य २७४ पृष्ठम्।

'दस्र' इत्यर्थस्य पुष्टिरगस्त्यमैत्रावरुणेरनेन सह ✓ कृधातोः प्रयोगेणापि[1] जायते। अतो ✓ 'दस्' इत्यस्यार्थः किमपि करणे समर्थभवनन्तथा परिणामतः 'दस्म', 'दस्र' इत्यनयोः किमपि कर्तुं समर्थवानित्यर्थो भवितुमर्हति। दंसिष्ठस्यार्थोऽधिकसमर्थवानस्ति। 'दंसना', 'दंसस्' एवंप्रकारकस्य सामर्थ्यस्याथवा सामर्थ्यसाध्यकार्यस्य वाचको वर्तेते।

'दस्यु–दास' अयमेवार्थोऽनयोर्दस्युदासयोरपि भूतवान्। एतस्मै—असुर-(शक्तिशाला[2]) शब्दस्य कृतप्रयोगोऽपि अस्यैवार्थस्य सूचको वर्तते; परन्त्वसुर-वत्—अनयोरप्यकल्याणकारकस्य भावना पूरिताभवत्—यदा च 'दस्म'-'दस्र' इत्यनयोर्देवतायै प्रयुक्तत्वादुभाविमौ तद्भावनया विरहितावभूताम्। परिणामोऽयम-भवत्—यदेतत् सम्बद्धधातवोऽपि अर्थस्य दृष्ट्या समर्थभवनार्थे शत्रुक्षीणकरणार्थे वा परिणतिं गतवन्तः। ये सामर्थ्यवत्वात्कदापि दस्युरित्युच्यन्ते स्म, कालान्तरे तेषां सम्बन्धः 'उपक्षय'-कर्मरूपे 'दस्' इत्यनेनावतिष्ठत्। 'दस्म'-'दस्र' इत्याभ्यां कर्तृत्वमेवावतिष्ठत्। अनन विवरणेन ज्ञायते यद् दंस्-दस्-धातू समानार्थकौ। मम विचारस्त्वेतावानस्ति यद् दंस् (सानुस्वारः) धातुः प्राचीनो वर्तते। दस्-धातुस्तस्माद्विकसितं रूपमस्ति। (१) दंस्—इत्यस्य दर्शनं चतुर्षु[3] शब्देषु केवलं स्वरादिप्रत्ययेष्वेव भवति। यदा च दस् (अनुस्वाररहितस्य) 'अ', 'अत्' ∠शतृ, आन ∠शानच् प्रत्ययातिरिक्ति-अञ्जनादि-('म', 'मत्', 'म्य', 'यु', 'र') प्रत्ययैर्निष्पन्नपञ्चसु[4] शब्देष्वपि दर्शनं प्राप्यते। (२) दंस् (सानुस्वारस्य) इत्यस्याख्यातरूपं न लभ्यते। यदा च दस् (निरनुस्वारस्य) इत्यस्य चत्वारि रूपाणि[5] मिलन्ति। अतः सानुस्वारस्य दंस् इत्यस्य प्रयोगः सीमितः क्षीणश्च यदा भवति स्म, तदा निरनुस्वारस्य दस् इत्यस्य प्रयोग उन्नतिपथमायाति स्म।

'दस्यु'-'दास' इत्याभ्यां सह दस् (निरनुस्वारस्य) सम्बन्ध एतत्सुबद्धतां गतो यत् परवर्तिकालेऽयं 'दास्'शब्दः (दानाद्भिन्नरूपे) न केवलं स्वतन्त्रधातुरेव जातोऽपि तु ऋग्वेदसंहितायामनन्तरमृषिर्मुद्गलभार्म्यश्वस्तु[6] दासशब्दस्य व्युत्पत्तिमनेनैव

---

१. किमत्र दस्रा कृणथः ? किमासाथे ? जनो यः कश्चिद्-हविर्महीयते।
अति क्रमिष्टं जुरत पणेरसुं, ज्योतिर्विप्राय कृणुतं वचस्यवे॥ (१।१८२।३)
तुलनीयम्—दस्मत्कृणोष्यध्वरम्। (१।७४।४)

२. द्र० निरुक्तमीमांसा, पृ० ३६६-३६७।

३. दंसन्, दंसस्, दंसि, दंसिष्ठ।

४. दस्म, दस्मत्, दस्म्य, दस्यु, दस्र।

५. दसत्, दसयन्त, दस्यति, दस्यन्ति।

६. ऋ० सं० १०।१०२।३।

दास्-शब्देनामन्यत इति प्रतिभाति। ऋग्वेदसंहिताया मण्डलविकासदृष्ट्याऽप्येतादृशमेव तथ्यं निस्सरति। √दास्—इत्याख्यातरूपे प्रयोगो दानार्थे वारद्वयं मण्डलेऽष्टमे[1] तथा 'दास्वत्'शब्दस्याष्टसु[2] प्रयोगेषु प्रथममण्डले द्विकृत्वस्तथा दशममण्डले वारमेकमर्थादृग्वेदसंहिताया दशसु प्रयोगेषु—अर्वाचीनेष्वेषु मण्डलेषु त्रिधाप्रयोगं प्रस्कण्वकाण्वः[3], परुच्छेपदैवोदासिस्तथा[4] तार्क्ष्यसुपर्णः[5] इत्येते महर्षयः कृतवन्तः। हानिकारकेऽर्थेऽष्टसु प्रयोगेषु गौतमराहूगणः[6] प्रथमे भरद्वाजबार्हस्पत्यः षष्ठे[7] वशिष्ठ-मैत्रावरुणिश्च सप्तमे मण्डले[8] —एकधैव प्रयोगमाचरितवन्तः। तदैकाकी भिषगाथर्वणः[9] मुद्गलभार्म्यश्वः[10] सुदास्-पैजवनस्तथा[11] शास-भरद्वाजः[12], इत्येतैः सर्वैर्मिलित्वा पञ्चधा दशमे मण्डले प्रयोगं कृतवन्तः।

यास्कः कर्मन्नित्यस्य पर्यायभूतस्य दसीत्यस्य व्याख्यां √दंस् इत्यनेन तथा दासस्य व्याख्यां दसित्यनेन[13] चक्रे। 'दस्र' इत्यस्यार्थं दर्शनीयमित्युक्तवान्[14]। पाणिनीयधातुपाठे 'दंस्' इति दर्शनार्थे तथा सर्पादिना कर्तनार्थे वर्तते[15]। उणादिकारः 'दस्म' इत्येतं 'दस्र' इत्येतञ्च (ज्ञानेन्द्रसरस्वती-वासुदेवदीक्षितयोरनुसारं[16] 'दस्' इत्यनेनोपक्षयार्थकेन धातुना तथा दासं सानुस्वारेण) दंस्-[17]धातुना निष्पादितवान्।

---

१. अध प्लायोगिरति दासदन्यानासङ्गो अग्ने, दशभिः सहस्रैः। (८।१।३३)

२. ऋ० सं० १।४८।१; १।१२७।१; २।४।३; ४।२।७; ५।९।२; ६।३३।१; ६।६८।५-१०।

३. सह वामेन न उषो, व्युच्छा दुहितर्दिवः। सह द्युम्नेन बृहता विभावरि, राया देवि दास्वति। (ऋ० सं० १।४८।१)

४. अग्निं होतारं मन्ये दास्वन्त वसुं, सूनुं सहसो, जात-वेदसम् (१।१२७।१)।

५. अयमस्मासु काव्य ऋभुर्वज्रो दास्वते। (१०।१४४।२)

६. यो नोऽग्नेऽभि-दासत्यन्ति, दूरे पदीष्ट सः। अस्माकमिदवृधे भव। (७।७९।११)

७. ऋ० सं० ६।५।४।

८. इन्द्रा-सोमा, दुष्कृते मा सु-गं भूद् यो नः कदाचिदभि-दासति द्रुहा। (७।१०४।७)

९ उपस्तिरस्तु सोऽस्माकं यो अस्माँ अभि-दासति। (१०।९७।२३)

१०. अन्तर्यच्छ जिघांसतो वज्रमिन्द्राभि—दासतः (१०।१०२।३)।

११. यो न इन्द्राभि-दासति स-नाभिर्, यश्च निष्ट्यः। अव तस्य बलं तिर। (१०।१३३।५)

१२. वि रक्षो, वि मृधो जहि; वि वृत्रस्य हनू रुज। वि मन्युमिन्द्र, वृत्र-हन्न, अ-मित्रस्याभि-दासतः। वि न इन्द्र, मृधो जहि, नीचा यच्छ पृतन्यतः। यो यस्माँ अभि-दासत्यधरं गमया तमः ॥ ४ ॥

१३. निरुक्ते—४।२५ : दंसयः कर्माणि—दसयन्त्येनानि।

१४. तत्रैव—२।१७ : दासो दस्यतेः—उप-दासयति कर्माणि।

१५. तत्रैव—६।२६ ; १६. माधवीयधातुवृत्तिः—१०।१४१ : दसि दर्शन-दंसनयोः।

१७. उणादिसूत्रम्—१४२ : इषि-युधि-इन्धि-दसि-श्या-धू-सूभ्यो मक्।

७७. दात्रम्८√दा—दात्रशब्दः दा-धातुना निष्पन्नो वर्तते। अयं स्वतः स्पष्टः; किन्तु दा-धातुरनेकार्थः। कस्मिन्नर्थे वर्तमानेन दा-धातुना निष्पन्नोऽयं शब्द इति स्पष्टीकरणं महत्त्वपूर्णं विद्यते।

लौकिके 'दात्र'शब्दः कर्तनार्थे कथ्यते। अर्थात् कर्तनार्थकेन दा-धातुना निष्पन्नः। यास्कः कर्तनविशेषस्य वस्तुनो (औजार) रूपे दात्रेकस्य चर्चां व्यवहृतवान्। पूर्ववर्तिदेशे लवनार्थके[१] प्रयुक्तस्यं 'दा' इत्यस्योत्तरे प्रयुज्यमानस्य दात्रमिति नामपदमस्ति[२]। अस्मिन्नर्थे 'दा' इत्यनेन निष्पन्नस्य 'दातो'त्यस्य प्रयोगं पराशर-शाक्त्यः[३] तथा इष-आत्रेय इत्युभौ कृतवन्तौ[४]। कुरुसुतिः काण्वः दात्रमित्यस्य प्रयोग-मपि कर्तनक्रियायाः करणरूपेऽकरोत्[५]। अन्यदिशायां दानार्थेऽपि दातीत्यस्य प्रयोगं वामदेवगौतमः[६], प्रतिभानु-आत्रेयः[७], भरद्वाज[८]बार्हस्पत्यश्चाकार्षुः। लौकिके एतत्काठिन्यकारणादेव कर्तनक्रियया सम्बद्धशब्दो दात्रम्, तथा दानक्रियया सम्बद्धः शब्दो दत्रशब्दश्च प्रचलने ह्यवतिष्ठत[९]। वैदिक-दात्रशब्दः कर्तनक्रियायाः करणार्थे तथा दानक्रियायाः कर्मणि प्रचलित आसीत्।

---

१. उणादिसूत्रम्—६८८ (५।१०) : दंसेष्ट-टनौ, न आ च। √दंस् इति विपधरैः कर्तनाव-लोकनयोः दंस्-धातुः चौरादिक इति ज्ञानेन्द्रसरस्वती प्रतिपादितवान्। वासुदेवदीक्षित-स्त्वेनं 'दसि सेवने' इत्यवादीत्; किन्त्वर्थोऽयं धातुपाठे नोपलब्धः। द्र० गजाननबालकृष्ण-पल्सुले 'ए कङ्कार्डेंस ऑफ संस्कृत धातुपाठाज्' पृ० १९९ इत्यत्र सेवनार्थे उल्लिखितो धातुः।

२. लवनमित्यस्यार्थः कर्तनमिति भवति। अद्येमौ कृषिकर्मणि धान्यादेः लुनाई, लावनी, कटाई, इत्यादिशब्दार्थेषु रुढौ जातौ। लवनकार्यकरणवस्तु (औजार) हरियाणायां 'दर्शती'-काष्ठछेदकसाधनं 'दाँत'-'दराँत' इति कथ्यते। अतो लवनशब्दस्यार्थः कृषिकर्तनं सामान्य-कर्तनं वार्थ इति न स्पष्टः।

३. निरुक्ते—२।२। अथापि प्रकृतय एवैकेषु भाष्यन्ते, विकृतय एकेषु। दातिर्लवनार्थे प्राच्येषु, दात्रमुदीच्येषु।

४. यद्वात-जूतो वना व्यस्थाद्, अग्निर्ह दाति रोमा पृथिव्याः। (१।६५।४)

५. स हि ष्मा धन्वाक्षितं दाता न दात्या पशुः। (५।७।७)

६. तवेदिन्द्राहमाशसा हस्ते दात्रं चना ददे। (८।७८।१०)

७. दाति प्रियाणि चिद् वसु। (४।८।३)

८. वाजी स्तुतो विदथे दाति वाजम्। (६।२४।२)

९. कर्तन-शोधनार्थकधातूनां पर्युदासं कृत्वा पाणिनिः 'दा' इत्यस्मात् तकारादिप्रत्यये परे 'दा' इत्यस्य ददादेशं चकार। येन दानार्थक-दा-धातुना 'दत्त्र' इति सिद्ध्यति। तथा कर्तनार्थक-दाधातुना दात्रमिति सिद्ध्यति। द्र० अष्टाध्यायी—१।१।२० : दा-धा-घ्व-दाप्, ७।४।४६: 'दो दद्घोः'।

'दात्र' < दा √दाने–भरद्वाजबार्हस्पत्यो दानार्थक-दा-धातोः कर्त्रर्थे निष्पन्न-'दामन'नाम्नस्तथा कर्त्रर्थक-'दाः' (म० पु० ए० व०) इत्याख्यातातिरिक्त—एतदर्थक-'दाश्' इत्यनेन निष्पन्न-कर्त्रर्थक-दाश्वस्—इत्यनेन सह रेवणासो विशेषणरूपे कर्मार्थक-दात्रस्य प्रयोगमेतद्व्युत्पत्तिं मनसि निधायैव सम्पादितवान्[1]। वामदेवगौतमः 'दा' इत्यस्य पाणिनेरनुसारं जौहोत्यादिकरूपेण[2] सह तथा वशिष्ठमैत्रावरुणिः 'दातृ' इत्यनेन[3] साकं दात्रस्य प्रयोगं व्यवहारे रक्षितवान् । द्वाविमौ प्रयोगावुपर्युक्तव्युत्पत्ति-स्तदभिप्रेतेति सूचकौ स्तः । अतो दात्रशब्दो देयधनवाचको विद्यते ।

उत्तराधिकारिषु (दायादेषु) अस्य धनस्य विभाजनं क्रियते । सम्भवतः कारणे-नानेनैव रोथ्महोदयः—इममवखण्डनार्थक[4]-दा-धातुना निष्पन्नममन्यत[5] । वशिष्ठः अवखण्डनार्थक-दा-धातुना निष्पन्नदितिशब्देन सह वार्य-वरणीयदानस्य चर्चां दातेः प्रयोगं विधाय कृतवान्[6] । सम्भवतः प्रयोगोऽयं दात्रस्यावखण्डनीयबोधे सहायको भवेत्; किन्त्वत्रापि दानार्थक-'दाति' इति विख्यातमाख्यातमेव वर्तते। अयमेत-पाश्चात्त्यमन्त्रे प्रयुक्तायां 'भगवरणीयं दद्यात्'[7] इति प्रार्थनायां 'दातु' इत्यस्य प्रयोगेण स्पष्टो विद्यते ।

वैदिकभाषायां द्वौ दात्रशब्दौ विद्येते—(१) लवन्साधनभूतः आद्युदात्तः ऋग्वेदे कुरुसुति-काण्वेन[8] प्रयुक्तः। (२) दातव्यधनात्मकः अन्तोदात्तः ऋग्वेदे पञ्चसु प्रयोगेषु द्वादशकृत्वः समायातः[9] । पाणिनिः प्रथमस्य व्युत्पत्तिं कर्तनार्थक √दाधातोः

---

१. सुदामन् तद्रेक्णो अप्रमृष्यमृजिश्वने दात्रं दाशुषे दाः । (ऋ० सं० ६।२०।७)

२. उतो हि वां दात्रा सन्ति पूर्वा, या पूरुभ्यस्त्रसदस्युर्नितोशे ।
क्षेत्रासां ददथुरुर्वरासां घनं दस्युभ्यो अभिभूतिमुग्रम्। (तत्रैव—४।३८।१)

३. असि भगो असि दात्रस्य दाताऽसि मघवा मघवद्भ्य इन्द्रो । (तत्रैव —९।९७।५)

४. माधवीयधातुवृत्तिः—४।४० : दो अवखण्डने ।

५. सैन्त्पीतस्वर्गसंस्कृतवोतेर्बुख् ।

६. त्वमग्ने वीरवद्यशो देवश्च सविता भगः । दितिश्च दाति वार्यां । (ऋ०सं० ७।१५।१२)

७. स नो राधाँस्या भरेशानः सहसो यहो । भगश्च दातु वार्यम् । (तत्रैव—७।१५।११)

८. तवेदिन्द्राहमा-शसा हस्ते दात्रं चना ददे । (तत्रैव—८।७८।१०)

९. दात्रम्—१।११६।६; १६६ १२ १८५।३; ३।५४।१६; ६।२०।७; ८।४३।३३; १०।६९।४। दात्रस्य—८ ४४।१८; ९।९७।५५ । दात्रा—४।३८।१ । दात्राणि—६।६१।१ । दात्रात्—७।५६।२ ।

करणे 'त्र' (ष्ट्रन्) प्रत्ययेनाकथयत्[1] । उणादिकारोऽर्थनिर्देशं विनैव 'दा' इत्यस्मात् 'त्रन्'प्रत्ययस्य विधानं कृत्वा वैदिकदात्रस्य व्युत्पत्तिं व्याजहार[2] । टीकाकाराणामनुसारमयमपि 'दा'-कर्तनार्थकाऽस्ति[3] । औणादिकदात्रस्याद्युदात्तस्वरं विलोकयन्—अर्थोऽयं साधुरेव । धनार्थकदात्रस्य व्युत्पत्तिविषये वैयाकरणा मौनमवलम्बितवन्तः ।

७८. दानु < √ दा (दाने)—विश्वमनस्-वैयश्वो मित्रावरुणानां स्तुतौ दानार्थकयम्धातुना सह कर्म विभक्त्यन्त-'दानु' इत्यस्य प्रयोगेणैकस्यां दिशि[4] दानु-शब्दो दानकारणाज्जात इति सूचितवान्—अन्यदिशायां[5] दाधातुः यमधातुश्च परस्परं समीपतां गत इति व्यक्तवान् । यम्—इत्यस्यार्थो रोधकोऽपि[6] वर्तते । अतोऽत्र 'दानु' इत्यस्य साहचर्याद् यमो दानार्थकत्वमपि सुस्पष्टं विद्यते । मनुर्वैवस्वतोऽपि यमा सह दाश्वसः प्रयोगाद् यमोऽर्थनिर्वचनं कृतवानस्ति[7] ।

---

१. पाणिनिसूत्रम्—३।२।१८२ : दाम्नी-शस्-यु-युज्-स्तु-तुद्-सि-सिच-मिह-पत-दश-नहः करणे । अत्र सानुबन्धः दाप् । परवर्तिनकारेण सन्धौ 'दाम्' इत्यस्य ग्रहणं 'दाप् लवने' ( मा० धा० वृ० २।४९) इत्यस्य ग्रहणनिमित्तम् । परिभाषा-द्र० तदनुबन्धकग्रहणे नातदनुबन्धकस्य । प्रत्ययघटक-'न्' इत्यनुबन्ध आद्युदात्तरचनायै विद्यते । पा० सू० ६।१।१९७ : ञ्नित्यादिर्नित्यम् ।

२. उणादिसूत्रम्—६०९ (४।२६९) दादिभ्यश्छन्दसि (त्रन्) । अत्र—छन्दसीति कथनेन प्रतीयते यत् सूत्रेणानेन लौकिकेऽप्रयुक्तस्य तथा वैदिकेषु बहुप्रयुक्तधनार्थक-दात्रस्यैव व्युत्पत्तिरभिप्रेताऽस्ति । लवनार्थकदात्रशब्दस्तूभयोः साधारण्यं गच्छति । तथा तत्र न किमपि वैचित्र्यम् । यदा तु धनार्थक-'दात्र'शब्दश्छन्दोमात्रगोचर एवास्ति, पाणिनीयतन्त्रादप्रसिद्धोऽपि वर्तते । पाणिनीयतन्त्रे दत्रशब्दः सिद्धो वर्तते, न तु दात्रशब्दः । लवनार्थे पाणिना दात्रस्य व्युत्पत्तिः कर्तव्या नात्यावश्यकी ।

३. तत्त्वबोधिनी : 'दाप् लवने' एवमादिभ्यस्त्रन् । बालमनोरमा—'दाप लवने' इत्यादिभ्यस्त्रन् स्याच्छन्दसि ।

४. सं या दानूनि येमथुर्दिव्याः पार्थिवीरिषः । (ऋ० सं० ८।२५।६)

५. पाणिनिरपि दाणः स्थाने यच्छादेशं कृत्वा तथ्यमेतत् स्वीकृतवान् ।
पा० सू० ७।३।७८ : पा-घ्रा-ध्मा-स्था-म्ना-दाण ..... सदां पिब-जिघ्र-धम-तिष्ठ-मनयच्छ ..... सीदाः ।

६. माधवीयधातुवृत्तिः—१।९६४—'यम उपरमे' 'वाचंयम', तथा 'संयम' अनयोः शब्दयोरर्थोऽयं स्पष्टः । दीर्घतमस्-औचथ्यस्य निम्नप्रयोगोऽप्यनेनैवार्थेन सम्बद्धोऽस्ति । 'रश्मिरिव यो यमति जन्मनी उभे' (१।४१।११) । भरद्वाजबार्हस्पत्यस्य निम्नप्रयोगोऽपि द्रष्टव्यः । सं या रश्मेव यमतुर्यमिष्ठा द्वा जनाँ अ-समा बाहुभिः स्वैः । (६।६७।१)

७. यद्वाऽभिपित्वे असुरा ऋतं यते छर्दिर्येम वि दाशुषे । (८।२७।२०)

यास्कः 'दानु'शब्दस्य व्याख्यां दानार्थे दात्रर्थेऽपि विहितवान्[१]। उणादिकारस्यानुसारं दानुशब्दोऽयं 'दा'धातुना निष्पन्नो वर्तते[२]। टीकानुसारमयं 'दा'-दाने इत्यर्थकोऽस्ति। तथा नु-प्रत्ययः कर्त्रर्थको विद्यते। अतो दानुशब्दः दातृ-पर्यायभूतः[३]।

ऋग्वेदसंहितायामयं कर्त्रर्थे (दातार-कर्मण्यर्थे धने) प्रयुक्तोऽस्ति। दात्रेण तुलनीयः। वशिष्ठमैत्रावरुणिरेकस्मिन्नेव मन्त्रे 'दानुद', 'दानुपिन्व' इत्यनयोः शब्दयोः दानुशब्दस्य प्रयोगमकार्षीत्[४]। प्रथमो दानुः कर्मार्थकोऽस्ति। द्वितीयः पिन्व्–इत्यस्य कर्तास्ति। विश्वमनस्-वैयश्वः 'दानु–द' इत्याशयं[५] तथा सव्याङ्गिरसः 'दानु-पिन्व' इत्याशयं विग्रहवाक्येन[६] प्रददतुः। सायणः 'दानु-द्', 'दानुपिन्व्' इत्यनया-र्व्याख्यां कर्त्रर्थक-'दातृ' इत्यनेनाशंसितवान्[७]। उपर्युक्तर्षीणामाशयात्प्रतिकूलत्वाच्चिन्त्य-मिदं व्याख्यानम्।

७९. दामन् < √दा—'दामन्'शब्दो दाधातुना व्युत्पन्नो वर्तते। इदं शब्दनिर्वचनमापात-स्पष्टमस्ति; किन्त्वस्यार्थनिर्वचनकरणमप्यावश्यकम्। दीर्घतमस् औचथ्योऽस्यार्थं रज्जुशब्देन (हिन्दी दाम, दावणी, दामण) सह बन्ध-नार्थक-'सम् + दा' इति सिद्धेन सन्दानशब्देनास्पष्टयत्[८]। प्रभुवसु-आङ्गिरसो धनदान-प्रसङ्गे व्याख्यामस्य दानार्थक-दाधातुना चक्रे[९]। दात्रर्थे 'दामन्' इत्यस्य प्रयोगः ऋग्वेदेऽनेकधाऽभवत्। भरद्वाजबार्हस्पत्यस्य दानार्थक-दाधातुना निष्पन्न-दात्रेण तथा 'दाश्' इत्यनेन साकं 'सुदामन्'शब्दस्य प्रयोगः साधुतया व्युत्पत्तिमिमां सुस्पष्टां कुरुते[१०]।

---

१. निरुक्ते—२।१३, ११।२१।

२. उणादिसूत्रम्—३१२ (३।१२) : दाभाम्यां नुः।

३. सि० कौ० उणादिसू० ३१२। दानुर्दाता। तत्त्वबोधिनी : डुदाञ् दाने। दानुर्दातरि, विक्रान्ते। इति मेदिनी।

४. प्रदानु दो दिव्यो दानु-पिन्व ऋतमृताय पवते सु-मेधाः। (ऋ० सं० ९।९७।२३)

५. ऋ० सं० ८।२५।१६।

६. तत्रैव—१।५४।७।

७. ऋग्वेदभाष्ये –९।९७ २३। दानु दा = दातृभ्यो धनादीनां दाता। ···· दानुपिन्वः। पिवि सेचने।

८. यद्वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रज्जुरस्य। (ऋ० सं० १।१६२ ८)

९. स आ गमदिन्द्रो, यो वसूनां चिकेतद्दातुं दामने रयीणाम्। (तत्रैव—५।३६।१)

१०. सु-दामन्, तद्रेक्णो अ-प्र-मृष्यमृजिश्वने दात्रं दाशुषे दाः। (तत्रैव—६।२०।७)

८०. √दिप्स् < दभ्—दीर्घतमस्-औचथ्यस्तथा वामदेवगौतमः[1] कूर्म-गार्त्समदः[2], वशिष्ठमैत्रावरुणिश्च[3] दभ् इत्यस्य तथानेनैव निष्पन्न-दिप्सस्य युगपत्प्रयोगं विधायैतत्सम्बन्धमद्योतयत्। पाणिनीयतन्त्रोऽनया व्युत्पत्त्या √दिप्सातिरिक्तस्य [4]माध्यन्दिनमैत्रा[5]वरुणीसंहितयोरेकधैव प्रयुक्तस्य धिप्सस्यापि निष्पत्तिर्भवति[6]।

८१. दीर्घ < द्राघ्—सुमित्रवाध्र्यश्वः 'दीर्घ' तथा 'द्राघ्मन्' इत्यस्य युगपत्प्रयोगेणेमां व्युत्पत्तिमसूचयत्[7]। यास्केनापीयमेव व्युत्पत्तिः प्रदत्ता[8]। 'द्राघ्' प्राचीनधातुर्विद्यते। ऋग्वेदेऽस्य प्रयोगः १. दीर्घ, २. द्राविष्ठ, ३. द्राघीयस्, ४. द्राघ्मन्, इत्येतेषु शब्देष्ववशिष्टो लभ्यते।

८२. दुघ < √ दुह् परुच्छेपदैवोदासिः 'सर्वदुघा' तथा 'दोहते' इत्यनयोरेकत्रीकृतप्रयोगेण व्युत्पत्तिमिमां सूचितवान्[9]। अत्र घकारवत्-हकारवत् प्रकृतिविशेषे कस्यचित्सम्बन्धस्य ज्ञानं सुस्पष्टं भवति।

'दुघ्' कवर्गचतुर्थान्तोऽयं प्राचीनः प्रतीयते। तथा दुह् (कण्ठ्य) महाप्राणोष्मवान् अर्वाचीनः प्रतिभाति। यदोष्मान्तः दुह् अधिको विद्यते, तदा (१) दुघकण्ठ्यान्तस्याख्यातरूपं किमपि ऋग्वेदे नास्ति। (२) दुघान[10] इत्यस्य प्रयोगः १/३/१० मण्डलेष्वेकधा तथा 'दुहान' इत्यस्य प्रयोगः २-३, ६-१०मण्डलेषु मिलित्वा त्रयोदशकृत्वोऽभवत्[11]। अनेन विदितो भवति यदृग्वेदीयकाले घकारवद्रूपं ह्रासतां गच्छति स्म तथा तत्स्थानं हकारविशिष्टं रूपं गृह्णाति स्म।

---

१ दिप्सन्त इद्रिपवो नाह देभुः। (ऋ० सं० १।१४७ ३)

२. त आदित्यास उरवो गभीरा अ-दब्धासो दिप्सन्तो भूर्यक्षाः। (तत्रैव २।२७।३)

३. इन्द्रं दिप्सन्ति दिप्सवोऽदाभ्यम्। (तत्रैव—७।१०३।२०)

४. द्रष्टव्यम्—धिप्सात् (तै० मै० काठ०, दिप्सात्) विश्वबन्धोः कोषे धिप्सात्, मा० शतपथे (२।६।३ १०) सूचितः। वा० सं० इत्यत्र न सूचितः।

५. विलोकनीयम्—४।१५।१७ (२४८)।

६. प्रेक्षणीयम्—पा० सू० (७।४।५६) दम्भ इच्च।

७. वि प्रथतां देव-जुष्टं तिरश्चा दीर्घं द्राघ्मा सुरभि भूत्वस्मे। (१० ७०।४)

८. अवलोकनीयम्—निरुक्तम्–२।१६ : दीर्घं द्राघतेः।

९. तुभ्यं धेनुः सर्वदुघा विश्वा वसूनि दोहते। (ऋ० सं० १।१३४।४)

१०. ऋ० सं० १।१००।३; ३।३१।१०; १० ६७.६।

११. ऋ० सं० २।२।९; २।३२।३; ३।१।१४; ३.५८ १; ६।२८।१; ७।४१।७; ७ ४३।४; ७।८० ३; ८।१००।११; ९।४२.४; ९।१०७।५; १०।६५।६; १०।१४९।४।

८३. दृढ<दृंह—गोपुक्तिन् तथा अश्वसूक्तिन्निति काण्वायनौ[1] तत्रापि च विश्वमनस्-वैयश्वः[2] अकर्मकेन √दृंह् इत्यनेन कर्त्रर्थे दृढ इत्यस्य व्युत्पत्तेः सङ्केतं प्रदर्शितवन्तः। एषां प्रयोगेग ज्ञायते यत् 'दृढ' इत्यत्र ढकारः केवलं हकारस्य स्थाने नास्ति, प्रत्युत व्यञ्जनान्तरेण तकारेण योगत्वाज्जातः। अन्यथा हकारस्य पश्चाज्जाते स्वरे 'दृंहित' इति परिवर्तितरूपवन्न किमपि तत्र परिवर्तनं जातम्। पाणिनेरनुसारमयं दृढशब्दः दृंह्-धातोः क्तप्रत्यनेन विशेषणस्य रूपे सिद्धो वर्तते[3]।

८४. द्यु< √ दिव्—वामदेवगौतमो दिनवाचकस्य 'द्यु' इत्यस्य व्युत्पत्तिं कान्तिमद्दिव्-धातोरशंसत्[4]। अत्र सम्प्रसारणज्ञानं सुस्पष्टं विद्यते।

८५. द्वर् ८६. द्वर ८७. द्वार् < वृ—ऋग्वेदसंहितायामेते त्रयः शब्दाः कपाटघटितद्वारार्थे प्रयुक्ता अभवन्। अकारान्त-द्वारशब्दोऽस्यैव परिवर्धितरूपत्वेन प्रतीयते। एषां सर्वाधिकोक्ता व्युत्पत्तिः 'वृ' आच्छादनार्थक-धातोः कथिताऽस्ति। सव्य आङ्गिरसः[5], सदा पृण आत्रेयः,[6] वशिष्ठ-मैत्रावरुणिः,[7] ब्रह्मातिथिकाण्वः[8], अयाश्व आङ्गिरस[9], कश्यपमारीचश्चैतैः शब्दैः सह 'वृ' इत्यस्य प्रयोगमाचरितवन्तः। एभिः कृतः प्रयोग एषां मते एषां शब्दानामुपर्युक्ताया व्युत्पत्तेः सूचको वर्तते। यास्केन 'द्वार' इत्यस्य निर्वचनत्रयं दत्तम्[10]। (१) जव् ( √जू ) इत्यस्मात्,

---

१. इन्द्रेण रोचना दिवो दृळ्हानि दृंहितानि च। (ऋ० सं० ८।१४।९)

२. दृळ्हश्चिद् दृह्य मघवन्, मघ-त्तये। (तत्रैव—८।२४।१०)

३. अष्टा० ७।२।२० : दृढः स्थूल-बलयोः।

४. दोषा वस्तर्दीदिवांसमनु द्यून्। (ऋ० सं० ४।४।८)

५. स हि द्वरो द्वरिषु वव्र ऊधनि चन्द्र-बुध्नो मद-वृद्धो मनीषिभिः। (तत्रैव—१।५२।३)

६. अपा-वृत व्रजिनीरुत् स्वर्गाद वि दुरो मानुषीर्देव आवः। (तत्रैव—५।४५।१)

७. अयमु ते सरस्वति, वसिष्ठो द्वारवृतस्य सुभगे व्यावः। (७।९५।६)

८. उत नो दिव्या इष, उत सिन्धुरहर्विदा। अप द्वारेव वर्षथः। (तत्रैव-८।५।२१)सायण-विश्वबन्ध्वोर्मतेऽत्र 'वर्षथः' √वष्-इत्यनेन निष्पन्नः। परन्त्वस्या व्याख्यायां 'द्वारमघो वर्षति' इत्यर्थेन किमप्यौचित्यम्। अतो वृ-धातोः लोट्लकारस्य मध्यमपुरुषस्य द्विवचने रूपमिदं भवितुमर्हति। द्वारा इत्यपि द्वार इत्यस्य तृतीयैकवचने प्रतीयते। एवं प्रयोगः ऋग्वेदे ७।९५।६; १।४८।५ तथा ९।१०।६ इत्यत्राप्युपलब्धः।

९ विनो राये दुरो वृधि। (ऋ० सं० ९।४५।३ तथा ९।६४।३)।

१०. निरुक्ते—८।९ : द्वारो i. जवतेर्वा ii. द्रवतेर्वा iii. वारयतेर्वा।

(२)√द्रव् (द्रू) इत्यस्मात्, (३) वारि (<वृ[१] ) इत्यस्मात्। तृतीयनिर्वचने 'वृ' इत्यनेन निष्पन्न वार् इत्यस्यादौ 'द्' इत्यस्य योगेन द्वार् इत्यभिप्रेतत्वेनावलोक्यते[२]। परवर्तिकाले शब्दानामेषां सिद्ध्यै वैयाकरणैः 'द्वृ' इत्यस्य कल्पिता कल्पना।[३]।

८८. द्वार् <√ऋ—प्रस्कण्वकाण्वः,[४] पराशरशाक्त्यः,[५] असितकाश्यपश्च[६] वि+ऋ इत्येतेन सह 'द्वार्' इत्यस्य प्रयोगं समाचरितवन्तः। एतेन प्रतीयते यदेते विद्वांसो द्वार्-शब्दम् 'ऋ' इत्यनेनासाधयन्। तथा 'ऋ' इत्यत्र वकारमागमेनानीय 'वृ' इति निष्पादितवन्तः[७]।

८९. द्वीप<द्वि+अप्—अगस्त्यमैत्रावरुणिः द्वीपेन सहापः प्रयोगेण[८] सूचितवानिदं यत् 'द्वीप' इत्युत्तरपदम्—'अप्' विद्यते। पाणिनिरपि द्वि+अप्>द्वीप इति व्युत्पत्तिं चकार[९]। यास्कस्तु द्वीपस्य साक्षाद् व्याख्यां नाकरोत्; किन्तु द्वीपेन साम्यस्य 'अनूप' इत्यस्य व्याख्यां स 'अनु+आप्>अन्वाप् 7 अनूप' इति व्याख्यामवश्यमेवाकार्षीत्[१०]। अतो यदि 'द्वीप' इत्यस्य व्याख्यां कर्तुं प्रवर्तेत, तदा द्वि+अप्>द्वयप्> द्वीप इत्येव कुर्यादिति वक्तुं शक्यते।

---

१. द्वारस्योद्देश्य द्वयं भवति—i. अवरुद्धद्वारतः प्रवेशनिर्गमयोः सुविधा, ii. निर्बाधप्रवेश-निर्गमयोरवरोधः। यास्कस्य प्राथमिकनिर्वचनद्वयं गत्यर्थकारणात् प्रथमोद्देश्यदृष्टौ निधाय कृतमेतन्निर्वचनमस्ति। तथा तृतीयं निर्वचनमवरोधार्थकारणाद् द्वितीयोद्देश्यदृष्टौ कृतमस्ति।

२. अथापि वर्णोप-जन-आस्थद्, द्वारो, भरुजेति। (निरुक्ते—२।२)

३. निरुक्त-मीमांसा, पृ० २४७, टि० १।

४. उषो, यदद्य भानुना वि द्वारावृणवो दिवः (१।४८।१५) अत्र 'ऋणवः' यद्वा 'वृणवः' अस्तीति विषये 'निरुक्तमीमांसा' पृ० २४७-२४८ द्रष्टव्यम्।

५ त्मना वहन्तो दुरो व्यृण्वन्, नवन्त विश्वे स्वर्दृशीके। (ऋ० सं० १।६९।१०)

६. अप द्वारा मतीनां प्रत्ना ऋण्वन्ति कारवः। (तत्रैव—९।१०।६)

७ विषयेऽत्र विशेषार्थं द्र० निरुक्तमीमांसा, पृ० २४७-२४८।

८. अग्निश्चिद्धि शुष्मातसे शुक्वानापो न द्वीपं दधति प्रयांसि। (ऋ० सं० १।१६९।३)

९. अष्टाध्यायी—६।३।९७ : द्व्यन्तरुपसर्गेभ्योऽप ईत्।

१०. निरुक्तम्—२।२२ : अनूपा = अनु-वपन्ति लोकान्त्स्वेन स्वेन कर्मणा। अयमपीतरोऽनूपः। (i) एतस्मादेव अनूप्यत उदकेन, (ii) अपि वाऽन्वाविति स्यात्, यथा प्रागिति। तस्यानूप इति स्यात्। यथा प्राचीनमिति। एतन्निवर्चनव्याख्यायां डॉ० सिद्धेश्वरवर्मणः दी एटिमालॉजीज् आफ् यास्क : पृ० ५७ इत्यत्र भ्रान्तेः समीक्षायै द्र० निरुक्तस्य पञ्चमाध्यायस्य पृ० २४१-२४२।

९०. धान्यम् > धा—श्यावाश्वात्रेयस्तथा[1] भरद्वाजबार्हस्पत्यः[2] इत्यनयोः 'धान्य' तथा 'धा' इत्यनयोरेकत्रितप्रयोगेण ज्ञायते यदिमौ धारणार्थकधाधातोः कर्मण्यर्थे धान्यमित्यस्य निष्पत्तिं मन्येते। उणादिकारोऽपीमामेव व्युत्पत्तिं प्रादात्[3]। यास्कस्तु धान्यस्य व्याख्यां न प्रस्तौति; किन्तु शब्दार्थदृष्ट्या तत्समधानाशब्दस्य तामेव व्युत्पत्तिं रचितवान्। अतः कदाचिदसौ धान्यस्यापीयमेव व्युत्पत्तिरिति वक्तुं समर्थो भवेदिति प्रतिभाति।

९१. ध्वान्त > ध्वंस्—शतप्रभेदनः ध्वंस् इत्यनेन सह कर्त्रर्थक-ध्वान्तस्य प्रयोगं कृत्वा द्वयोरनयोर्वैयुत्पत्तिकसम्बन्धं स्पष्टं चकार[4]। यास्केनापि गौरिवीति-शाक्त्यस्य[5] 'ध्वान्त' इत्यस्य व्याख्या 'ध्वंस्' इत्यनेनाकारि[6]। पाणिनिनेदं निपातितम्[7]। पतञ्जलिना 'ध्वन्' इत्यनेन ध्वान्तस्य व्याख्या निरमायि[8]। कदाचिदसौ 'ध्वान्त' इत्यनेनान्धकारात्मकपक्षमेव प्रबलं ज्ञातवान्—इति प्रतिभाति। अन्यथा ध्वान्तशब्दश्चक्षुर्विषयः कदाचिदस्ति, किन्तु न श्रोत्रविषयो भवितुमर्हति।

९२. निधि > √ धा—वशिष्ठमैत्रा[9]वरुणिरुक्तवातायनश्च[10] निधेरुत्तरपदस्य धीत्यस्य व्याख्यां हीत्यनेनाकरोत्। इयं 'धा' इत्यस्य स्थाने प्रयोक्तव्या [11]प्रकृति-रेकास्ति। अतोऽनया प्रकृत्या वार्ते द्वे सुस्पष्टे विद्येते—(१) धो = हि < धा-सम्बन्धी विदितः। (२) प्रत्ययः कर्मार्थेऽस्ति। यास्कः 'नि-धि' इत्यस्य 'शेव-धि' इति पर्यायं

---

१. येन तोकाय तनयाय धान्यं बीजं वहेथे अक्षितम्। असमभ्यं तद् धत्तन् यद् व ईमहे राधो विश्वायु सौ-भगम्। (ऋ० सं० ५।५३।१३)

२. विश्वं स देव प्रति वारमग्ने धत्ते धान्यम्, पत्यते वसव्यैः। (तत्रैव—६।१३।४)

३. उणादिसूत्रम्—७२६ (५।४८) : दधातेर्यन्नुट् च।

४. निरुक्तम्—५।१२ : धाना (i) भ्राष्ट्रे हिता भवन्ति। (ii) फले हिता भवन्तीति वा।

५. ध्वान्तं तमोऽव दध्वसे हत; इन्द्रो मह्ना पूर्व-हूतावपत्यत। (ऋ० सं० १०।११३।७)

६. वयः सुपर्णा उप सेदुरिन्द्रं प्रिय-मेधा ऋषयो नाधमानाः।
अपध्वान्तमूर्णुहि, पूर्धि चक्षुर; मुमुग्ध्यस्मान्निधयेव बद्धान्॥ (ऋ० सं० १०।७३।११)

७ अपोर्णुह्या ध्वस्तं चक्षुः। अष्टाध्यायी—७।२।१८।

८. महाभाष्ये ७।२।१८, वा० ३, पृ० ११८ 'ध्वान्ततमोऽभि-धान' इति वक्तव्यम्। ध्वनितं तमसेत्येवान्यत्र।

९. एपस्य वां पूर्व-गत्वेव सख्ये निधिर्हितो; माध्वी रातो अस्मे। (ऋ० सं० ७।६७।७)

१०. यददो वात, ते गृहेऽमृतस्य निधिर्हितः। ततो नो देहि जीवसे। (तत्रैव—१०।१०६।३)

११. अष्टाध्यायी—७।४।४२ : दधातेर्हिः।

दत्वा व्युत्पत्तिमिमामेवासूचयत्[१]। सङ्कुसुकयामायनः 'परिधि' इत्यस्य व्याख्यां धा-धातुना चक्रे[२]।

९३. नियुत् <नि + √यु—वायोरश्वाया नामेदम्[३]। वशिष्ठमैत्रावरुणिरेतस्य शब्दस्य प्रयोगं व्युत्पत्तिप्रदर्शनपूर्वकं वायोः सम्बन्धे विहितवान्[४]। शब्दोऽयं कर्मार्थे निष्पन्नः।

९४. नेमि <नम् विरूपाङ्गिरसः[५] रेभकाश्यपश्च[६] √नम् इत्यनेन नेमीत्यस्य व्युत्पत्तेः सङ्केतं कृतवान्। नेमिशब्दः चक्रस्य परिधिवाचको विद्यते। अनेनात्र चक्रस्याधोगमनमित्यभिशंसितम्। यदेदमधोगच्छति तदा यानं गच्छति। कात्यायनेनास्य लौकिकभाषायामेव प्रयोगः प्रोक्तः। तथास्य व्युत्पतिर्नम्-धातुना कृता[७]। उणादिकारोऽस्य नयनशक्ति दृष्टिपथे निधाय नीत्यनेन व्युत्पन्नोऽयमिति व्याजहार[८]।

९५. नौ <नु—नौरिति नौकावाचको वर्तते। नौकार्थकस्य नौरित्यस्य व्युत्पत्तिं यास्कः 'नुद्' इत्यनेनाकरोत्[९]। वैयाकरणा अपि 'नुद्' इत्यनेनैव नौरिति साधयन्ति[१०]। वेदे नौरिति वाण्यर्थेऽपि दृश्यते[११]। [१२]अयास्याङ्गिरसोऽस्य व्युत्पत्तिं स्तुत्यर्थक-'नु' इत्यनेन करणेऽर्थे सूचितवान् यदनेन स्तुतिः क्रियते। ऐतरेयब्राह्मणे नौकावत् काठिन्यपारङ्कतुं साधनरूपत्वाद् वाचं नौरित्युक्तवान्[१३]।

१. निरुक्तम्—२।४।
२. इमं जीवेभ्यः परिधिं दधामि।
३. अस्य स्वरूपाय द्रष्टव्यं निरुक्तपञ्चमाध्यायस्य २६९ पृष्ठम्।
४. नि-युवाना नियुतः स्पार्हवीरा इन्द्रवायू, सरथं यातमर्वाक्। (ऋ० सं० ७।९१।५)
प्रयाभिर्यासि दाश्वांसमच्छा नियुद्भिर्वायविष्टये दुरोणे। नि नो रयिं सुभोजसं युवस्व। (तत्रैव—७।९२।३)
५. तं नेमिमृभवो यथाऽऽनमस्व सहूतिभिः। नेदीयो यज्ञमङ्गिरः। (तत्रैव—८।७५।५)
६. नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा।
७. अष्टाध्यायी—३।२।१७१, वार्तिकः—भाषायां धाञ्कृ-सृ-गमि-जनि-नमिभ्यः।
८. उणादिसूत्रम्—४८३ (४।४३) तत्त्व-बोधिनी : नयति चक्रमिति नेमिश्चक्रावयवः।
९. निरुक्तम्—५।२३ : नौः (१) प्रणोत्तव्या भवति, (२) नमतेर्वा।
१०. उणादिसूत्रम्—२२२ (२।६५) : ग्ला-नुदिभ्यां डौः।
११. निघण्टुः—१।११।४५, तथा निरुक्तपञ्चमाध्यायस्य २४३ पृष्ठम्।
१२. समी सखायो अस्वरन्वने क्रीलन्तमत्यविमिन्दुं नावा अनूषत। (ऋ० सं० ९।४५।५)
१३. ऐ० ब्रा० १।३।२ : सुतर्माणमधि नावं रुहेम। (ऋ० सं० ८।४२।३) इति—यज्ञो वै सु-तर्मा नौः, कृष्णाजिनं वै सुतर्मा नौः, वाग्वै सुतर्मा नौः।

९६. पक्ति८ √पच्—सोमपानेन[1] सार्द्धं करिष्यमाणाल्पाहारपाचनक्रिया-वाचिकायाः 'पक्ति'रित्यस्या व्युत्पत्ति वामदेवगौतमः[2], गौरिवीतिशाक्त्यः[3], भरद्वाज-बार्हस्पत्यः[4] वशिष्ठमैत्रावरुणिश्च[5] पच्धातुना कर्मणोऽर्थे दत्तवन्तः।

९७. पतिः< √पा—रक्षकतायाः कारणाद् वामदेवगौतमस्य 'पतिः' ('स्वामी') इति नामाभिप्रेतमस्ति[6]। ऋग्वेदे पत् (पत्यते) ऐश्वर्यार्थे सुबहुप्रयुक्तोऽस्ति। विचारो मदीयो वर्तते यदयं 'पति'शब्दस्य नामधातुर्विद्यते। यास्कोऽपि पत्युर्व्याख्यां पा-धातुनाऽऽचरितवान्। तथा पेत्यस्यार्थं 'पात्' इत्यनेनासौ स्पष्टं कृतवान्[7]। उणादिकारोऽपि पतिं पा-धातुना निष्पादितवान्[8]।

९८. पपुरिः ≼ √ पृ — प्रस्कण्वकाण्वस्तथा[9] कक्षीवद्-दैर्घतमसौशिजः[10] पृधातुना पपुरिशब्दस्य व्युत्पत्तिं सङ्केतितवान्। अत्रत्यस्य ऋकारस्य उर्-विकारः सुस्पष्टोऽस्ति। यास्कोऽपि कक्षीवतोऽनुकरणं चक्रे[11]।

---

१. इममनुष्वध इति कथयन्ति स्म। द्र० निरुक्तपञ्चमाध्यायस्य ४५४ पृष्ठम्।

२. य इन्द्राय सुनवत्सोममद्य:, पचात्पक्तीरः, उत भृज्जाती धानाः। (ऋ० सं० ४।२४।४)

३. आ त्वा मृजिश्वा सख्याय चक्रे पचन्पक्तीरः अपिबः सोममस्य। (तत्रैव—५।२९।११)

४. स सोम आमिश्लतमः सुतोऽभूद्यस्मिन्पक्तिः पच्यते सन्ति धानाः। (तत्रैव—६।२९।४)

५. सुनोता सोम-पाव्ने सोममिन्द्राय वज्रिणे पचता पक्तीर ....। (तत्रैव—७।३२।८)

६. पात्पतिर्जन्यादंहसो नो मित्रो मित्रियादुत न उरुष्येत्। (तत्रैव—४।५५।५)

७. निरुक्तम्—१०।१४: क्षेत्रस्य पतिः—क्षेत्रं क्षियतेर्निवास-कर्मणः। तस्य पाता वा पालयिता वा।

८. उणादिसूत्रम्—४९७ (४।५७) पातेर्डतिः। उणादिकारेण पाधातोर्डतिप्रत्ययः कृतः; परन्तु विषयेऽस्मिन् ध्यानं न दत्तं यत्—डतिप्रत्यये कृते सति पाणिनेर्डति च (अ० १।१।२५) इत्यनेन प्राप्तस्य प्रथमाद्वितीययोर्बहुवचनस्य लोपस्य का दशा भविष्यतीति।

९. हविषा जारो अपां पिपर्त्ति पपुरिर्नरा:। (ऋ० सं० १।४६।४)

१०. उपक्षरन्ति सिन्धवो मयो-भुव ईजानां च यक्ष्यमाणं च। पृणन्ति च पपुरिं च श्रवस्यवो धारा उपयन्ति विश्वतः। (१२५।४)

११. निरुक्तम्—५।२४: पिपर्ति, पपुरिति (१) पृणाति-निगमौ वा, (२) प्रीणाति-निगमौ वा। वैपरीत्येन तुलनार्थमग्रे 'पप्रि' इति द्रष्टव्यम्।

९९. पप्रि < √पृ—सव्याङ्गिरसः पूरणार्थक-पृ-धातोः पप्रिशब्दस्य व्युत्पत्ति-सङ्केतमकरोत्[१] । अत्र पपुरिवद् ऋकारस्य उर्-विकारो न प्रतिभाति । शिरिम्बिटि-काण्वः पारगमनार्थक-पृधातुना प्रेरणार्थके निष्पादयति[२] । इममिति भावः ।

१००. पयस् —अस्य शब्दस्य कतिपया व्युत्पत्तयोऽभिप्रतीयन्ते ।

(क) पयस् < √पी–गौतमराहूगणः,[३] दीर्घतमस्-औचथ्यः,[४] , वामदेवगौतमः[५], वशिष्ठमैत्रावरुणिः[६] , गयप्लातश्च[७] 'पयस्' इति 'पी' इत्यस्य करणरूपे प्रयुक्त-वन्तः । अनेन ज्ञायते यदिमे 'पयस्'-शब्दं पीत्यस्मात् करणे निष्पादयन्ति[८]। गृत्समदोऽनेन सह कर्त्रर्थकपीयूषस्य प्रयोगं कुर्वन् 'पी' इत्यस्य कर्मणः स्वरूपे, तदा असितकश्यपः[९] 'पी' इत्यस्य कर्तृरूप एव 'पी' इत्यनेन साकं 'पयसः' प्रयोगं कृत्वा पयसो व्युत्पत्तिं 'पी' इत्यस्मात् कर्त्रर्थेऽभीष्टमङ्गीकृतवान् । अस्यां व्युत्पत्तौ पोषणक्रियायां दुग्धोपयोगितां दृष्टौ निधायैतादृशी व्याख्या कृता वर्तते ।

(ख) पयस् < √पा —दीर्घतमसौचथ्यः पानार्थक-पाधातुना सह तत्कर्मरूपे पयसः प्रयोगं प्रस्तौति[१०] । अस्यां व्युत्पत्तौ सम्भवतः पेयतायाः कारणात् पा-धातुना पयसो नामकरणमभिप्रेतमस्ति ।

यास्केनैतन्निर्वचनद्वयं प्रदत्तम्[११] । वैयाकरणेषु (१) कतिचिद्विपश्चितः पेयतायाः

---

१. स हि पप्रिरन्वसः । आ यं पृणन्ति दिवि सद्म-र्बर्हिषः । (ऋ० सं० १।५२।३-४)
२. स नः पप्रिः पारं याति । स्वस्ति नावा पुरुहूतः । इन्द्रो विश्वा अतिद्विषः । (तत्रैव— ८।१६।११)
३. यदि मृतस्य पयसा पियानः । (तत्रैव—१।७९।३)
४. सृक्वाणघर्ममभि वावशाना मिमाति मायुं, पयते पयोभिः । (तत्रैव—१।१६४।२८)
५. कृष्णा सती रुशता धासिनैषा जामर्येण पयसा पीपाय । (तत्रैव—४।३।९)
६. या सुष्वयन्त सु-दुघाः सुधारा अभि स्वेन पयसा पीप्यानाः । (तत्रैव--७।३६।६)
७. यां मे धिय मरुत, इन्द्र, देवा, अददात् वरुण, मित्र, यूयम् । तां पीपयत पयसेव धेनुम् । (तत्रैव--१०।६४।१२)
८. तदा-हना अभवत्पिप्युषी पयोंऽशोः पीयूषं प्रथमं तदुक्थ्यम् । (तत्रैव—२।१३।१)
९. तयो यदस्य पीपयत् । (तत्रैव--९।६।७)
१०. वीतं पातं पय उस्रियायाः । (तत्रैव—१।१३।४)
११. निरुक्तम्—२।५ : पयः । (१) पिबतेर्वा, (२) प्यायतेर्वा ।

कारणात्पाधातुना पयो निष्पन्नमिति मन्यन्ते[१], तदा (२) कतिपयाः पोषकतायाः कारणात् पीत्यनेन पयसः सिद्धिं स्वीकुर्वन्ति[२]।

(ग) पयस्∠√पिन्व् —नोधस्-गोतमः[३], विश्वामित्रगाथिनः[४], वशिष्ठमैत्रावरुणिः,[५] वत्सप्रितभालन्दनः[६], गयप्लातः,[७] वसुकर्णवासुक्रस्तथा[८] शम्बरकाक्षीवतः[९] पयस इत्यस्य प्रयागं 'पिन्व' (पुष्टि) इत्यस्य करणे[१०] तथा कर्मणि[११] तेन सहैव कृत्वा द्वयोरेतयोर्वैयुत्पत्तिकसम्बन्धस्य सङ्केतं कृतवन्तः।

१०१. पर्वत्<√पर्वन् —पुनर्वत्स-काण्वः मरुतः पर्वतान् पर्व पर्व खण्डं खण्डं कृतवन्तः[१२]। कथनेऽस्मिन् पर्वतशब्दः पर्वन्नित्यनेन मत्वर्थीयप्रत्यये कृते सति सिद्ध्यतीति वार्तामसूचयत्। [१३]यास्कस्तथा कात्यायनश्च[१४] पर्वतस्येमामेव व्युत्पत्तिं चक्रतुः। उणादिकार इमं कृदन्तमभिज्ञाय पूरणार्थक-पर्वधातुना 'अतच्'प्रत्ययं विधाय निष्पादितवान्[१५]। एतद्व्युत्पत्त्यनुसारं पर्वतेनान्तोदात्तेन भवितव्यम्[१६]।

---

१. माधवीयधातुवृत्तिः—१।९०८ : पयः पिबतेरीच्च इत्यसुनि ईकारान्तादेशे गुणायादेशौ। सूत्रमिदं सिद्धान्तकौमुद्यां नास्ति।

२. सि० कौ० उणादिसूत्रम्—६२८ (४।२२८) सर्वधातुभ्योऽसुन्। चेतः। सरः। पयः। सदः। 'पयस्' इति शब्दः ज्ञानेन्द्रसरस्वतीमते पय्-गतावित्यनेनाथवा पो-पाने इत्यनेन साधुर्जायते। वासुदेवदीक्षितः 'पीङ्'-पाने धातुनाऽस्य साधुत्वमवदत्। (मा० धा० वृ० ४।३३)

३. भूमिं पिन्वन्ति पयसा परिज्रय (ऋ० सं० १।६४।५)। पिन्वन्त्यपो मरुतः सुदानवः पयोघृतवद् विदथेष्वा-भुवः। (तत्रैव—१।६४।६)

४. एना वयं पयसा पिन्वमाना अनु योनिं देवकृतं चरन्तीः। (तत्रैव—३।३३।४)

५. ता अस्मभ्यं पयसा पिन्वमानाः। (तत्रैव—७।५०।४)

६. वि यो ममे यम्या संयती मदः साकं वृधा पयसा पिन्वद-क्षिता। (तत्रैव—९।६८।३)

७. येभ्यो माता मधुमत्पिन्वते पयः पीयूष द्यौरदितिरद्रिबर्हाः। (तत्रैव—१०।६३।३)

८. द्यावापृथिवी वरुणाय सव्रते व्रतवत्पयो महिषाय पिन्वतः। (तत्रैव—१०।६५।८)

९. ता पयसा पिन्वमानाः प्रजावतीरिन्द्र, गोष्ठे रिरीहि। (तत्रैव—१०।१०६९।३)

१०. ऋ० सं० प्रेक्षणीयम्—१।६४।५; ३।३३।४; ७।५०।४; ९।६८।३; १०।१६९।३।

११. तत्रैव—१।६४।६, १०।६३।३, १०।६५।८।

१२. वि वृत्रं पर्वशो ययुर्, विपर्वतां अ-राजिनः।

१३. निरुक्तम्—१।२० : गिरिः = पर्वतः समुद्गीर्णो भवति। पर्ववान्पर्वतः।

१४. अष्टाध्यायी—५।२।१२१ इत्यत्र वार्तिकम्—तप्पर्व-मरुद्भ्याम्।

१५. उणादिसूत्रम्—३९० (३।११०) द्रष्टव्यम्।

१६. अतच्प्रत्ययश्चिदस्ति तस्मादेतत्प्रत्ययेन निष्पन्नः शब्दोऽन्तादात्तो भवति। द्र० पा० सू० ६।१।१६३ : चितः (अन्त-उदात्तः)।

उणादिकारस्य नियमानुसारं यावन्तः शब्दा ऋग्वेदे तथान्यसंहितासु वर्तन्ते, ते सर्वे अन्तोदात्ताः सन्ति ; किन्तु, पर्वतः सर्वत्राद्युदात्तो विद्यते । यास्क-कात्यायनाभ्यां कृतायां व्युत्पत्तौ स्वरो यथार्थोऽस्ति । अत उणादिकारेण कृता पर्वतस्य पर्व इत्यनेन व्युत्पत्तिश्चिन्त्या विद्यते ।

१०२. पाक<√पच् —दीर्घतमसौचथ्यः पच् इत्यनेन सह पाकं प्रयुज्यैतयोर्व्युत्पत्तिगतसम्बन्धं द्योतितवान्[१] । अत्र तालव्य-कण्ठस्पर्शयोः पारस्परिकसम्बन्धः सुविदितो विद्यते । भगः, भागः, याग इत्यादयोऽस्या प्रवृत्तेरेवोदाहरणानि सन्ति । तथा संस्कृतध्वनिशास्त्रदृष्ट्या 'यज्ज' इत्यपि सम्प्रति उत्तरभारते 'यग्य' तथा गुर्जरे, महाराष्ट्रे च यग्न इति कण्ठ्यवानुच्यते ।

१०३. पाथस्<√पा —पाथसः प्रकृतिः पा वर्ततेऽत्यन्तस्पष्टोऽयम् ; परन्तु 'पा' इति बह्वर्थकः । अतोऽस्यार्थनिर्वचनमावश्यकमस्ति । प्रजापतिर्वैश्वामित्रो मार्गवाचकेन पाथसा सह रक्षार्थकस्य 'गोपा' तथा 'पाति' इत्यनयोः प्रयोगमाचर्य पेत्यस्य रक्षार्थोऽभिप्रेत इति बोधितवान्[२] । गृत्समदोऽपि सम्भवत इमामेव व्युत्पत्तिं दृष्टौ निधायानेन सह 'पायु'शब्दस्य प्रयोगमाचरितवान्[३] ।

यास्कोऽन्तरिक्षस्य पर्यायं पाथसं व्युत्पत्तिदृष्ट्या 'पथ्' इत्येतत्सादृश्यमवोचत् । 'पथ्'शब्दस्तदनुसारं पाणिनीयतन्त्रेण निष्पन्नस्य पथिन्शब्दस्यैकवचनान्तेन 'पन्थाः' इत्यनेन सम्बद्धो विद्यते । तथा (१) पत्—इत्यनेन यद्वा (२) पद्—इत्यनेनाथवा (३) पन्थ्—इत्यनेन व्युत्पन्नो वर्तते[४] । तृतीयो धातुरेतन्नामावलोक्य कल्पित इव प्रतिभाति[५] । प्रथमौ द्वौ धातू गत्यर्थकौ विद्येते । पितुरित्यनेन तुलनीयस्य जलस्य अन्नस्य च पर्यायवाचकस्य रूपं पानार्थक-'पा'धातुनोक्तमस्ति[६] । उणादिकारोऽपि द्वयोरेतयोरर्थयोः 'पा'-धातुनैव व्युत्पत्तिमवदत्[७] ।

---

१. सुकृता तच्छमितारः कृण्वन्तूत मेधश्रृत पाकं पचन्तु । (ऋ० सं० १।१६२।१०)
२. विष्णुर्गोपाः परमं पाति पाथः प्रिया धामान्यमृता दधानः । (तत्रैव—३।५५।१०)
३. पाथो न पायुं जनसी उभे अनु । (तत्रैव—२।२।४)
४. निरुक्तम्—६।७ : पाथः पथा व्याख्यातम् । २।२८ : पथामङ्कांसि । ऋ० सं० ४।४०।४ : =पथां कुटिलानि । पन्थाः—१. पततेर्वा , २. पद्यतेर्वा , ३. पन्थतेर्वा ।
५. पाणिनीयतन्त्रेऽयं गत्यर्थको विद्यते । मा० धा० वृ० १०।४१ : पथि गतौ ।
६. निघण्टुः—२।१४।११४ : पतति । गत्यै पद्धातुस्तुलनीयः । निरुक्तम्—५।१८ : पदिर्गन्तुर्भवति यत्पद्यते । पाणिनीयतन्त्रेऽपि धात्वेतौ गत्यर्थकौ । मा० धा० वृ० १।८९० : पत्लृ गतौ । ४।६१ : पद गतौ ।
७. उणादिसूत्रम्—६४३ (४।२०३) पातेर् उदके थुट् च । ६४४ : अन्ने च ।

अ-विकरण-पातेः प्रयोगं दृष्ट्वा सम्भवतष्टीकाकाराः 'पा' इत्यनेन रक्षणार्थक-'पा' इत्यस्य ग्रहणं कृतवन्तः[१] ; किन्तु पेयताया आधारे जलस्य नामकरणमकृत्वा रक्ष्यताया आधारे तद्व्युत्पत्तिकथनं वैचित्र्यं वर्तते । उणादिकारः कदाचित् वाडमेरस्य रेगिस्तानभूमेः घातितस्तु नासीत् ?

१०४. पायु<√पा —ऋग्वेदसंहितायां पायोः प्रयोगो नवकृत्वो जातः । स च प्रयोगो रक्षार्थक-पाधातोः करणरूपेऽभवत् । एतेन ज्ञायते यत्—१. कुत्साङ्गिरसः,[२] २. परुपच्छेपदैवोदासिः[३], ३. दोर्घतमस्-औचथ्यः[४], ४. अगस्त्यमैत्रावरुणिः[५], ५. गृत्समदः[६], ६. उरुचक्रि-आत्रेयः[७], ७. भरद्वाजबार्हस्पत्यः[८], ८. वशिष्ठमैत्रावरुणिस्तथा[९] ९. भर्ग-प्रागाथः[१०] रक्षार्थक-पाधातुनेमं करणे निष्पन्नं जानन्ति । उणादिकारोऽपीमां व्युत्पत्तिं प्रदत्तवान् । तथा 'पा' इत्यस्यार्थं न स्पष्टरूपेणोक्तवान्[११] ।

१०५. पार<√पॄ —गृत्समदो[१२] वशिष्ठमैत्रावरुणिश्च[१३] 'पार' इत्यनेन सह 'पॄ' इत्यस्य प्रयोगेण पॄधातुना निष्पन्नमिदमिति ज्ञातवन्तौ । गर्गभारद्वाजः 'पार' इत्यस्य प्रकृतेः 'पॄ' इत्यस्यार्थं पारकरणं कृतवान्[१४] । यास्क इमं 'पर'नाम्नः स्वार्थेऽण्-

---

१. ज्ञानेन्द्रसरस्वती तथा वासुदेवदीक्षितः पा-रक्षणे (२।४६) इत्यस्य ग्रहणं कृतवन्तौ । निरुक्ते—६।७ : उदकमपि पाथ उच्यते, पानात् । अन्नमपि पाथ उच्यते, पानादेव ।

२. ऋ० सं० १।९५।९;    ३. तत्रैव —१।१३०।१०;    ४. तत्रैव—१।१४३।८ ।
५. तत्रैव —१।१८९।४ ;    ६. तत्रैव—२।२।४;    ७. तत्रैव—५।७०।३ ।
८. तत्रैव—६।७१।३;    ९. तत्रैव—७।३८।३ ;    १०. तत्रैव—८।६०।८ ।

११. उणादिसूत्रम्—१ : कृ-वा-पा-जि-मि-स्वादि-साधि-अशूभ्य उण् । पेत्यस्यैकस्यां दिशि आदादिको वा (२।४०) अस्ति तदन्यस्यां दिशि भौवादिकः √जि (१।५५४, ९२७) । अतः साहचर्य-परिभाषयोभयोर्ग्रहणं स्यात् । कारणमिदमेव वर्तते यत् टीकाकारा उभयोर्ग्रहणं कृतवन्तः । तत्त्वबोधिन्यां बालमनोरमायाञ्च पायुर्गुदमित्युक्तं वर्तते । पानार्थक-पाधातुना निष्पन्नोऽयं पायुस्तैलादिपानस्य साधनभूतोऽस्ति ' पिबन्त्यनेन तैलादिकमिति पायुर्गुदस्थानम् । (तत्त्वबोधिनीकारः) शब्दोऽयं रक्षणार्थक-पाधातुनाऽपि निष्पन्नोऽस्ति । पाति = रक्षति इति विग्रहे रक्षकोऽपि । (त० बो०) तैलपानाय गुदाया प्रवृत्तिनिमित्तवैचित्र्यं विदधाति । अतोऽस्मिन्नर्थे वास्तविका व्युत्पत्तिरन्वेषणीया वर्तते ।

१२. पर्षिणः पारमंहसः स्वस्ति । (ऋ० सं० २।३३।३)

१३. प्रवाजे चिन्नद्यो गाधमस्ति, पारं नो अस्य विष्पितस्य पर्षन् । (तत्रैव—७।६०।७ )

१४. भवा सुपारो, अतिपारयो नः । (तत्रैव—६।४७।७)

प्रत्ययेन निष्पन्नं बोधितवान्[१] । तेनोक्तं यद् यो हि नद्याः परलं तटं गच्छति, सः पारो भवति । तथा य उरलं तटं गच्छति, स तटः 'अवार' इति कथ्यते ।

१०६. पितुः 7 √पा —नोधस्गौतमः पा (पाने) इति धातुना 'पपिवस्' इत्यनेन सह कर्मरूपे 'पितुः' इत्यस्य प्रयोगं कृतवान्[२] । शङ्खयामायनः एतदर्थं 'सुत'-विशेषणस्य प्रयोगमाचरितवान्[३] । अनेन प्रतीयते यत् सोमस्याभिधानत्वेनायं प्रसिद्धोऽस्ति। भिक्षुराङ्गिरसोऽन्नार्थे प्रयुक्तवानिमम्[४] । अनेन ज्ञायते यन्मूलतोऽस्य प्रवृत्तिनिमित्तगुणः 'पेयता' आसीत् । पुनश्चायं भक्ष्यतायां सीमितो बभूव । यास्क इममन्नस्य पर्यायेषु देवताया रूपे स्तुतपार्थिवपदार्थेषु सङ्केतितवान्[५] । असावस्य निर्वचनत्रयमुक्तवान्—(१) रक्षणार्थक-पाधातुना, (२) पानार्थक-पाधातुना, (३) पुष्ट्यर्थक-'प्यै'धातुना[६] । शाकटायन इमं पा इत्यनेनोक्तवान्; किन्तु नास्यार्थमभिहितवान् । भट्टोजिदीक्षितेनास्यार्थः पानमित्यकारि[७] ।

१०७. पुर् < √पृ —वशिष्ठमैत्रावरुणिः 'पुर्' इत्यस्य प्रयोगं पालनार्थक-'पृ' इत्यनेन सार्द्धं तथास्य विशेषणरूपे 'पर्तृ' इत्यस्य प्रयोगं विधाय पुरित्यस्य व्युत्पत्तिं पृधातुनाऽसूचयत्—यद् रक्षकत्वात् 'पुर्'=दुर्गः पुर् इति कथ्यते[८] ।

१०८. पृथिवी ⊿ √प्रथ् —गृत्समदः[९], श्यावाश्वात्रेयः[१०], भरद्वाजबार्हस्पत्यः[११], नृमेधाङ्गिरसः, पुरुमेधाङ्गिरसः[१२], नाभानेदिष्टमानवश्च[१३] धरायाः पृथिवीति नाम प्रसरणक्रियाज्जातमस्ति । एवं यामरुद्-आत्रेयः पृथिव्याः प्रथनस्य चर्चां चर्चितवान्[१४]। गृत्समदो धरण्या एतद्विशेषतां भूमिप्रसङ्गेऽप्यकथयत्[१५] । इममाशयं पराशरशाक्त्यः

---

१. निरुक्तम्—२।२४ : पारं परं भवति । अवारमवरम् ।
२. अस्येदु मातुः सवनेषु सद्यो महः पितुं पपिवाञ्चर्वन्ना । (ऋ० सं० १ ६१।७)
३. बर्हिषदो ये स्वधया सुतस्य भजन्त पित्वस्त इहागमिष्ठाः । (तत्रैव १०।१५।३)
४. ऋ० सं० १०।११७।२, १०।११७।४।
५. निघण्टुः—२।७।६; ६ तत्रैव—५।३।१९ ।
७. उणादिसूत्रम्—७० : पिबतीति पितुर्वह्नी, दिवाकरे।
८. ताँ अंहसः पिपृहि पर्तृभिष्ट्वं शतं पूर्भिर्यविष्ठ्य । (ऋ० सं० ७।१६।१०)
९. स धारयत् पृथिवीं पप्रथच्च । (तत्रैव—२।१५।२)
१०. प्रथिष्ट यामन् पृथिवी चिदेषाम् । (तत्रैव –५।५८।७)
११. तत्रैव—६।७२।२; १२ तत्पृथिवीमप्रथयः। (तत्रैव—८।८९।५)
१३. अप्रथयन्पृथिवीं मातरं वि । (तत्रैव –१०।६२।३)
१४. दीर्घं, पृथु पप्रथे सद्म पार्थिवम् । (तत्रैव —५।८७।७)
१५. पुष्टिर्न रण्वा, क्षितिर्न पृथ्वी । (तत्रैव—१।६५।५)

क्षितिविशेषतारूपेऽगादीत् पृथिवीशब्देन चोक्तवान्[१] । तथाऽगस्त्यमैत्रावरुणिः समानार्थकेनोर्वीशब्देन पृथिवीमकथयत्[२] । यथा जन्मन्-शब्दो हि—इकारस्वरभक्त्या 'जनिमन्' इति रूपे प्रयुक्तो बभूव तथा पृथिवीशब्दोऽपि इकारस्वरभक्त्या पृथिवी बभूव । निर्वचनेऽस्मिन् रकारस्य ऋसम्प्रसारणं जातमित्यपि ज्ञानमक्षतमस्ति[३] । शाकटायनेनाप्यस्येयमेव व्युत्पत्तिरभाणि[४] । शब्दार्णवकोशानुसारं पृथिव्या द्वौ विकारौ प्रचलितावासिष्टाम्—(१) पृथिवी, (२) पृथ्वी । [५]अर्थात् शब्देऽस्मिन् इस्वरभक्तिरिवाकारस्वरभक्तिरपि प्रचलिताऽऽसीत् । मन्तव्योऽयमुज्ज्वलदत्तेनाप्यङ्गीकृतो विद्यते[६] ।

१०९. पृथु ⊿√प्रथ्—गृत्समदस्तथा[७] एव-याम-रुदात्रेयः[८] 'पृथु' इत्यस्य व्युत्पत्तिः प्रथ् इत्यनेन भावेऽभिप्रेत इति सङ्केतितवन्तौ । यास्कोऽपि प्रथ् इत्यस्य सम्प्रसारणवत्या प्रकृत्या निष्पन्नमभणदिमम् । तथोक्तवान् यद् रेफवतः प्रथोऽपेक्षया सम्प्रसारणवतः पृथो रूपमल्पशब्देषु समुपलब्धं भवति[९] । उणादिकारोऽपीमं प्रथ्-धातोः सम्प्रसारणेन निष्पन्नं मन्यते[१०] ।

---

१. उर्वी पृथ्वी बहुले दूरे-अन्ते । (ऋ० सं० १।८५।७) पूरुच पृथ्वी बहुला न उर्वी । (तत्रैव—१।१८९।२)

२. निरुक्तम्—१।१३ । प्रथनात्पृथिवीत्याहुः । १।१४ : अथ वै दर्शनेन पृथुः ।

३. उणादिसूत्रम्—१४८ : प्रथेः षिवन्, सम्प्रसारणं च ।

४. शब्दार्णवः—पृथवी, पृथिवी, पृथ्वी, धरा, सर्वसहा, रसा । बालमनोरमा—पृथिवी, पृथवी पृथ्वी इत्यमरः । परन्तु अमरकोषे कण्ठस्वरयुक्तः 'पृथिवी'शब्द एव नास्ति । अतः कथनमिदं चिन्त्यमस्ति । पृथवीशब्दो वैदिक-लौकिकवाङ्मययोरनुपलब्धो विद्यते । व्यवहारे सम्भवतोऽस्य सत्त्वात् शिक्षिता अपि पृथिवीत्युच्चारणं 'पृथवी' इति कुर्वन्ति ।

५-६. पृथिवीशब्दस्य सिद्ध्यै कतिपया वैयाकरणा उणादिसूत्रे १४८ पिवन् इत्यस्य स्थाने षवन् इति पाठं मन्यन्ते । द्र० सि० कौ० षवन्नित्येके-पृथिवी । 'पृथवी, पृथिवी, पृथ्वी' इति शब्दार्णवः । षिवन्नित्यस्य स्थाने षवन्नित्यस्य सूचनां सर्वस्मात्पूर्वं सम्भवत उज्ज्वलदत्तः प्रदत्तवान् । शब्दकल्पद्रुमे पृथिवीशब्दस्य व्युत्पत्तिर्द्रष्टव्या ।

७. स देवो देवान्प्रति पप्रथे पृथु । (ऋ० सं० २।२४।११)

८. दीर्घं पृथु पप्रथे सद्म पार्थिवम् । (तत्रैव—५।८७।७)

९. निरुक्तम्—२।२ : तद् यथैतद् उतिर्, मृदुः, पृथुः, पृषतः, कुणारुम् इति । अस्य प्रघट्टस्य व्याख्यायै निरुक्तपञ्चमाध्यायस्य पृ० १६६ प्रेक्षणीयम् ।

१०. उणादिसूत्रम्—२८ : प्रथि-म्रदि-भ्रस्जां सम्प्रसारणं सलोपश्च ।

११०. पृष्ठ< √प्रुष् —नोधस्गौतमः पृष्ठशब्दस्य तथा प्रुषितशब्दस्य युगपत्प्रयोगेणानयोः[1] प्रकृतिसमतायाः प्रयोगं कदाचित् कृतवानस्ति। यास्क इमं स्पृश्-धातुना निष्पन्नं मनुते यत् पोठः अङ्गैः स्पृष्टो[2] भवति। शाकटायनस्तु निपातनादस्य सिद्धिमाह। टीकास्वस्य प्रकृतिः पृष् (सेचने) इति कथिता वर्तते[3]।

१११. प्रतरः< √तॄ —शब्देऽस्मिन् 'प्र' उपसर्गः प्रकृतिर्विद्यते[4]। तथा 'तुर' (अंशः) प्रत्ययोऽस्ति[5]। वामदेवगौतमस्तथा कुल्मलबर्हिषशैलूषिः[6], बन्धुगोपायनश्च[7] प्र+तॄ इति विग्रहं कृत्वा अस्य प्रत्ययस्य व्युत्पत्तेः सङ्केतं प्रदत्तवान्। डॉ० सिद्धेश्वर-वर्मादिसाम्प्रतिकभाषाचिन्तकाः प्रत्ययानव्युत्पन्नान् मन्यन्ते[8]। तथा तद्व्युत्पत्तिवार्ताकरणं दोषावहं कथ्यन्ते; परन्तु प्रत्ययोऽपि कदाचिद्व्युत्पन्नप्रातिपदिकमासीत्। कालान्तरे समस्ते जाते पूर्वाङ्गस्याग्रेऽक्षरशो गौणोऽभिजातः। वामदेवादि-महर्षयो भाषाया एतद्विकासेन परिचिता आसन्। इदमेव कारणमस्ति यत् 'तर' इत्यस्य व्युत्पत्ति प्रदत्तवन्तः[9]।

११२. प्रयस् ∆ √ प्र + √ यम् —नोधस्गौतमोऽस्या व्युत्पत्तेः सङ्केतं कृतवान्[10]। अर्थदृष्टया शब्दोऽयं 'हविष्' इत्यनेन समतामेति तथान्नार्थे रूढोऽभवत्।

११३. प्रहित< √प्र+ √हि —शब्दोऽयं 'प्र+हित' इत्यस्य समासोऽस्ति, इत्यापाततः स्पष्टो वर्तते; परन्तु 'हित' इत्यस्य का व्युत्पत्तिरिति जिज्ञासायां न स्पष्टता विद्यते। अयं 'धा' इत्यनेन निष्पन्नस्य 'धित' इत्यस्य हितरूपे विकासोऽपि

---

१. अत्यो न पृष्ठं प्रुषितस्य रोचते, दिवो न सानुस्तनयन्नचिक्रदत्। (ऋ० सं० १।५८।२)
२. निरुक्तम्—४।३ पृष्ठं स्पृशतेः, संस्पृष्टमङ्गैः।
३. उणादिसूत्रम्—१६९ (२।१२) तिथि-पृष्ठ-गूथ-यूथ-प्रोथाः। तत्त्वबोधिनी : तिज् निशाने (१।९५१), पृषु सेचने। (१।६९२)
४. उपसर्गपरिभाषायां द्र० निरुक्तमीमांसा—१५३, १६२।
५. अष्टाध्यायी—५।३।५७ : द्विवचनविभज्योपपदे तरबीयसुनौ।
६. प्रतार्यग्ने, प्रतरं न आयुः। (ऋ० सं० ४।१२।६)
७. प्रतार्यायुः प्रतरं नवीयः। (तत्रैव—१०।५९।१)
८. द एटिमॉलाजीज् ऑफ यास्क, पृ० ९४।
९. निरुक्तमीमांसा, पृ० ४२८।
१०. अस्मा इदु प्रय इव प्रयंसि। (ऋ० सं० १।६१।२)

[1]भवितुमर्हति । तथा गत्यर्थक 'हि' [2]इत्यनेन शब्दोऽयं निष्पन्नोऽपि वर्तते। नृमेध-आङ्गिरसोऽन्यां व्युत्पत्तिं [3]दत्तवान्।

११४. भक्त < √भज् —विश्वामित्रगाथिनः धायुरित्यस्य 'धा' इत्यनेन तथा 'भक्त' इत्यस्य सेवनार्थक-भज्-धातुना व्युत्पत्तिसङ्केतं कृतवान्[4]। अत्र प्रकृतेः जकारस्य 'ग > क' रूपे विपरिणामो विद्यते। ऋषिरिममन्तरं साधुतया ज्ञातवान्। अत इदं शब्दार्थोभयनिर्वचनं विद्यते।

११५. भग ∠ √भज् (विभाजनार्थकः) —वशिष्ठमैत्रावरुणिर्देवविशेषस्य गुणाभिधानं भगस्य व्युत्पत्तिर्वितरणार्थक-दानार्थक-'भज्' इत्यनेन सूचितवान्[5]। प्रतिक्षत्रात्रेयः प्रतिप्रभात्रेयश्चैतदर्थं स्पष्टयितुं 'भज्' इत्यनेन सह बोत्यस्य प्रयोगमाचरितवान्[6]। यास्को योनिवाचकस्य भगस्य व्युत्पत्तिं भज्धातुना [7]प्रस्तुतवान्। अयं भज् सेवनार्थको विद्यते। पाणिनीयतन्त्रे भगं भज्धातुना निष्पादितं वर्तते; किन्तु भजोऽर्थो न स्पष्टः[8]।

ऋग्वेदीयनिर्वचनेषु धात्वर्थो वितरणन्तथा प्रत्ययार्थः कर्तेति सुस्पष्टः। सम्भवतो वैयाकरणानां व्याख्या स्त्रीयोनिपरकभगस्य व्युत्पत्तिं प्रस्तुतां कुरुते। यास्को भगस्य निर्वचनत्रयमददत् —(१) भद्रस्य पर्यायोऽर्थात्—श्रेष्ठः प्राप्तियोग्यं

---

१. पाणिनिरेतस्य विकासस्य सूचनां धेत्यस्य स्थाने ह्यादेशं कृतवादात्। पाणिनीयसूत्रमवलोकनीयम्—७।४।४२ : दधातेर्हिः।

२. माधवीयधातुवृत्तिः—५।११ : हि गतौ, वृद्धौ च : गत्या प्रेरणार्थः प्रतीयते। निरुक्तम्—६।२२।

३. इत ऊती वो अजरम्, प्रहेतारम् प्रहितम्। (ऋ० सं० ८।९९।७)

४. यस्मै धायुरदधा मर्त्याया भक्तं चिद् भजते गेह्यं सः। (तत्रैव—३।३०।७)

५. आध्रश्चिद्यं मन्यमानस्तुरश्चिद्, राजा चिद् भगं भक्षीत्याह। (तत्रैव—७।४१।२)

६. भगो विभक्ता शवसाऽवसाऽऽगमत्। (तत्रैव—५।४६।६) तथा भगं च रत्नं विभजन्तमायोः। (तत्रैव—५।४९।१७)

७. निरुक्तम्—१।७ : भगो भजतेः। अस्य निर्वचनस्याप्रामाणिकतायां निरुक्तपञ्चमाध्यायस्य १०१ पृष्ठं द्रष्टव्यम्। ३।१६ : स्त्रीभगस्तथा स्याद् भजतेः। ४।१० : भद्रं भगेन व्याख्यातम्, भजनीयं भूतानाम्।

८. सिद्धान्तकौमुदी, उ० कृ० प्र०, सू० सं०—३३०४, पृ० ३०१ (मो० बनारसीदाससंस्करणम्)। 'खनो घ च' (अष्टा० ३।३।१२५) घित्करणम् 'अन्योऽन्ययम्' इति ज्ञापनार्थम्। तेन भजेर्भगः। अत्र बालमनोरमा—भज्यत इति कर्मणि घः।

सेवनार्हं वस्तु भगोऽस्ति[१]। अस्मिन्नर्थेऽयं सेवनार्थकेन प्रीत्यर्थकेन वा भज्धातुना सिद्धो विद्यते। (२) स्त्रीयोनिर्भगोऽस्ति[२]। अत्रापि भजः सेवनार्थः स्पष्टो वर्तते। (३) भागार्थे यास्को व्युत्पत्तिं तु नादात्; परन्तु सोऽर्थो वितरणार्थक-'भज्' इत्यनेन निष्कासयितव्यः[३] स्यात्।

११६. भाग ∠ √भज् (विभाजनार्थकः) - कक्षीवद्-दैर्घतमसौशिजः[४], विश्वामित्रगाथिनः[५], हविर्धानाङ्गिरसश्च[६] विभाजनार्थकस्य भागस्य व्युत्पत्तिं वि + √भज् इत्यनेन कृतन्वतः[७]। अयं भज् विभाजनार्थको विद्यते। कक्षीवतः पिता दीर्घतमसौचथ्यः[८] सायणानुसारं फलार्थक-भागेन सह आ + भज् इत्यस्य प्रयोगं समीपकरणार्थेऽथवा स्थापनकरणार्थे कृतवान्[९]।

११७. भानु √भा —प्रस्कण्वकाण्वः[१०], वशिष्ठमैत्रावरुणिः,[११] त्रि-ताप्त्यः,[१२] वत्सप्रिभालन्दनश्च[१३] भानुशब्दं भाधातोः करणरूपे प्रयुक्तवन्तः। यास्कोऽपि

---

१. निरुक्तम्—४।१० ; २. तत्रैव—३।१६।

३. तत्रैव—९।३१ : श्रद्धां भगस्य''''।

४. यदद्य भागं विभजासि नृभ्य उषो देवि मर्त्यत्रा सुजाते। (ऋ० सं० १।१२३।३)

५. वायुविभक्ता भागं धिषणेव वाजम्। (तत्रैव—३।४९।४)

६. तत्रैव—१०।११।८।

७. भज्धातुर्विभाजनार्थे प्रतीयते। सेवनार्थः प्राप्त्यर्थश्चानन्तरकालीयोऽस्य। एभिः प्रयोगैरेकाकि-भज्धातुना वितरणार्थप्रतीतिर्दुरुहाभवत्। परिणामतोऽनेन सह वीत्यस्य प्रयोगो जातः। परवर्तिकालेषु पूर्वतः प्रचलितभागादिशब्दान् विहाय एकाकि-भज्धातोर्वितरणार्थे प्रतीतिरवरुद्धैवास्ति।

८. वेधा अजिन्वत्त्रिषधस्थ आर्यमृतस्य भागे यजमानमाभजत्। (ऋ० सं० १।१५६।५)

९. ऋ० भा० १।१५६।५ : ऋतस्य = यज्ञस्य भागे हुतशेषरूपे तं यजमानमाभजत् = भजति, समीपयतीत्यर्थः। यद्वा ऋतस्य = यज्ञस्य भागे फले यजमानमाभजत् = स्वामित्वेन स्थापयति।

१०. उष, आ भाहि भानुना चन्द्रेण दुहितर्दिवः। (ऋ० सं० १।४८।९)

११. ऋ० सं० ७।७७।५।

१२. यो भानुभिर्विभावा विभात्यग्निर्देवेभिः ऋतावाऽजस्रः। (तत्रैव—१०।६ २)

१३. सद्यो जज्ञानो वि ही मिद्धो अख्यद्; आ रोदसी भानुना भात्यन्तः। (तत्रैव—१०।४५)

भेत्यस्य पर्यायभूतस्याञ्ज्धातोः करणरूपे प्रयोगं कृतवान्[१] । टीकाकारानुसारं शाकटायनो भानुं भाधातोः कर्त्रर्थे मन्यते[२] ।

११८. भास् √भा —वशिष्ठमैत्रावरुणिः[३], त्रिताप्त्यश्च[४] भासः प्रयोगं दीप्त्यर्थक-भाधातोः करणरूपे भानुवत्कृत्वा सङ्केतं कृतवानस्या व्युत्पत्तेः । पाणिनिस्तु भास्धातुना कर्त्रर्थे व्युत्पादितवानिमम्[५] ।

ऋग्वेदसंहितायां भासः प्रयोगोऽनुपलब्धः । अन्यासु संहितासु याजुषपरम्परायामयमेकस्मिन् प्रयोगे[६] 'भासत्' ( √भास् ) शतृप्रत्ययान्तरूपे एकधैवोपलब्धो भवति । आनन्तरिकसाहित्ये प्रयोगोऽस्य ब्राह्मणेषु प्रचुरतया जातः । १. भासशब्दः[७], २. भासकशब्दश्च[८] प्राप्यते । उपनिषद्युगे तु ( परकालिकोपनिषदि ) अस्य कृदन्तरूपमाख्यातरूपञ्च लभ्यते । एतदाधारे—एतन्निष्कर्षनिष्कासनं नासङ्गतं प्रतिभाति यत्—क. ऋग्वेदकाले 'भा' इत्यस्यैव प्रयोगो भवति स्म । ख. अनेन निष्पन्नं संज्ञापदं 'भास्' इति ऋग्वेदकाले प्रयुक्तं जायते स्म । ग. याजुषकालेऽयं 'भास्' नामपदं भासो रूपे व्यवहृतो बभूव । तथा लिखितभाषायामेकः कृदन्तशब्दो लभ्यते । घ. ब्राह्मणयुगेऽस्य किञ्चित् प्रयोगः कृदन्तरूप एव अभवत् । ङ उपनिषद्रचनाया निम्नसमयस्तरोपरि त्वेतस्याख्यातरूपमपि प्रयोगे सङ्गच्छते स्म । च. वेदाङ्गस्य कालेऽस्याख्यातस्य रूपे प्रयोगो भवति स्म स्वतन्त्रतया ।

११९. मण्डूक √मन्द—वशिष्ठमैत्रावरुणिः मन्द् ( आनन्दितार्थकेन ) सह

---

१. निरुक्तम्—१२।७ उषसः ···· पूर्वे अर्धे रजसो भानुमञ्जते । ऋ० सं० १।९२।१ : समञ्जते भानुना ।

२. उणादिसूत्रम्—३१२ (३।३२) : दाभाभ्यां नुः । सि० कौ० दानुर्दाता । अत्र दानुः कर्त्रर्थकस्तस्माद् भानुरपि कर्त्रर्थकः ।

३. वृषा हरिः शुचिरा भाति भासा । (ऋ० सं० ७।१०।१)

४. चिकिद् वि भाति भासा बृहता । (तत्रैव—१०।३।१)

५. अष्टाध्यायी—३।२।१७७ : भ्राज-भास-धुर्वि-द्युतोर्जि-पृ-जु-ग्रावस्तुवः क्विप् ।

६. माध्यन्दिन-सं० १२।३२; काण्व-सं० १३।३।३; तैत्तिरीय-सं० ४।२।३।१, मैत्रायणी-सं० २।७।१०, काठक-सं० १।०।१०; कपिष्ठलकठ-सं०—२५।१; बृहद्भिर्भानुभिर्भासन् ( अग्निः ) ।

७. तै० ब्रा० १।२।३।४, ऐ० ब्रा० ४।१९; ताण्ड्य-ब्रा० ४।६।१५, ६।६।८, १४।११।१२, १४, आर्षेय-ब्रा० १।४७० ।

८. आर्षेय-ब्रा० १।४७० ।

कर्तृरूपे मण्डूकस्य प्रयोगं विधायास्या व्युत्पत्तेः सङ्केतं[१] प्रदर्शितवान् । यास्को मण्डूकस्य व्युत्पत्तिपञ्चकं कृतवान् । तत्रान्यतमेयमपि व्युत्पत्तिः । असौ वैयाकरणानां मते मण्ड्-इत्यस्माद् व्युत्पन्नमिमं कथितवान्[२] । शाकटायनेनापीयं व्युत्पत्तिः प्रदत्ता । टीकासु मण्डमिमं भूषार्थेऽमन्यत[३] । सिद्धान्तकौमुद्यां मण्डो यूषः-क्षेरो-दोपन-पाचन इत्योङ्कारनाथः ।

१२०. मधु √मद् —श्यावाश्वात्रेयः[४] 'मधु' इत्यस्य व्युत्पत्तिसङ्केतं √मद्-इत्यनेन सह 'मदिर'-विशेषणस्य मदित्यस्मान्निष्पन्नस्य प्रयोगं कृत्वोक्तवान् । [५]यास्कोऽपीमं मद्-धातुनैव निष्पन्नमवादीत् । शाकटायनस्तु[६] मन्-धातुना निष्पन्नमिममकथयत् । व्युत्पत्तिरियं 'मनसे रोचते' तस्मात्प्रदत्तास्ति । मधु इत्यस्य द्वावर्थौ विद्येते । प्रथमः शहद इति द्वितोयो मदिरा इति । यास्क[७]-शाकटायनौ[८] 'मांस' इति 'मन्'

---

१. अन्यो अन्यमनुगृभ्णात्येनोरपां प्रसर्गे यदमन्दिषाताम् । मण्डूको यदभि-वृष्टः कनिष्कन् । (ऋ० सं० ७।१०३।४)

२. निरुक्तम्—९।५ : मण्डूका । १. मज्जका मज्जनात् । २. मदतेर्वा मोदति-कर्मणः । ३. मन्दतेर्वा तृप्तिकर्मणः । ४. मण्डयतेरिति वैयाकरणाः । ५. मण्ड एषामोक इति वा ।

३. उणादिसूत्रम्—४८२ (४।४२) : शलि-मण्डिभ्यामूकण् । तत्त्वबोधिनी तथा बालमनोरमाः—शल गतौ ( मा० धा० वृ० १।२८ ), मडि भूषायां हर्षे च ( मा० धा० वृ० १०।५२) त० बो० चौरादिकेनोक्त्वापि भौवादिकेनात्रोक्तम्, वेष्टनार्थेन व्याख्यातम् । (१।२६९) : मण्डते वर्षा-समयमिति मण्डूको भेकः । सि० कौ० आत्मनेपदिनो मण्ड इत्यस्यार्थो नोक्तः । सरस्वतीजीवो वेष्टनार्थे मण्डमुक्त्वाऽग्रे भूषार्थे परस्मैपदिनमुक्तवान् । मडि च । पृथक्पाठादयं वेष्टनेऽपीत्याहुः । 'मडि भूषायाम्' ( सि० कौ० ) इत्यग्रे परस्मैपदिषु । अतस्तस्यात्मनेपदिना 'मण्ड्' इत्यनेन व्याख्या पूर्वापरविरोधत्वाच्चिन्त्यास्ति । सायणो मण्डूकस्य व्युत्पत्तिं वेष्टनार्थक-भौवादिकेनात्मनेपदिना प्रदत्तवान् । मडि च (मा० धा० वृ०) .... मण्डूकः 'शलि-मण्डिभ्यामूकण्' (उणादिसूत्रम् ४८२) इत्यूकण् । .... मडि भूषायां हर्षे च (१०।५३) मण्डयति । मण्डत इति वेष्टने शपि । मा० धा० वृ० इत्यस्य चौखम्बासंस्करणे 'शरि' इति प्रूफस्याशुद्धिः । शल-चलनसंवरणयोः (१।४८६) इत्यत्र पाठो धृतोऽस्ति ।

४. य ईवहन्त आशुभिः पिबन्तो मदिरं मधु । अत्र श्रवांसि दधिरे । (ऋ० स० ५।६१।११)

५. निरुक्तम्—४।८ : 'मधु सोमम्' इत्यौपमिकम्, माद्यतेः । इदमपीतरन् मध्वेतस्मादेव ।

६. उणादिसूत्रम्—१८ : फलि-पटि-नमि-मनि-जनां गुक्-पटि-ना-ध-न्तश्च । सि० कौ०: मन्यत इति मधु ।

७. निरुक्तम्—४।३ : मांसं=माननं वा । मानसं वा । मनोऽस्मिन्त्सीदति वा ।

८. उणादिसूत्रम्—३४४ (३।६४) : मदेर्दीर्घश्च ।

इत्यस्मान्निष्पादितवन्तौ । अत्र मनो लगति । इदं मनसे रोचते । मांसेन सह मदिरा ( मधु ) अधिकरुचिकरा भवति । अतो लगति यच्छाकटायनः 'मधु<मन्' इति व्युत्पत्तिं मदिरार्थकस्य मधुशब्दस्यैव कृतवानस्ति । एवन्तु मधुरत्वात् शहदविशेषपदार्थो 'मधु' इत्यपि रुचिवर्द्धकं भवति । अतोऽयमपि मधुशब्दो मन्धातुनैवाभिप्रेतोऽस्ति । ऋग्वेदे मधुशब्दः सोमस्य प्रसङ्गे बहुधा प्रोक्तः । सोमो[1] मादको भवति । अतोऽयं तामसार्थ-विशिष्टो मधुशब्दो मदिमदित्यनेनाभिप्रेतो वर्तते ।

१२१. मधुदोघ < √ दुह् —वसिष्ठमैत्रावरुणिर्मधुदोघेण सह दुहः प्रयोगं कृत्वाऽस्य शब्दस्योत्तरपदस्य व्युत्पत्तिमुदघोषयत्[2] ।

१२२. मनीषिन्<मनस् —विश्वकर्मन्-भौवनः[3] 'मनीषिन्' इत्यनेन सार्द्धं मनसः प्रयोगं प्रकृत्यास्य पूर्वांशं व्याख्यातवान् । वैयाकरणा अपीमामेव व्युत्पत्तिं मन्यन्ते[4] । यास्कस्तु मनष् + ईषा इत्यनेनास्य व्याख्यामजल्पयत्[5] । श्यावाश्वस्य मनस > मन > मन् + ईषा इति व्युत्पत्तिरभिप्रेतास्ति ।

१२३. मनुष्य> मन् —लुशधानाकः[6] मनुष्याणां कर्तृत्वे मन्नित्यस्य प्रयोगेणास्या व्युत्पत्तेः सङ्केतं कृतवान् । यास्को मनुष्यस्य चत्वारि निर्वचनानि प्रतिपादितवान्[7] । तत्र प्रथमे शब्दस्यास्य पूर्वांशस्य 'मन्' इत्यस्य व्याख्यां मन् इत्यनेन तथोत्तरांशस्य 'उष्य' इत्यस्य 'सोव्'-धातुना चक्रे । एषु तृतीयं निर्वचनं पाणिनिरयच्छत्[8] । 'मनु' इत्यस्य 'मन्' इत्यनेन सम्बन्धं मनुर्वैवस्वता मन् इत्यनेन निष्पन्नमन्युशब्देन सह कृत्वा प्रकाशितवान्[9] । मननविशेषताया आधारे नरस्य मनुष्येति नामाभवत् ।

---

१ निरुक्तपञ्चमाध्यायस्य ४३५ पृष्ठमवलोकनीयम् ।

२. तिस्रो वाचः प्रवद ज्योतिरग्रा, या एतद् दुह्रे मधु-दोघमूधः । (ऋ० सं० ७।१०१।१)

३. मनीषिणो मनसा पृच्छतेदु तद्, यदध्यतिष्ठद्भुवनानि धारयन् । (तत्रैव—१०।८१।४)

४. सि० कौ०, अच्सन्धिप्रकरणम् । पृष्ठ ८२ : शकन्ध्वादिषु पररूपं वाच्यम् । .... मनीषा । (काशिका—वा० ६।१।९४)

५ निरुक्तम्—२।२५ : मनीषया = मनस ईषया ।

६. पिपर्तु मा तद् ऋतस्य प्रवाचनं देवानां यन्मनुष्या अमन्महि । (ऋ० सं० १०।३५।८)

७ निरुक्तम् — ३।७ : मनुष्याः कस्मात् ? ( द्रष्टव्यम् ) तथा निरुक्तपञ्चमाध्यायस्य ३०१ पृष्ठम् ।

८. अष्टाध्यायी—४।१।१६१ : मनोर्जातावञ्यतौ षुक् च ।

९. यदोसो ह्रिष्मा मनवे समन्यवः । (ऋ० सं० ८।२७।१४)

१२४. रश्म, रश्मि—√रंश् - √यम् शुनःशेप आजीगर्ति[१], दीर्घतमसौचथ्यः[२], भरद्वाजबार्हस्पत्यः[३], श्यावाश्वात्रेयश्च[४] यमा सह 'रश्म' इत्यस्य रश्मीत्यस्य युगपत्प्रयोगमाचरितवन्तः। उभे नामपदे रश्धातुना स्तः। अद्यतनीयभाषायामिमं 'रास', 'रस्सा', 'रस्सी' च व्यवहरन्ति लोकाः। अनेन प्रयोगेण विदितो जायते यत्—१. 'रश्' इति कस्मिंश्चित् काले आख्यातरूपे प्रयुक्तो भवति स्म। २. ऋग्वेदकाले तेन निष्पन्नानि कानिचित् कृदन्तनामपदान्येव[५] प्रयोगपथमायान्ति स्म। ३. 'रश्' इत्यस्य स्थानं यम्धातुर्गृहीतवानासीत्। आख्यातरूपे यत्र रशः प्रयोगस्यावश्यकता भवति स्म, तत्र निस्संकोचपूर्वकं यमः प्रयोगो भवति स्म। ४. अत इमे ऋषयो रशः, यमश्चानेन सम्बन्धेनातीवपरिचिताः प्रतिभान्ति।

यास्कः 'रश्मी'त्यस्य निर्वचनं यमेव कृतवानस्ति[६]। अस्मिन्नर्थे यमः स्पष्टप्रयोगमर्चत्—हैरण्यस्तूपी[७] यन्त्रस्य रूपे व्यवहारार्थमानीतवान्। शाकटायनो[८] रशनेति पदं रश्मीति पदञ्च अशः स्थाने रशादेशेन व्युत्पादयत। वार्ता सैव वर्तते यद्रश् इति एतावत्प्राचीना प्रकृतिरस्ति यत् परम्परया समागतानि कानिचित् कृदन्तपदानीत्युक्त्वा आख्यातरूपे तत्प्रयोगः सर्वथा प्रचलितोऽभूत्। शाकटायनो रशनावद् रश्मीव च 'राशिः' पदमपि अशिरेफस्याद्यागमेनासाधयत्[९]। पतञ्जलेः[१०] कथनमस्ति यत् 'रश्'

---

१. यत्र मन्थां विघ्नते रश्मीन्यमितवा इव। (ऋ० सं० १।२८।४)

२. रश्मींरिव यो यमति जन्मनी उभे। (तत्रैव—१।१४।११) वोल्हुर्न रश्मीन्तसमयंस्त सारथिः। (तत्रैव—१।१४४।३)

३. सं या (मित्रा-वरुणा) रश्मेव यमतुर्यमिष्ठा। (तत्रैव—६।६७।१)

४. अश्विना .... रश्मांरिव यच्छतमध्वरां उप। (तत्रैव—८।३५।१)

५. रशना, रश्मन्, रश्मि तथा राशि। 'रज्जू' इत्येतस्य (तै० सं० २।५।१।७) यास्कः शाकटायनश्च 'सर्जू ∠ सृज्' धातोराद्यन्तविपर्ययेणामन्येताम्। निरुक्तम् - २।१ तथा उणादिसू० १५। कदाचिदयमपि रश्धातुनैव सिद्धो वर्तते। दीर्घतमसौचथ्यः 'यद् वाजिनो दाम सन्दानमर्वतो या शीर्षण्या रशना रज्जुरस्य'। ऋ० सं० १।१६२।८ इत्यत्र रशनया सहास्य प्रयोगं कृत्वा कदाचिद् '√ रश > रज्जु-व्युत्पत्ति' तथैव प्रकाशितवान् यथा 'दामन्' > √दा इति प्रकाशितवान्।

६. निरुक्तम्—२।१५ : रश्मिर्यमनात्।

७. सविता यन्त्रैः पृथिवीमरम्णात्। (ऋ० सं० १।१४९।१)

८. उणादिसूत्रम्—२२३ (२।७६) अशो रश्च। ४८६ (४।४६) : अश्नोते रश्च।

९. तत्रैव—५७२ (४।१३२)।

१०. महाभाष्यम्—७।२।९५, वा० ८, पृ० ९० : रशिरश्मा अविशेषेणोपदिष्टः। स राशिः, रश्मिः, रशनेत्येवंविषयः।

इति नाख्यातरूपे प्रयुक्तो भवति ; अपि त्वसौ राशि-रशना-रश्मिशब्देष्वेव सीमितो वर्तते।

१२५. राष्ट्रः √राज्—वशिष्ठमैत्रावरुणिः[1] राज्-धातुना निष्पन्नेन 'राजन्'[2] इत्यनेन साकं राष्ट्रस्य तत्कर्मरूपे प्रयोगं विधाय व्युत्पत्तिमिमां सूचितवान्। प्रयोगेऽस्मिन् तालव्यस्पर्शजकारस्य मूर्द्धन्यषकारादेशः स्पष्टतया विदितोऽस्ति। एतद् ध्वनिविकारस्यैकमपरमुदाहरणं 'यष्टृ-याज' इति रूपे ऋजिश्वन्-भारद्वाजोऽददत्[3]।

१२६. वश् ८ √उश्—प्रतर्दनदैवोदासिरेतयोर्द्वयोः प्रकृत्योरेकत्रितप्रयोगेणानयोः सम्बन्धं स्पष्टयितुमुद्यतः सम्प्रसारणप्रवृत्त्या स्वपरिचयमपि सूचितवान्[4]।

१२७. वाजिः ८ √वाज—मधुच्छन्दस्वैश्वामित्रः 'वाजिन' नामपदस्य 'वाजयाम' इत्याख्यातपदस्य प्रकृतिरूपे 'वाजेषु' नामपदस्य प्रयोगं कृतवानस्ति[5]। अर्थात् 'वाज'नाम्ना निष्पन्न-वाजिनामधातोः प्रयोगं मधुच्छन्दस्नामको विद्वान् सम्पादितवानस्ति। तस्य समयेऽयं सुविदित आसीद् यन्नामपदमपि धातो रूपे प्रयुक्तं भवति। कुत्साङ्गिरसः[6], विश्वामित्रगाथिनश्च[7] एतन्नामधातोः प्रयोगं 'वाज' इत्यनेन मत्वर्थे निष्पन्नेन वाजिन्शब्देन सार्द्धं कृतवन्तौ। एवम्भूतस्यैकमन्यदुदाहरणं संवननाङ्गिरसस्य 'मन्त्र' नामपदेन सह 'मन्त्रये' इति नामधातोः प्रयोगोऽस्ति। मन्त्रशब्दः स्वयं 'मन्' इत्यनेन व्युत्पन्नस्य रूपे परिज्ञातोऽस्ति। अयमपि तेन मन्त्रशब्दस्य मनस्शब्दस्य च युगपत्प्रयोगेण सूचितः[8]। √मन् इत्यनेन मनसो व्युत्पत्तौ भरद्वाजबार्हस्पत्यो[9] वशिष्ठमैत्रावरुणिश्च[10] इत्यनयोरुभयोर्युगपत्प्रयोगो ज्ञापको वर्तते।

---

१. राजा राष्ट्रानाम्। (ऋ० सं० ७।३४।११) सातवलेकरसंस्करणस्य मूले तु अयं पाठः प्रकाशितः ; परन्तु मन्त्राणां वर्णानुक्रमसूच्यां ९२६ पृष्ठे 'राष्ट्राणाम्' इत्यत्र नकारस्य स्थाने णकारो भ्रमवशात्प्रकाशितो जातः।

२. ईक्षे हि वस्व उभयस्य राजन्। (ऋ० सं० ६।१९।१०) अत्र राजन्नित्यस्य कर्तृत्वे प्रयुक्तः 'ईश्' शासनार्थकोऽस्ति। तथा √राज् इत्यस्य पर्यायो विद्यते। (तत्रैव—२।२१।४) निघण्टौ 'राज्' ऐश्वर्यार्थे प्रदत्तः।

३. न हीयतामति-याजस्य यष्टा। (ऋ० सं० ६।५२।१)

४. तदुशन्ति विश्वे इमे सखायस्, तदिहं वश्मि पवमान, सोम। (तत्रैव - ९।९६।४)

५. तं त्वा वाजेषु वाजिनं वाजयामः शतक्रतो। (तत्रैव—१।४।९)

६. नराशंसं वाजिनं वाजयन्निह। (तत्रैव—१।१०६।४)

७. इन्द्र, ऋतुभिर्वाजिभिर्वाजयन्निह स्तोमं जरितुरुपयाहि यजियम्। (तत्रैव—३।६०।७)

८. समानो मन्त्रः, समितिः समानी, समानं मनः सह चित्तमेषाम्।
समानं मन्त्रमभि मन्त्रये वः, समानेन वो हविषा जोहवीमि॥ (तत्रैव—१०।१९१।३)

९. वि मे मनश्चरति दूर-आधीः किं स्विद्वक्ष्यामि ? किमु नू मनिष्ये। (तत्रैव—६।९।३)

१०. न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ। (तत्रैव—७।४।८)

१२८. वाम < √वन् —भरद्वाजबार्हस्पत्यर्षिः व्युत्पत्तेरस्यां सङ्केतं प्रकृतेः 'वन्' तथा विकृतेः 'वाम' इत्यस्य युगपत्प्रयोगेण कृतवान्[1]। अत्रायं कर्मणि निष्पादितोऽभिप्रतीयते। 'वाम' इत्यस्य व्याख्यां सर्वत्र[2] यास्कः 'वन्' इत्यनेन निष्पन्नेन वमनीयेनाकार्षीत्। शाकटायनः[3] इमं वाधातुना निष्पन्नमकथयत्; किन्तु स्वरदृष्ट्या वैदिक अन्तोदात्तवामः शाकटायनव्युत्पादिताद्युदात्तवामादभिन्नो विद्यते। अर्थदृष्ट्या लौकिकवामस्य विकास एवंरीत्या समुत्पन्नो लगति। वामः = सेवनीयः (वमनीयः) = सुन्दरः, नखरालुः = टेढ़ा (लौकिकः)। राष्ट्रभाषायाः 'बाँका'-शब्दोऽनया दृष्ट्या विपरीतप्रक्रियां गृहीत्वा 'वाम'शब्दस्य किञ्चिन्निकटवर्ती विलोक्यते। एवं तु बाँका-शब्दस्य प्रकृतिर्वक्रशब्दे विकसित आसीत्। शाकटायनः सम्भवतो वामशब्दस्य विपरीतकुटिलाद्यर्थं दर्शं दर्शं गत्यर्थक-वाधातुना वामशब्दं निष्पादितवान्। एवन्तु 'वन्' इत्यस्यार्थः सम्भजनमपि गतिरेवास्ति। अतः 'न > आ' इति ध्वनिविकासस्य कुचक्रादवकाशं प्राप्तुमपि √वा इत्यनेन वामस्य व्युत्पत्तिमशंसयदिति भवितुमर्हति। लौकिकेऽसौ वामस्य पर्यायभूत-'वक्र'स्य व्युत्पत्तिमपि गत्यर्थक-'वञ्च्'धातुनादात्[4]।

१२९. विधवा ∆ √विध्—कक्षीवती घोषा[5] पुंल्लिङ्गविधतः स्त्रीलिङ्गविधवायाश्च सहैव प्रयोगं कृत्वा कदाचिदनयोः समानधातुजतायाः सङ्केतं कृतवती। श्रीविश्वबन्धुः[6] विधन्तमित्यस्यार्थं (विधवां) परिणयन्तमिति कृतवान्। सायणस्तु विधन्तमित्यस्यार्थं परिचरन्तन्तथा विधवाशब्दार्थमपतिकेति जगाद[7]। आधुनिकविद्वांसो विधवाशब्दं वियोगार्थक-विध्धातुना निष्पन्नं मन्यन्ते[8]। सायणस्य[9] विधवा = अपतिकेति

१. नृवत् त इन्द्र, नृतमाभिरूती वंसीमहि वामं श्रोमतेभिः। (ऋ० सं० ६।१९।१०)

२. निरुक्तम्—४।२६; ६।२२, ३१; ११।४६।

३. उणादिसूत्रम्—१३७ : अर्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन्। नकारानुबन्धस्य प्रयोजनमनेन निष्पन्नस्याद्युदात्तकरणं विद्यते। द्र० पा० सू० (६।१।१९७) : ञ्नित्यादिर्नित्यम्।

४. उणादिसूत्रम्—१७० (२।१३) : स्फायि-तञ्चि-वञ्चि-शकिशुभिभ्यो रक्।

५. युवं ह कृशं, युवमश्विना शयुं, युवं विधन्तं, विधवामुरुष्यथः। (ऋ० सं० १०।४०।८)

६. वैदिकपदानुक्रमकोषः—१।५, पृष्ठम्—२८६६ टि० पी०।

७. ऋ० भा० १०।४०।८ : युवां विधन्तं = परिचरन्तं मनुष्यं, विधवां चापतिकां वध्रि-मतिं योद्ध्रीं स्त्रियं चोरुष्यथः (रक्षथः)।

८. द्रष्टव्यम्—रोथ्महोदयस्य तथा ग्रास्मानस्य जर्मन-संस्कृतशब्दकोषः।

९. ऋ० सं० ४।१८।१२ तथा १०।४०।८ द्रष्टव्यम्—विऽधवाम्। पूनातः प्रकाशित ऋग्वेदसंहितायाः पदसूची-ग्रन्थस्योत्तरपदसूच्यां तथा विश्वबन्धुकोषस्य १।६ इत्यत्र प्रदत्तोत्तरपदसूच्यां शब्दस्यास्य सङ्कलनं नास्ति। किमेते 'धव' इत्यस्योत्तरपदत्वं नाङ्गीकुर्वते। पूनासंस्करणे संहिताभागे पदसूच्याञ्च अवग्रहो मुद्रितो वर्तते।

व्याख्या शाकल्यस्य पदपाठे आधारिता प्रतीयते। यास्क[1] इमं द्वयोः पदयोः समासं विधाय विधवेति पदं निष्पन्नं मत्वा पूर्वपदे 'वि' तथोत्तरपदे १. धा, २. √धू, ३. धाव् इत्याभ्यां ( चर्मशिरस्नाम्ना ) निष्पन्नस्य धवस्य ४. मनुष्यपर्यायधवस्य चान्यतम-विकल्पं प्रादात्।

ग्रीक् आद्युदात्तः 'विथेओस्' ( Vitheos ) संभवतः ( वि-धवा ) व्युत्पत्तावेवा-धारितोऽस्ति, तथानेनैव कारणेन शब्देऽस्मिन् बहुव्रीहिसमासस्य स्वरः 'वि' इत्युदात्तः[2] ग्रीक्-इत्यस्मिन् वर्तते । वैदिकविधवाशब्दे बहुव्रीहेः शब्दो नास्ति। ध्यातव्यमिद-मस्ति।

धवस्य स्वतन्त्रः प्रयोग ऋग्वेदे तथा यजुर्वेदपरम्परायां नाभूत् । दीर्घतमस्-औचथ्येन[3] विमद ऐन्द्रेण[4] च प्रयुक्तः 'आधव'पदे कम्पनार्थको धवः 'धू' इत्यनेन निष्पन्नपदरूपे यौगिकार्थे उत्तरपदस्य रूपे समागतः; परन्त्वयमपि विधवाघटक-कल्पित-'धव' इत्यस्माद्भिन्नोऽस्ति। विधवेत्यस्य धव आद्युदात्तो विद्यते। तथाऽयं धव अन्तोदात्तो मन्यते[5]। अस्यान्तोदात्तात्मकधवस्य प्रयोगः कस्यचिद्वृक्षविशेषायाथर्वण-परम्परायामभवत्[6]। श्रीविश्वबन्धोर्मते[7] पतिपर्यायस्य धवस्य स्वरो ज्ञातो नास्ति। [8]पैप्पलादसंहितामात्रजितवान्।

---

१. निरुक्तम्—३।१५ : विधवा क. विधातृका भवति, ख. वि-धवनाद् वा, ग. वि-धावना-द्वेति चर्म-शिराः, घ. अपि वा 'धाव' इति मनुष्य-नाम, तद्वियोगाद् वि-धवा। व्याख्यार्थं निरुक्तपञ्चमाध्यायस्य ३६७-३६८ पृष्ठं द्रष्टव्यम्।

२. पा० सू० ६।२।१ : बहुव्रीही प्रकृत्या पूर्वपदम्।

३. यदीमनु प्रदिवो मध्व आधवे गुहा सन्तं मातरिश्वा मथायति। (ऋ० सं० १।१४१।३)

४. मंसीमहि त्वा वयमस्माकं देव पूषन् । मतीनां च साधनं, विप्राणां चाधवम्।
(तत्रैव—१०।२६।४)

५. द्र० विश्वबन्धोर्वैदिकपदानुक्रमकोषः —१।२, पृ० ६५४ टि० एन० : कर्तरि भावे च अच्-प्रत्ययः। तथा १।३, पृ० १७२८ टि० ए० : कर्तरि अच्प्रत्ययः। अच्प्रत्ययस्य चित्त्वात् धवोऽन्तोदात्तः। पा० सू० ६।१।१६६ : चितः।

६. द्रष्टव्यम्—शौनकशाखा—५।५।५, २०।१३१।१४, पैप्पलादशाखा—६।४।४; ९।६।११। वैदिकपदानुक्रमकोषस्य १।३ इत्यस्य १७०१ पृष्ठस्य स्तम्भे द्वितीयमन्त्रस्य संख्या १७ प्रदत्तास्ति। अशुद्धेयम्, शुद्धा संख्या तु तेनैव संपादितार्थवसंहितायामयं मन्त्रश्चतुर्दशसंख्या-त्मकोऽस्ति।

७. अनुगमनोयम्—वैदिकपदानुक्रमकोषस्य १।३ इत्यस्य १७०१ पृष्ठस्य २ स्तम्भे टि० जे०।

८. ऋ० सं० २०।६।१७।

अनेन विवरणेन ज्ञायते यदृग्वेदकाले तु धवस्य पत्यर्थकताभिप्रमाणापेक्षिता वर्तत एव, पैप्पलादसंहितायाः स्थलमेकमेकस्य मते विहाय शेषमन्त्रब्राह्मणात्मकवेदराशावपि अर्थेऽस्मिन्नयं प्रयुक्तो न लभ्यते। निघण्टौ[१] मनुष्यपर्यायेषु 'धवाः' इत्यस्य समाम्नाधिक्यं कृत्वा (१) पैप्पलादसंहिताधारे[२] यद्वा (२) शाकल्यस्य पदपाठाधार एवाभवदिति प्रतीयते। लौकिकप्रयोक्तृभिर्धव इत्यस्य पत्यर्थकप्रयोगः सर्वप्रथममुपर्युक्तपदपाठे शाकल्यात्मके विदितो विद्यते। तत्पश्चादयं निघण्टौ[३] तथा निरुक्ते[४] यास्कशङ्खलिखितैर्निजधर्मसूत्र[५] एव कृतः प्राप्यते। पुराणेषु तथा पञ्चतन्त्रग्रन्थेऽस्य प्रयोगः पर्याप्तरूपेणाभवत्।

१३०. विप्र< √विप्—भरद्वाजबार्हस्पत्यो विप्रस्य वेपिष्ठस्य च युगपत्प्रयोगेणास्य सम्बन्धं 'विप्' इत्यनेन द्योतितवान्[६]। वामदेवगौतमो[७] वेपसस्तथा भरद्वाजबार्हस्पत्य[८] वेपीत्यस्य प्रयोगं स्तुतिसन्दर्भे चक्राते।

प्रकृतमन्त्रेऽप्ययं स्तोतुः पर्यायभूतेन 'रेभ' इत्यनेन साकं समागतः। अतोऽयं 'विप्' स्तुत्यर्थे सम्बद्धो वर्तते। यद्यप्ययमर्थो लाक्षणिको भवेत्। √विप्=कम्पनकरणम्=देवतायाः स्तुत्या द्रवितकरणम्=अनुकम्पितकरणमित्यर्थः। 'विप्र' 'विप्+र' इत्यनेन, 'वेपस्' 'विप्+अस्' इत्यनेन, 'वेपिष्ठ' √विप्+इष्ठन् इत्यनेन निष्पन्नो वर्तते। वैयाकरणा विप्रं वपनक्रियात्मक-वप्धातुना निष्पन्नं मन्यन्ते[९]।

१३१. वीरुध्<√वि+रुह्-कक्षीवती घोषा अस्य कृदन्तशब्दस्य व्युत्पत्तिमस्य विग्रहं कृत्वाऽवदत्[१०]। अस्याः पितामहो दीर्घतमसौचथ्योऽस्य शब्दस्योत्तरपदस्य 'रुध्' इत्यस्य व्युत्पत्तिं 'रुहः' प्रयोगेणास्पष्टयत्[११]। अत्र निम्नवार्ता सुस्पष्टा विद्यन्ते—१. 'वि' इत्यस्य दीर्घो जातः। २. यागोऽयं कर्त्रर्थकोऽस्ति। ३. 'ह' इत्यस्य विपरिणामे

---

१. ऋ० सं० २।३।३; २ तत्रैव २०।६१।७; ३. तत्रैव—२।३।३;
४. तत्रैव—२।३।१५; ५. तत्रैव—२।११६।६३।
६. वेपिष्ठो अङ्गिरसां यद्ध विप्रो मधुच्छन्दो भनति रेभ इष्टौ। (तत्रैव—६।११।३)
७ वि पाह्यग्ने गृणते मनीषां खं वेपसा तुवि-जात स्तवानः। (तत्रैव—४।११।२)
८. पृच्छन्ती वज्रहस्तं, रथेष्ठामिन्द्रं वेपी वक्वरी यस्य नु गीः। (तत्रैव—६।२२।५)
९. उणादिसूत्रम्—१८६ (२।२९): ऋज्रेन्द्राग्र-वज्र-विप्र-कुत्र-चुत्र-क्षुर-खुर-मदोग्र-भेर-भेल-शुक्र-शुक्ल-गौर-वन्देरा-मालाः। ज्ञानेन्द्रसरस्वती, वासुदेवदीक्षितश्चेमं डुवप्-(बीज-सन्ताने) धातुना साधितवन्तौ। (सि० कौ०, भ्वा० १००३)
१०. जनिष्ट योषा: पतयत्कनीनको, वी चारुहन्वी-रुधो दंसना अनु। (ऋ० सं० १०।४०।९)
११. स प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति। (तत्रैव—१।१४१।४)

'ध' अजायत । अतो ध्वनीमौ परस्परसम्बद्धौ स्तः । नैरुक्तं[1] वैयाकरणा अपि[2] व्युत्पत्तिमिमामेव मन्यन्ते ।

वीरुध्<√वि + रुध्—पराशरशाक्त्यः शब्दस्यास्य व्युत्पत्तिं रुहः स्थाने 'रुध्' इति कृत्वाऽकरोदिति प्रतिभाति[3] । शब्दकल्पद्रुमकोषेऽपीयमेव व्युत्पत्तिर्दृश्यते[4] ।

१३२. वृक्ष<√व्रश्च् —परुच्छेप-दैवोदासिः कर्तनाद् 'व्रश्च' इत्यनेन वृक्षस्य व्युत्पत्तिमगादीत्[5] । यास्कः[6] [7]शाकटायनश्चेमामेव व्युत्पत्तिं ददतुः ।

१३३. वृत्र<√वृ —गृत्समदो[8] वामदेवगौतमो[9] भरद्वाजबार्हस्पत्यः[10] पर्वतकाण्वः[11] अमहीयु आङ्गिरसश्च[12] जलावरोधकरणहेतुना कर्त्रर्थे वृ इत्यनेन वृत्रस्य व्युत्पत्तिमद्योतत । विश्वामित्रगाथिनो[13] वृत्रमिन्द्रकर्तृकवरणकर्मांजल्पत् । तैत्तिरीयसंहितायां[14] वरणस्य कर्मरूपे ये लोका इत्यकथयत् । व्युत्पत्तिरियं वृत्रस्य भौतिकाकारे दानवीकरणस्य वृद्धिगतायाः प्रवृत्तेः परिणामे[15] वर्तते । तैत्तिरीय-

---

१. निरुक्तम्—६।३ : वीरुध ओपधयो भवन्ति ।

२. काशिका ७।३.५३ : १. न्यग्रोधो २. वीरुदित्यत्र १. न्यक्पूर्वस्य रुहेः पचाद्यचि, २. विपूर्वस्य क्विपि धकारो विधीयते । १. न्यग् रोहयतीति न्यग्रोधः, २. विरोहयतीति वीरुत् ।

३. वि यो वीरुत्सु रोधन्महि त्वोत प्रजा, उत प्रसूष्वन्तः । (ऋ० सं० १।६७।९)

४. विशेषेण रुणद्धि वृक्षानन्या । वि + √रुध् + क्विप् । 'अन्येपामपि·····' (अष्टा० ६।३।१३७) इति दीर्घः । अथवा विरोहतीति वीरुत् ।

५. तष्टेव वृक्षं नि वृश्चसि, परश्वेव नि वृश्चसि । (ऋ० सं० १।१३०।४)

६. निरुक्तम्—२।६ : वृक्षो व्रश्चनात् ।

७. उणादिसूत्रम्—३४६ (३।६६) : स्नु-व्रश्च-कृत्यृषिभ्यः कित् ।

८. अध्वर्यवो, यो अपो वव्रिवांसं वृत्रं जघानाशन्येव वृक्षम् । (ऋ० सं० २।१४।२)

९. अपो वृत्रं वव्रिवांसं पराऽहन् । (तत्रैव—४।१६।७)

१०. अहिं यद् वृत्रमपो वव्रिवांसं हन् । (तत्रैव—६।२०।२)

११. यदा वृत्रं नदी-वृतं शवसा वज्रिन्, अवधीः । (तत्रैव—८।१२।२६)

१२. स पवस्व, य आविथेन्द्रं वृत्राय हन्तवे । वव्रिवांसं महीरपः । (तत्रैव—९।६१।२२)

१३. इन्द्रो वृत्रमवृणोच्छर्ध-नीतिः । (तत्रैव—३।३४।३)

१४. तै० सं० २।४।१२।२; ५।२।२ : स इमाँल्लोकानवृणोत् । यदि माँल्लोकान् अवृणोत्, तद् वृत्रस्य वृत्रत्वम् ।

१५. विशेपार्थं द्रष्टव्यम्—'निरुक्तमीमांसा', पृ० ३२७, ३५०-३५४ तथा निरुक्तपञ्चमाध्यायस्य पृ० ६३, २२१-२२२ ।

संहितायां वृत्रस्य व्युत्पत्तिं वृत्-धातुना कर्त्रर्थेऽवादीत्[१]। यास्कः केषाञ्चिद् ब्राह्मण-वाक्यानां प्रमाणेषु शब्दमिमं १. √'वृ' इत्यनेन, २. √वृत्-धातुना अथवा ३. वृध्-धातुना निष्पन्नमुक्तवान्[२]। शाकटायनस्तु 'वृत्' इत्यनेन 'वृत्रस्य' व्युत्पत्तिं चक्रे[३]।

१३४. वोळ्हु < √वह्—परुच्छेपदैवोदासिः वहनात्मक-'वोळ्हु' इत्यनेन सह वहः प्रयोगेण व्युत्पत्तिमसूचयत्[४]। अस्यां व्युत्पत्तौ १ 'वह' इत्यस्याकारस्योकाररूपे विपरिणामो दृश्यते। २. हकारस्य ढकारविकारः स्पष्टोऽस्ति। पाणिनिरप्येतस्य व्युत्पत्तिमेवमेव कृतवान्[५]।

१३५. शूर < √शु— भरद्वाजबार्हस्पत्यः 'मंह्' इत्यनेन मघ् इत्यस्य व्युत्पत्त्या सह शीघ्रगमनात्मक-शु-धातुना शूरस्य तथा शीघ्र-धावनात्मक-वीधातुना वीरस्य सङ्केतं प्रोक्तवान्[६]। नोधस्गौतमः[७], गृत्समदस्तथा[८] भरद्वाजबार्हस्पत्योऽनेनैव[९] धातुना

---

१. यदवर्तयत्, तद् वृत्रस्य वृत्रत्वम्। (तै० सं० २।५।२।१)

२. निरुक्तम्—२।१७, निरुक्तपञ्चमाध्यायस्य २२२ पृष्ठम् : वृत्रो (क) वृणोतेर्वा, (ख) वर्ततेर्वा, (ग) वर्धतेर्वा क. यदवृणोत्, तद् वृत्रस्य वृत्रत्वम् इति विज्ञायते। ख. यदवर्तत, तद् वृत्रस्य वृत्रत्वम् इति विज्ञायते। ग. यदवर्धत, तद् वृत्रस्य वृत्रत्वम् इति विज्ञायते। स्थलमेषां वाक्यानामज्ञातमस्ति। तुलनार्थं तैत्तिरीयसंहिताया निम्नस्थलं द्रष्टव्यम्—स इषु-मात्रमिषु-मात्रं विष्वङ्ङवर्धत। स इमाँल्लोकानवृणोत्। यदिमाँल्लो-कानवृणोत्, तद् वृत्रस्य वृत्रत्वम्। (२।४।१२।२; ५।२।२)। तत्त्वष्टाऽऽहवनीयमुप-प्रावर्तयत्, स्वाहेन्द्रशत्रुर्वर्धस्व' (मै० सं० २।४।३) इति। यदवर्तयत्, तद् वृत्रस्य वृत्रत्वम्। (२।५।२।१) अत्र प्रत्यक्षनिर्वचनन्तु √'वृत्' इत्यनेनैव कृतवानस्ति। यदि वृधश्चर्चा भवेत्तदानेनापि सम्बन्धस्य संयोजनं स्यात्। √वृध् > वृत्रस्य निर्वचनाधारः सम्भवतो विश्वामित्र-गाथिनस्य निम्नप्रयोगो वर्तते। अधिवृत्रं वर्धमानपियारुम—पादमिन्द्र, तवसा जघन्थ (३।३०।८)।

३. उणादिसूत्रम्—१७० (२।१३) : स्फायि ···· वृति ···· शुभिभ्यो रक्।

४. वायुर्युङ्क्ते रोहिता; वायुररुणा; वायू रथे अजिरा धुरि वोळ्हवे; वहिष्ठा धुरि वोळ्हवे। (ऋ० सं० १।१३४।३)

५. अष्टाध्यायी—६।३।११२ : सहि-वहोरोद-वर्णस्य। ८।२।३१ : हो ढः।

६. निरुक्तम्—१।७, निरुक्तपञ्चमाध्यायस्य १०२ पृ० वीरो क. वीरयत्यमित्रान्, ख. वेतेर्वा स्याद् गति-कर्मणः, ग. वीरयतेर्वा। (निघण्टुः—२।१४।११८)

७. ता हि श्रेष्ठा देव-ताता तुजा शूराणां शविष्ठा ता हि भूतम्।
मघोना मंहिष्ठा तुवि-शुष्म ऋतेन वृत्र-तुरा सर्व-सेना॥ (ऋ० सं० ६।६८।२)

८ रोदसी आवदता गण-श्रियो नृ-षाचः शूराः शवसाऽहि-मन्यवः। (तत्रैव—१।६४।९)

९. धिष्वा शवः शूर, येन वृत्रमवा भिनद् दानुमौर्णवाभम्। (तत्रैव—२।११।१८)

निष्पन्नशूरस्य तथा शवसः ( बलस्य ) पारस्परिकसम्बन्धं साधुतया प्रतिपादितवान् । यास्केन प्रोक्तं यत्—शवशब्दोऽथवा शवस्‌शब्दस्तथा शूरशब्दः शुधातुना निष्पन्नाः सन्ति । एते गत्यर्थे काबुलदेश एव उच्यन्ते[1] । शाकटायनोऽपि शूरशब्दस्येमामेव व्युत्पत्तिं दत्तवान्[2] । टीकाकृत् शुधातोरर्थं गतिमित्युवाच[3] ।

१३६. श्लोकः < √ श्रु—श्यावाश्वात्रेयः श्रुधातुना श्लोकस्य व्युत्पत्तिं चकार[4] । यास्कोऽपीमामेव व्युत्पत्तिमजल्पत्[5] । पाणिनीयतन्त्रे[6] श्लोकस्य कल्पनां सम्भवतोऽस्या व्युत्पत्तेः परोक्षसत्त्वात् कृतवानस्ति । पाणिनिः[7] श्लोकस्य प्रयोगविधानं धातुरूपे करणायावोचत् । श्लोकस्य का व्युत्पत्तिर्भविष्यतीति विषयस्तेनाविदितो वर्तते ।

१३७. सन्धि < √सम् + धा–मेधातिथिर्मेध्यातिथिकाण्वश्च 'सम् + धा' इत्यस्य-कर्मरूपे सन्धिशब्दस्य प्रयोगमाचर्य्यास्य शब्दस्य सङ्केतं विहितवान्[8] । व्याकरणेऽपीयमेव व्युत्पत्तिर्मान्यास्ति ।

१३८. सरण्यु < √सृ–विश्वामित्रगाथिनोः[9] नाभानेदिष्ठमानवश्चास्य[10] शब्दस्य व्युत्पत्तिमसङ्केतयत् । यास्केनापीयमेव व्युत्पत्तिः प्रदर्शिता[11] ।

१३९. सहस्रम् < √सहस् —मेधातिथिः काण्वो बलार्थकेन सहस्‌शब्देन सह 'सहस्र' ( बलवत्प्रचण्डसंख्या ) इत्यस्य प्रयोगं विधायेमां व्युत्पत्तिं सूचितवान्[12] ।

---

१ शविष्ठं न आ भर शूर, शवः, ओजिष्ठमोजो अभि-भूत उग्रम् । (ऋ० सं० ६।१९।६)

२. निरुक्तम्—२।२ : शवतिर्गति-कर्मा कम्बोजेष्वेव भाष्यते ।···· विकारमस्यार्येषु भाषन्ते—'शव' इति । ४।१३ : शूरः शवतेर्गति-कर्मणः ।

३. उणादिसूत्रम्—१८३ (२।२६) : शु-सि-चि-मीनां दीर्घश्च । सि० कौ० शुः सौत्रः । ज्ञानेन्द्र-सरस्वती : शु गतौ । वासुदेवदीक्षितः —शु गतावित्यस्य धातुपाठेऽदर्शनादाह—'शुः सौत्रः' इति ।

४. य इमा विश्वा जातान्या-श्रावयति श्लोकेन । प्र च सुवाति-सविता । (ऋ० सं० ५।८२।९)

५. निरुक्तम्—९.९ : श्लोकः शृणोतेः ।

६ मा० धा० वृ० १।७७ : श्लोक सङ्घाते । सङ्घातो ग्रन्थः ।

७. अष्टाध्यायी—३।१।२५ ।

८. सन्धाता सन्धिं मघवा पुरु-वसुरिष्कर्ता विह्रुतं पुनः । (ऋ० सं० ८।१।१२)

९. स आ ववृत्स्व हर्यश्व, यज्ञैः सरण्युभिरपो अर्णा सिसर्षि । (तत्रैव—३।३२।५)

१० ऋ० सं० १०।६१।२३ ।

११. निरुक्तम्—१२.९ : सरण्यूः सरणात् । सरण्यूशब्दः पुं० सरण्युशब्दस्य स्त्रीलिङ्गेऽस्ति ।

१२. अयं सहस्रमृषिभिः सहस्कृत समुद्र इव पप्रथे । (ऋ० सं० ८।३।४)

नोधस्गौतमोऽपि सम्बन्धमिममसूचयत्[1] । यास्कोऽस्य[2] सहस्रशब्दस्येमामेव व्युत्पत्तिं प्रादात् । डॉ० सिद्धेश्वरवर्मा[3] विलक्षणां पूर्णतो भाषाविज्ञानसम्मतां व्युत्पत्तिमगादीत् ।

१४०. सिन्धुः < √स्यन्द—वामदेवगौतमः स्यन्दित्यनेन सिन्धोः सम्बन्धमज्ञापयत्[4] । कक्षीवद् दैर्घतमस औशिजोऽस्यार्थनिर्वचनं[5] स्यन्दः पर्यायभूतस्य √क्षर्-प्रयोगेण कृतवान् । यास्कः[6] शाकटायनश्चास्य[7] व्युत्पत्तिं स्यन्दधातुनैवावादिष्टाम् ।

१४१. सुदीति < सु + √दी—शंयुबार्हस्पत्यो[8] वसिष्ठमैत्रावरुणिश्च[9] दीप्त्यर्थक-दीधातुना सूचितवन्ताविमम्[10] ।

१४२. सुधित < √धा—भरद्वाजबार्हस्पत्यः[11] वसिष्ठमैत्रावरुणिश्च[12] 'सु-धित' इत्यस्योत्तरपदस्य 'धित' इत्यस्य व्युत्पत्तिं धा-धातुनागादिष्टाम् । परवर्तिकाले किञ्चित् स्थितिषु धेत्यस्य विकासो 'ही'ति रूपेऽभवत्[13] । वैदिक-'सुधितं' पाणिनिरपि स्वीकृतवानपवादत्वेन[14] ।

१४३. सूक्त < √वच्–कण्वधौरः[15] सदापृणात्रेयो[16] वसिष्ठमैत्रावरुणिश्च[17] 'वच्'

---

१. व्रता रक्षन्ते अमृता सहोभिः पुरुः सहस्रा जनयो न पत्नीः । (ऋ० सं० १।६२।१०)
२. निरुक्तम्—३।१० : सहस्रं सहस्वत् ।
३. दी एटिमॉलॉजीज् ऑफ यास्क, पृ० ४ ।
४ दीर्घामनु प्रसितिं स्यन्दमध्ये । पिपीले अंशुर्मद्यो न सिन्धुः । (ऋ० सं० ४।२२।७-८)
५. उपक्षरन्ति सिन्धवो मयो-भुव ईजानं च यक्ष्यमाणं च धेनवः । (तत्रैव—१।१२५।४)
६. निरुक्तम्—९।२६ : सिन्धुः स्यन्दनात् । निरुक्तमीमांसा, पृ० ३२० प्रेक्षणीयम् ।
७. उणादिसूत्रम्—११ : स्यन्देः सम्प्रसारणं धश्च ।
८. अजस्रेणा शोचिषा शोशुचच्छुचे, सुदीतिमः सु दीदिहि । (ऋ० सं० ४।८।३)
९. त्वमग्ने, सुहवो रण्व-सन्दृक् सुदीती सूनो सहसो, दिदीहि । तत्रैव—७।१।२१)
१०. निघण्टुः —१।१६।४, निरुक्तपञ्चमाध्यायस्य, पृ० २७० ।
११. मित्रं न यं सुधितं भृगवो दधुः । (ऋ० सं० ६।१५।२)
अभिप्रयांसि सुधितानि हिरण्यो नित्वा दधीत रोदसी यजध्यै । (१५)
१२. मन्त्रम-खर्वं सुधितं सुपेशसं दधात यज्ञियेष्ठा । (ऋ० सं० ७।३२।१३)
१३. अष्टाध्यायी—७।४।४२ : दधातेर्हि ।
१४. अष्टाध्यायी—७।४।४५ : सुधित, वसुधित, नेमधित, धिपीय च ।
१५. अग्नि सूक्तेभिर्वचोभिरीमहे, यं सीमिदन्यय ईकते । (ऋ० सं० १।३६।१)
१६. सूक्तेभिर्वो वचोभिर्देव-जुष्टैरिन्द्रा, न्वग्नो, अवसे हुवध्यै । (तत्रैव—५।४५।४)
१७. इन्द्रो, सूक्ताय वचसे वयो धाः । (तत्रैव—९।९०।६)

इत्यनेन व्युत्पन्नेन 'वचस्' इत्यनेन सह सूक्तस्य प्रयोगं कृत्वा वच्=उक्तः सम्बन्ध-मर्थात् सम्प्रसारणं तथा 'च्', 'क्' इत्यनयोः सम्बन्धं प्रकटितं चक्रिरे।

१४४. सूची ∠ √सीव् —गृत्समदः सीवनार्थक-सीव् इत्यनेन सहकरणविभक्ति-मत्याः सूच्या व्युत्पत्तिं ददौ[१]। यास्केनापि[२] व्युत्पत्तिरियमेव प्रदत्ता। शाकटाय-नोऽपि[३] सूच् ( पुं. सुआ, सूआ, सूजा—हिन्दी ) इत्यस्य तथा स्त्री. सूचीत्यस्ये-मामेव व्युत्पत्तिमदात्।

१४५. सेतुः ∠ √सि —मत्स्युसाम्मदः सेतोः व्युत्पत्तिं बन्धनार्थक √सिधातुना ददत्[४]। शाकटायनोऽपीमामेव[५] व्युत्पत्ति दत्तवान्।

१४६. सौवश्व्य ∠ √स्वश्वः —शुनहोत्रभारद्वाजः[६] स्वश्वस्य तद्धितान्तसौवश्व्य-स्य प्रयोगं स्वश्वेन सह कृत्वास्य व्युत्पत्तिं व्यक्तवान्। अत्र स्वश्वघटकवकारात्पूर्व-मौकारस्यागमः स्पष्टोऽस्ति[७]।

१४७. स्तोकः ∠ √श्चुत्— [८]पृषदर्थकस्तोकशब्दस्य व्युत्पत्तिं गाथिन्-कौशिकः बिन्द्वर्थक-श्चुत्-धातुना दत्तवान्[९]। यास्क[१०] इममाद्यन्तविपर्ययेणोक्त्वा व्युत्पत्ति-मिमामेव द्योतितवान्। वैयाकरणा[११] इमं स्तुच्धातुना निष्पन्नं मन्यन्ते।

---

१. सीव्यत्वपः सूच्याऽच्छिद्यमानया, ददातु वीरं शत-दायमुक्थ्यम्। (ऋ० सं० २।३२।४)

२. निरुक्तम्—११।३१ : सूची सीव्यतेः।

३. उणादिसूत्रम्—५३३ (४।९३) : सिवेष्टेरू च। सि० कौ० : सूची = दर्भाङ्कुरः। तत्त्व-बोधिनी : षिवु तन्तु-सन्ताने (मा० धा० वृ० ४।२)। अस्माच्चट्प्रत्ययः स्याट्टेरुत्वं च। टित्वान्ङीप्। 'सूची तु सीवन-द्रव्येऽत्याङ्गिकाभिनयान्तरे' इति मेदिनी।

४. मा नः सेतुः सिषेदयं महे वृणक्तु नस्परि। (ऋ० सं० ८।६७।८)

५. उणादिसूत्रम्—६९ : सि-तनि-गमि-मसि-सच्यवि-धाञ्-क्रुशिभ्यस्तुन्।

६. सौवश्व्यं यो वनवत्स्वश्वो वृत्रा समत्सु सासहद-मित्रान्। (ऋ० सं० ६।३३।१)

७. तुलनीयम्—अष्टा० ७।३।३ : न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्।

८. एवं गृहेष्वभिरतो विषयान्विविधैः सुखैः। सेवमानो न चातुष्यदाज्य-स्तोकैरिवानलः।
(श्रीमद्भागवते—९।६।४८)
मूलतः स्तोकशब्दार्थः पृषद् विद्यते। अग्रे गत्वायं ह्यर्थे रूढोऽभवत्।
स्तोकं ह्यपि न पश्यामि फलं जीवित-धारणे। ( १।१।२१८)

९. घृतवन्तः पावक, ते स्तोकाः श्चोतन्ति मेदसः। (ऋ० सं० ३।२१।२) तुभ्यं श्चोतन्त्यध्रि-गो, शचीवः स्तोकासो अग्ने मेदसो घृतस्य। (तत्रैव—३।२१।४) तुभ्यं स्तोका घृत-श्चुतः। (तत्रैव—३।२१।३)

१०. निरुक्तम्—२।१ : अथाप्याद्यन्त-विपर्ययो भवति—स्तोका रज्जुः, सिकतास, तर्विवति।

११. माधवीय-धातुवृत्तिः —१।१७३ : ष्टुच् प्रसादे। स्तोकः —घञ्। उद-श्वित्स्तोकम् = अल्प-मुदश्विदित्यर्थः।

## निष्कर्षः

शब्दनिर्वचनस्यार्थाद् व्युत्पत्तेर्द्वौ पक्षौ भवतः[1]—(१) शब्दार्थस्य व्याख्यानातिरिक्तं तद्भाषिकस्यार्थात् समुच्चरितध्वन्यंशस्य व्याख्यानं विधाय तन्मूलस्य स्पष्टीकरणम्। नैरुक्तपरम्परायामेतत्पक्षः शब्दनिर्वचनत्वेनोच्यते। (२) शब्दे ध्वन्यंशस्पष्टीकरणे ध्यानमदत्वा तदर्थमात्रस्पष्टीकरणम्। पक्षोऽयमर्थनिर्वचनात्मकः।

ऋग्वेदीयानामृषीणां भाषाचिन्तनस्य व्युत्पत्तिपक्षे समुपलब्धसामग्रीणां चतुर्थांशादपि न्यूनभागस्य विवेचनानन्तरं नैरुक्तपरम्पराया वर्गीकरणमिदं समुचितं प्रतीयते। एतैर्निर्वचनैर्ध्वनि-अंश-अर्थांशेषु प्रकाशस्तु प्रायेणापतत्येव कतिपयैर्निर्वचनैस्तस्यार्थांशमात्र एव प्रकाशोऽभिपतितः। विश्लेषणे सुविधायै प्रथमशब्दार्थनिर्वचनं भागद्वये विभाजितकरणमुचितं वेद्मि।

१. शब्दनिर्वचनम्—शब्दः साधारण्येन प्रकृतेः प्रत्ययस्य च योगेन निष्पन्नो भवति। ऋषयोऽनयोर्द्वयोर्निर्वचनमगादिषुः।

(अ) प्रकृत्यंशस्य शब्दनिर्वचनम्—अक्तु, अग्नि, आदिशब्दनिर्वचनेषु एतच्छब्दप्रकृत्यंशस्य व्याख्यां तन्निष्पादकधातोराख्यातस्य प्रयोगं विधाय सम्पादितवन्तः। एतच्छ्रेणीस्थितानां निर्वचनानां मात्रा पर्याप्तरूपे वर्तते।

(आ) प्रत्ययांशस्य शब्दनिर्वचनम् 'प्र-तर' इत्यस्य व्याख्यायामयं 'तर' 'तृ' इत्यनेन निष्पन्नो विद्यत इति सूचितवान्। एतच्छ्रेण्या अन्यदुदाहरणमुपरिविवेचितशब्देष्वेकमपि न दृश्यते[2]।

शब्दनिर्वचनानां वर्गीकरणमहमेकान्याधारेऽपि वाञ्छिष्यामि। यथा सुविदितमस्ति, नैरुक्तानुसारं वैयाकरणाः शब्दानां वर्गीकरणमित्थं कृतवन्तः। तद्यथा—(१) नामरूपम्, (२) आख्यातरूपम्, (३) उपसर्गरूपम्, (४) निपातरूपम्। ऋषय एषु सर्वाधिक्यं नामनिर्वचनमेव चक्रुः। (५) केषाञ्चिद् धातूनामपि शब्दनिर्वचनं वर्तते। एकमुपसर्ग-

---

१. निरुक्तम्—४।१, दुर्गवृत्तिः—अत्रार्थस्याप्रतीयमानस्य पर्यायाभिधानेन विभज्य प्रतिपादनं व्याख्या, शब्दस्यापि व्युत्पादनं व्याख्या। एवमेते द्वे व्याख्ये। तयोरर्थपरिज्ञानमेकस्याः कार्यम्, शब्दपरिज्ञानमेकस्याः।

आचार्यजयादित्योऽपि (काशिका-६।३।१०९) शब्दनिर्वचने—१. ध्वनेः, २. अर्थांशानां व्याख्यानमेवावश्यकममन्यत—

(क) वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ।

(ख) धातोस्तदर्थातिशयेन युक्तस्तदुच्यते पञ्चविधं निरुक्तम्॥

२. वैयाकरणास्तर इति प्रत्ययविशेषमूचुः। वैदिककाले भवितुमर्हति यत् तम-तरादिस्वतन्त्रशब्दा एव कथ्यन्ते स्म। तथा वस्तुतोऽत्र तरस्वतन्त्रशब्दस्य प्रकृतिनिर्वचनमेव जातम्।

स्यापि शब्दनिर्वचनं समुपलब्धं विद्यते। तद्यथा —नामपदानां शब्दनिर्वचनम् √अच् >अर्क, आवृत > अवत, √वृ उर्व, √स्कम्भ् > कम्भन् कि + कृ > कीकट, द्वि + अप = द्वीप इत्यादि।

नामपदानां शब्दनिर्वचनं नाम्नां रचनानुसारं नामपदैः सह—

१. धातुं बोधयित्वा-धातोराख्यातरूपं दत्वा भवति। एतच्छ्रेण्याः शब्दनिर्वचन-संख्या सर्वाधिक्या विद्यते। तद्यथा –अक्तुः, अग्निः, अधा, अजुर्यः, अद्रिरित्यादि।

२. तेषामविकसितम्–अर्थात् मूलरूपं दत्वा भवति। आ–वृत–अवत, स्वश्वः > सौवश्व्य उदाहरणे स्तः।

३. नामपदानां शब्दनिर्वचनं तद्धितसमासयोर्विग्रहं विधाय क्रियते। एतदर्थं ऋत्विज-कीकट-क्षत्रिय-जातवेदस्-नियुत-प्रतर-प्रहित वीरुध-सुदीति एषां निर्वचनं द्रष्टव्यमस्ति।

सर्वनामा नाम्नामान्तरिकभेदोऽस्ति। एकस्य सर्वनाम्नः 'इ' इत्यस्य 'इम' ( =इदम् ) इत्यस्य निर्वचनं द्वावृषो कृतवन्तौ। नृमेध–आङ्गिरसः प्रकृत्यंशस्य 'इ' इत्यस्य व्युत्पत्तिं जगाद। तदा विश्वकर्मन्-भौवनः प्रत्ययांश-'म' इत्यस्य स्पष्टीकरणं चक्रे[१]।

सर्वेषामेकाकिनामपदानां व्याख्या तदाख्यातेन कृतास्ति। अनेन ज्ञायते यदृषि-र्नामकरणाधारः पदार्थस्य काचित्क्रिया भवतीति मन्यते। १. शुद्धः, २. प्रत्ययान्तः, ३. नामधातुः, एतन्निष्पन्नाख्यातानां निर्वचनस्येमान्युदाहरणानि सन्ति।

१. शुद्धधातुना निष्पन्नाख्यातानां शब्दनिर्वचनम्—इर्यति ७ अरितृ–कथने गुणवान् 'अरितृ'रूपेण तस्मादल्पभिन्नप्रकारकम् 'इर्यति' इत्यस्य स्वरूपं सुस्पष्टम-भवद्, यदयं शब्दः ऋधातुना निष्पन्नो विद्यते। केतुरित्यस्य निर्वचनप्रसङ्गेऽयं चित्√ कित् इत्याभ्यां विकसितो वर्तते। एवं जि–गि, द्युत्<ज्युत् √वृ< ऋ ( वकारागमः ) √वश् < उश् इत्यादीनि निर्वचनान्यप्यस्याः श्रेण्या अन्तर्गतानि सन्ति।

२. प्रत्ययान्तधातूनां शब्दनिर्वचनम्—दिप्स इति√दभ् इत्यनेनेच्छार्थे निष्पन्नो विद्यते। अतो 'दिप्सन्तो देभु' इत्यनेन पाणिनीयपद्धतौ सन्प्रत्ययान्तस्य दिप्सस्य व्युत्पत्तिं बभाण।

---

१. निरुक्तम्—१३।९ : 'चत्वारि वाक्परिमिता पदानि'। (ऋ० सं० १।१६४।४५) कतमानि चत्वारि पदानि ? ओङ्कारो, महाव्याहृतयश्चेत्यार्षम्। नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः।

निरुक्तमीमांसायाः १०७-१०८ पृष्ठमपि द्रष्टव्यम्। अथर्वसंहितायामपि √'इ' इत्यनेन 'इम' इत्यस्य व्युत्पत्तिर्दृश्यते। यथा—सर्वे देवा हवमायन्तु म इमम्। (अ० सं० ९।२।७)

३. नामधातुशब्दनिर्वचनम् वाजनामपदेन सह वाजीत्यस्य प्रयोगेणैतद्धातोः 'वाज' इति नाम्ना निष्पन्नतामसूचयत् ।

(इ) उपसर्गस्य शब्दनिर्वचनम्—अधीत्यनेन सह 'धा' इत्यनेन निष्पन्नाख्यातस्य प्रयोगेणैतदुपसर्गस्य व्युत्पत्तिः 'धा' इत्यनेनाभिप्रेतेति सङ्केतितवान्[1] ।

शब्दनिर्वचनेषु गृहीतध्वनिसिद्धान्तः शब्दनिर्वचनेषु तत्तद् विभिन्नध्वनि-ध्वनिविकाराणामध्ययनस्य समावेशोऽभवद् यैः शब्दः स्वान्तिमरूपं प्रयोगावस्थामागच्छति । आचार्यजयादित्य एतद्विकाराणां चत्वारो भेदानकथयत्—१. वर्णागमः, २. वर्णविपर्ययः, ३. वर्णस्य स्थाने कस्यचिदन्यवर्णस्यागमनम्, ४. वर्णलोपः[2] । अहमपि समुपलब्धसामग्रीणां विश्लेषणमनयैव दृष्ट्या करिष्यामि ।

१. वर्णागमः—'उक्थ उचथ' इत्यत्रैकेनैव 'वच्' इत्यनेन शब्दस्य व्याख्या कृताऽस्ति । अनयोरन्तरोऽयं विद्यते यत्प्रथमे 'उक्थ' इत्यस्मिन् धातोरन्तिमव्यञ्जनस्य तत्कालान्तरं प्रत्ययस्य व्यञ्जनं वर्तते ; किन्तु द्वितीये उचथशब्देऽनयोर्मध्ये स्वरस्यैकस्यागमो जातः । तुलनीयम्—'जन्मन्, जनिमन्' अनयोर्द्वितीये नकारानन्तरमिकारागमोऽभूत् । अद्य लोके इकारस्य स्थाने 'जनम' इत्युच्चारणं प्राप्यते । यास्को वर्णोपजनस्योदाहरणरूपे 'द्वार्' इत्युक्तवान् । √'वृ' इत्यनेन द्वर्-द्वर-द्वार इत्येतन्निष्पत्तावपि दकारागमः स्पष्टो विद्यते । द्वार इत्यत्र चर्चित √ऋ 7 वृधातौ वकारागमोऽभवदादौ । 'पृथ्वि < पृथिवो, स्वश्वः > सौवश्व्यः' एतत्प्रवृत्तेरुदाहरणे वर्तेते ।

(२) वर्णविपर्ययः—श्चुत् > स्तोक इत्यत्र मध्यवर्तिचकारे तथान्तगततकारे स्थानपरिवर्तनमभवत्[3] ।

---

१. अथर्वसंहितायां काङ्क्षयनः प्र + √धा = प्रधि, उप + √धा उपधि इत्याभ्यां सह 'अधि' इत्यस्य प्रयोगेण अ + √धा > 'अधि' इत्यस्य व्युत्पत्तिसंकेतप्रदर्शनं कृतवानिति प्रतिभाति । यथा—प्रधिर्यथोपधिर्यथा नभ्यं प्रधावधि । (अ० सं० ६।७०।३)

२. वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ ।
धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम् ॥
आचार्ययास्कस्त्विमान् क्रमशः—i. वर्णोपजनः, ii. विपर्ययः, iii. व्यापत्तिः ( स्वराणां मात्रिकविकारः ), iv. लोप इत्यकथयत् । निरुक्तम्—२।१ अनुगमनीयम् ।

३. यास्क इमं ह्याद्यन्तविपर्ययेण ( आदिमान्तिमवर्णयोः परस्परं परिवर्तनम् ) घोषितवान् ; परन्तु नायमुचितः : अत्रादिम उष्मध्वनिः स्वस्थाने विद्यमानो वर्तते । समीपवर्तिध्वनेः परिवर्तनेन 'च' तालव्यवस्थाने 'त्' दन्त्यस्यागमेनैतस्योच्चारणे परिवर्तनं जातम् । अयं ध्वनिरपि दन्त्यो बभूव । 'श्' > स्ध्वनिविकारान्तर्गतो भविष्यति ; परन्तु नायं विपर्ययो भवितुमर्हति ।

३. वर्णविकारः —यास्केन वर्णानां मात्रागतविकृतिर्विकारनाम्नावादि। तथोच्चारणभेदेन जायमाना विकृतिर्व्यापत्तिरित्यवोचि[1]। वयमुभयविधमपि विकारं विकारमेव कथयिष्यामः[2]। अस्य भेदद्वयं चिकीर्षामः —(क) परतन्त्रवर्णविकारः, (ख) स्वतन्त्रवर्णविकारः।

(क) परतन्त्रवर्णविकारो यथा—यद्ध्वनिपरिवर्तनं समीपवर्तिकस्याप्यन्यध्वनिविशेषस्य प्रभावस्य कारणं भवति, स एवास्माकं मते परतन्त्रविकारः कथ्यते। स्वरव्यञ्जनयोर्विकृतत्वादस्य द्वौ भेदौ वर्तेते।

(अ) स्वराणां परतन्त्रविकारः —अयं निम्नदिशासूपलब्धो भवति —(१) अ> आ : ध्वंस् ध्वान्त। (२) 'इ' विकारस्य निम्नप्रवृत्तयः सन्ति—i. इ>ई : द्वि+अप् >द्विप>द्वीप; ii. इ>ए : √पी>पयस्; iii. इ>य् : √दिव्>दिउ>द्यु। (३) उकारविकारस्य द्वे प्रवृत्तो विद्येते : i. उ7ऊ : √गुह>गूळ्ह; ii उ>ओ : √उच् >ओक, √शु>शवस्। (४) ऋकारस्य विकासे दिशा इमा वर्तन्ते—i. ऋ[3]>अ : आ-वृत>अवत; ii. ऋ>अर् : √ऋ>अरितृ, अर्णा, √कृ>चर्कृत्य, जृ>जरणा, जरितृ, √तृ>तरणि, तरस्, तर्मन्; iii. ऋ>आर् : √जृ>जार, √पृ>पार; iv. ऋ<ईर् : √तृ>तीर्ण; v. ऋ>उर् : √जृ>अ-जुर्य, √तृ>ततुरी, तुर, √पृ>पपुरि; vi. ऋ>ऊर् : √तृ>तूर्ति, तूर्य; vii. ऋ<र् : √दृ>अद्रि, √कृ>चक्रि, √पृ>पप्रि। एतद्विवरणेन प्रतीयते यत् स्वरेषु परिवर्तनमाधिक्येन ऋस्वरे भवति।

(आ) व्यञ्जनानां परतन्त्रविकारः —अयं निम्नदिशासूपलब्धो विद्यते—(१) चवर्ग>कवर्गः i. च्>क् (सु-) वच्+तः+>सूक्तम्, √पच्+ति>पक्ति, √वच्+थ>उक्थ[4], वच्+थ्य>उक्थ्य, ऋच्+व>ऋक्व, ऋच्+वन्>ऋक्वन्, व्रश्च्+स्>वृक्ष। ii. च्>ग् : ऋच्+मिय>ऋग्मिय। iii. 'ज्'>क : भज्+

---

१. निरुक्तम्—२।१ : अथाप्युपधा-विकारो भवति—राजा दण्डीति। .... अथाप्यादिव्यापत्तिर्भवति ज्योतिर्, घनो, बिन्दुर्, बाह्य इति। मुद्रितग्रन्थे 'विपर्ययः' पाठोऽस्ति। व्यापत्तिपाठविषये निरुक्तपञ्चमाध्यायस्य १६१ पृ० द्रष्टव्यम्।

२. पतञ्जल्यादयः परकालिकाचार्याः —अनयोर्द्वयोर्विकारयोः कृते पृथक्-पृथक् शब्दं न प्रस्तुवन्ति, प्रत्युत एकस्य विकारशब्दस्यैव प्रयोगं कृतवन्तः। तथा हि—'येषु लोपागमवर्णविकाराः श्रूयन्ते, न चोच्यन्ते। (महाभाष्यम्—६।३।१०९, पृ० ६५२)

३. ऋकारस्य ह्रस्वदीर्घभेदौ नास्माकमभिप्रेतः।

४. 'च्+थ' इत्यस्य मध्यस्वरभक्तिः (वर्णागमे जाते) नायं विकारो भवति। √वच्+थ> उच्+अ+थ>उचथ।

त:>भक्त:, अञ्ज+तु>अक्तु । iv. ज्>ग् : √अञ्ज्+नि>अग्नि, √तिज्+म>तिग्म, उज्+र>उग्र: ।

(२) चवर्ग>उष्म: ज्>ष्√राज्+त्र>राष्ट्र: । (३) तवर्ग>चवर्ग:—√द्युत्> ज्योतिष् । (४) घोषस्याघोषिकरणम्—√दभ्+स:>√दिप्स:[1] । (५) कण्ठघोषमहाप्राणस्य 'ह्' ध्वनेर्मूर्धन्यकरणम् । √गुह् (+त:)>गूल्ह, √दृह् (+त)>दृक्, √वह् (+तु)>वोल्हु ।

अनेन विवरणेनायं स्पष्टो जायते यद् व्यञ्जनेषु चवर्गीयध्वनिरेव सर्वाधिक्यं विपरिणामं लभते । चवर्गीयध्वने: स्थान एव कवर्गीयध्वनिरेव सर्वाधिको जात: ।

(ख) स्वतन्त्रविकार: —यो ध्वनिविकार: कस्यचिदन्यध्वने: प्रभावेण अभूत्वा स्वतो भवति तमेतच्छ्रेण्या अन्तर्गतेऽरक्षत् । अस्यापि पूर्ववत्स्वरव्यञ्जनभेदेन द्वौ भेदौ वर्तेते ।

(अ) स्वराणां स्वतन्त्रपरिवर्तनम्—(१) 'अ'ध्वनेर्निम्नध्वनिविकारा उपलब्धा भवन्ति—i. अ>आ : √वन्>वाम:, ii. अ>इ : √दभ्>दिप्स:, iii. अ>ए :√नम्>नेमि:, iv. अ>ओ : √वह्>वोल्हु । (२) आ>इ : √मा>अमिता; √पा>पितु:, √धा>सुधित: । (३) इकारस्य द्वौ विकारौ लभ्येते—i. इ>ई : √वि+रुह्>वीरुध; ii. इ>ए : √सि>सेतु । (४) उ>ओ : √दुह्>दोघ:, √श्रु>श्लोक: √श्चुत्>स्तोक: ।

(आ) व्यञ्जनानां स्वतन्त्रपरिवर्तनम्—(१) क्>च : √कृ>चक्रि, चर्कृत्य, √कित्>चित्, √कित्>चित्र, √कित्>चेतस् । (२) चवर्गीय: >कवर्गीय: ।

(३) च्>क् : √अर्च्>अर्क:√पच्>पाक: √उच्>ओकस् : √चित्>केतु: √श्चुत>स्तुच्>स्तोक: ।

(४) द्>ड् : √मन्द्>मण्डूक । (५) अल्पप्राणमहाप्राण: √द्>ध् : √मद्>मधु, √स्यन्द्>सिन्धु: । (६) अध>अह, सध>सह, अत्रोच्चारणस्थानेन सार्द्धं करणस्य स्पर्शत्वात् सङ्घर्षेण 'घ>ह' अभवत् । (७) प्रथमशब्दे घोषताया: स्थाने

---

१. संहितानां लिखितमुद्रितवर्तन्यनुसारमत्र घोषो महाप्राण: स्पर्श: (भ्) अघोषाल्पप्राणस्पर्श (प्) इत्यस्मिन् विपरिणमत: । मम विचारे 'भ्' इत्यनन्तरं महाप्राणस्य सकारस्य सत्त्वात् 'भ' घोषादघोषोऽभवत् । तथा तस्य महाप्राणता ह्यक्षतैवास्ति । अर्थाल्लिखितवर्तन्यां स दिप्स एव किं न भवेदुच्चारणेऽपि दिप्स एवायमस्ति । शिक्षानुसारमेवं स्थितौ महाप्राणता तिष्ठत्येव । वैयाकरणेषु पौष्करसाद्याचार्योऽस्यां स्थितौ व्यवस्थामिमामेव दत्तवान् । यथा द्वितीया: शरि पौष्करसादेरिति वाच्यम् । द्र० सि० कौ० हल्सन्धि: ।

अघोषताप्यभवत्। अध > अथ तुलना क्रियताम्—सध् > साथ (हिन्दी ) इत्यनेन। (८)र>ल : √श्रु>श्लोकः। (९) श्>स् : √श्चुत्>स्तुच्>स्तोकः। (१०) निम्न-शब्देषु 'ह' इत्यस्य स्थानं कण्ठ्यः, तालव्यः, दन्त्यो ध्वनिर्गृहीतवान्। (i) ह्>घ : (अव+)हन् >अघाः √हन् >घन, √हन्>जघन, √दुह्>दुघा, दोघ। ii. ह> झ>ज :√हन्>जघन[1]। iii. ह्>ध् : वि√रुह्+ >वीरुध्।

अनेन विवरणेन स्पष्टाऽयं भवति यत् कण्ठ्यतालव्यध्वनिषु विकारस्य मात्रा सर्वाधिका वर्तते।

सम्प्रसारणम्—अन्तस्थध्वन्यात्मकाक्षराणां ( Syallable ) स्थाने स्वरस्यापि प्रयोगो बहुधा जायते। एतत्प्रवृत्ति वैयाकरणाः सम्प्रसारणं कथयन्ति[2]। उपरिचर्चित-१४६ शब्देषु २१ शब्देषु सम्प्रसारणस्य विषयः समुपलभ्यते।

१. य>इ : ऋतु : √यज्>ऋत्विज् : √स्यन्द्>सिन्धु।

२. रेफवतोऽक्षरस्य सम्प्रसारणस्य निम्नदिशाः सन्ति—

(क) अर्>ऋ : √अर्च्>ऋक्व, ऋक्वन्, ऋग्मिय। (ख) र>ऋ: √प्रथ>पृथिवी, पृथु, पृथ्वी; √व्रश्च>वृक्ष। (ग) रा>इर्√द्राघ्>दीर्घः। (घ) रु>ऋ : √प्रुष्>पृष्ठ।

वकारवदक्षरस्य निम्न परिणतय उपलब्धाः सन्ति—१. अव्>ऊ : √अव्> ऊतिः। २. व>उ : √दिव्>दिउ>द्यु। ३. व>उ√वच्>उक्थ, उक्थ्य, उचथ, (सु-) √वच् (सु-) उक्त √वस्>उस्र, √वश्>उश्। ४. वृ>उर् : √वृ>उरु। ५. वृ>उर् : √वृ>ऊर्व। ६. ईव्>ऊ √सीव्>सूची। अनेन विवरणेन विज्ञायते यत् -मात्रादृष्ट्या सर्वाधिकप्रकारकसम्प्रसारणजन्यविकारो वकारध्वन्यक्षराणामुपलब्धो भवति।

---

१. अत्र पूर्वं हकारस्य झकारस्तथान्यस्य हकारस्य धकारोऽभवत्। पुनः द्वयोर्महाप्राणध्वन्योरेकस्यानन्तरमेकस्योच्चारणकाठिन्यत्वात् प्रथममहाप्राणध्वनेर्झकारस्य स्थानेऽल्पप्राणवान् जकारोऽभूत्।

२. अष्टाध्यायी—१।१।४५ : इग्यणः सम्प्रसारणम्। पाणिनिः स्वतन्त्रसुविधार्थं अन्तस्थ-अर्द्धमात्रिकध्वनिं मात्रिक इकस्वरात्मकस्य विधानं कृत्वा नियमान्तरेण तत्परवर्तिस्वरस्याचः पूर्वरूपैकादेशविधानेन स्वतन्त्रनिर्वाहं कृतवान्। "सम्प्रसारणाच्च" (अष्टा० ६।१।१०८) अतः सम्पूर्णां प्रक्रियां ध्यानेऽभिरक्ष्य 'सम्प्रसारण'संज्ञा अर्धमात्रिकध्वनेरेकमात्रिकध्वनौ विकासकारणान्नाभूत्; अपि तु एकाधिकमात्रावदक्षरस्य स्थाने एकमात्रिकाक्षरदानकारणात् सम्प्रसारणसंज्ञाया अवसरो जातः। अर्थात्सम्प्रसारणघटितसम्शब्दः प्रसारणानुकूलो न भूत्वा तस्मिन् विपरीतनामसङ्कोचस्याभिधायको वर्तते। संहार-उपसंहार-संस्थादिशब्देषु सम्शब्द एवं भूतार्थ एव प्रतीयते।

रेफवतोऽक्षरस्य सम्प्रसारणस्थानमनया दृष्ट्या द्वितीयमस्ति ।

४. वर्णलोपः —शब्दस्य निष्पत्तौ मूलशब्दस्य कस्यचित्-कस्यचिद् ध्वनेर्लोपो भवति । यास्कोऽस्याः प्रवृत्तेर्वर्गीकरणमाधारद्वये कृतवान्—( क ) शब्दे लुप्यमानध्वनेः स्थानस्याधारे—i. आदिलोपः, ii. अन्तलोपः, iii. उपधालोपः । (ख) लुप्यमानवर्णानां संख्याधारे—१. वर्णलोपः (एकवर्णस्य लोपस्तथा द्विवर्णलोपः[1]) ।

अन्यत्र वर्णलोपस्य विभाजनम्—१. आदिलोपः, २. मध्यलोपः, ३. अन्तलोप इति रूपे कृतं वर्तते[2] । द्वाविमौ मेलयित्वाहं वर्णलोपस्य प्रवृत्तेः पञ्चभेदान् चिकीर्षामि—अ–आदिलोपः, आ–मध्यलोपः, इ–उपधालोपः, ई–टिलोपः, उ–अन्तलोपः ।

अ. आदिलोपः —√स्कम्भ् > कम्भनम्—अत्रादेः सकारस्य लोपोऽस्ति ।

आ. मध्यलोपः —अन्वञ्च् > अनूचः, प्रत्यञ्च् > प्रतीचः, तथा द्वि + अप् > द्वीप इत्यत्र समस्तशब्दस्यास्य मध्यवर्तिनोऽकारस्य लोपोऽभवत् । तथास्य प्रतिप्रसवरूपे पूर्वपदानामन्तिमस्वरस्य दीर्घो जातः । अर्थात् प्रति-द्वि इत्यनयोरन्तिमस्येकारस्य दीर्घो जायते । हन्<जङ्घन<जघनमित्यत्रापि मध्यगतनासिक्यस्य लोपो जातः; किन्त्वत्र पूर्ववर्तिस्वरस्य दीर्घो नाभूत् ।

इ. उपधालोपः —अन्वञ्च्>अनूचः, प्रतीचः>प्रत्यञ्च् । अञ्ज्<आज्यम् √उन्द्<उत्स, स्कम्भ<स्कभोयस्, गम>ग्मा, √दस्>दस्म, दस्र, √दृंह्>दृढः । अत्रान्तिमवर्णात्पूर्ववर्तिवर्णस्य लोपो जातः ।

अत्र ध्यातव्यमस्ति – १. लुप्यमानध्वनीनां मध्ये नासिक्यानां (ञ्-म्-न् तथानुस्वार-) ध्वनीनां संख्याधिकतरास्ति ।

२. अनुनासिकध्वनीनां लोपस्य प्रतिप्रसवरूपे पूर्ववर्तिस्वरस्य दीर्घो नाभवत्[3] ।

---

१. निरुक्तम्—२।१ : अथाप्यस्तेर्निवृत्ति-स्थानेष्वादि-लोपो भवति, स्तः, सन्तीति । अथाप्यन्त-लोपो भवति—गत्वा, गतमिति । अथाप्युपधा-लोपो भवति—जग्मतुर्, जग्मुर् इति । ···· अथापि वर्ण-लोपो भवति तत्त्वा यामीति । अथापि द्विवर्णलोपस्तृच इति ।

२. मूलमज्ञातम्—आदिमध्यान्तलुप्तानि प्रच्छन्नापि-हितानि च ।
ब्रह्मणः परिगुप्त्यर्थं वेदे व्यवहितानि च ।।

३. अन्वञ्च > अनूचः आदिषु पूर्वपदस्यान्त्यस्वरस्य दीर्घो नासिक्यध्वनेर्लोपस्य प्रतिप्रसवरूपे नाभवत्; अपि तु अञ्चः स्वरस्य अ इत्यस्य लोपस्य फलस्वरूपतत्क्षतिपूर्तिनिमित्तायैवाभवत् । √अञ्ज्>आज्यम्—अत्रादिमस्य अवर्णस्य दीर्घोऽपि नासिक्यस्य लोपकारणादेव भवति । यद्वाऽयं प्रत्ययस्यैव काचिद् विशेषता वर्तत इति न स्पष्टः । कात्यायन इमम्—आ + √अञ्ज् + क्यप् इत्युक्तवान् । आङ्पूर्वादञ्जेः 'संज्ञायामुपसंख्यानम्'

३. √'गम्>ग्मा'—इत्यत्रोपधालोपे जाते 'ग्-म्' इत्यनयोः सन्धिः ('ङ्-म्') नाभवत्।

ई. टिलोपः —मनस्+ईषिन्>मनीषिन्।

उ अन्तलोपः —हन्>अघा, किम्+√कृ>कीकट, √जन्>जातवेदस्, √तन्>तमस् √वन्>वाम इत्यादिष्वन्तिमस्य नासिक्यध्वनेर्लोपो जातः। तथा ध्वंस्>ध्वान्त इत्यत्र अन्तिमस्य 'स्'-ध्वनेर्लोपो जातः[1]।

एतत्प्रवृत्तावपि नासिक्यध्वनेरेव मात्राधिक्ये लोपोऽभवत्। एषु शब्देषु केवलं तमसं विहाय शेषेषु सर्वेषु ध्वनिलोपस्य प्रतिप्रसवरूपे पूर्ववर्तिध्वनेर्दीर्घो जातः[2]।

कतिपया एतादृशा अपि शब्दाः समुपलब्धा भवन्ति, येषां निर्वचनविषये महर्षीणां मतभेदो दृश्यते। एको महर्षिरेकं निर्वचनमकरोत्, तदान्यो द्वितीयं निर्वचन-

---

(अष्टा० ३।१।१०९ सूत्रस्य वार्तिकम्)। अस्याभिप्रायोऽयमस्ति यदसौ ह्रस्वमेव मन्यतेऽस्यादिमं स्वरम्। 'आ' सन्धिजोऽस्ति। न त्वनुनासिकलोपस्य प्रतिप्रसवे विद्यते। प्रत्ययस्य कारणाद्दीर्घतायामपेक्षितायामथवाभिप्रेताया प्रत्ययस्य स्वरूपं क्वचित्यभवत्।

एवं स्थितौ ह्यवग्रहार्थमाऽय्य (१०।१५।६), आऽञ्जनेन (१८।७), आऽय (२।३८।१०), आऽयन (१०।२४।६ तथा १।४२।८) आऽरण (१।११२।६, ८।७०।८) एषां शब्दानां पदपाठो द्रष्टव्यः। एषु सर्वत्रावग्रहो दत्तोऽस्ति। अतः कात्यायनस्य व्युत्पत्त्याधारो न स्पष्टः। यदि अनुनासिकलोपस्य कारणादेवात्र दीर्घो जातस्तदा 'अज्यते', 'अज्यमान' इत्यादिष्वपि दीर्घः स्यात्। अतोऽत्र प्रत्ययोपस्थित्या दीर्घो जातो न त्वनुनासिकलोपस्य क्षतिपूर्त्यै।

१. पाणिनीयतन्त्रे 'ध्वान्त'शब्दः √ध्वन्शब्देन व्युत्पन्नः कथ्यते। अष्टा० ७।२।१८ इत्यत्र महाभाष्यम्—'ध्वान्तं तमोऽभिधान' इति वक्तव्यम्। ध्वनितं तमसेत्येवान्यत्र। अन्धकारस्य श्रोत्रेन्द्रियेण सम्बन्धः पतञ्जलिप्रामाण्ये महाराजस्य परम्परां वर्द्धयितुं सद्वचनत्वेन मान्यः स्यात्।

२. पा० तन्त्रे एवंविधस्थलेषु प्रायेण दीर्घविधानमकृत्वा दीर्घवदयं पूर्ववर्तिदीर्घरहितरूपस्यादेशः प्रचक्ष्यते। तुलनीयम्—इदं किमोरीश्की (अष्टा० ६।३।९०), ज्ञा-जनोर्जा (अष्टा० ७।३।७९)। वामशब्दमुणादिकारो वाधातुना मन्यते। अतस्तेन मतेन दीर्घविधानमत्र नावश्यकम्। देवराजयज्वन् इमं 'वन्' इत्यनेन बाहुलकत्वान्निष्पादितं कृत्वा नकारस्य 'आ' इत्यादेशं कृतवानस्ति। वन, पण सम्भक्तौ (भ्वा० ४५९-४६०)। इषु-युधी ···· (उ० सू० १४२) इति बाहुलकान्मक्प्रत्ययो नकारस्याकारश्च। (नि० टी० ३।८।९)

माचचक्षे । विषयेऽस्मिन् केतुरग्निरद्रिगोचित्त-तमस्-पयसादयः शब्दा द्रष्टव्याः सन्ति ।

१. शब्दार्थनिर्वचनम्—स्पष्टार्थः शब्दस्य केन भागेन सम्बद्धो विद्यत इत्येतदाधारेऽपि मूलतो द्वौ भेदावर्थनिर्वचनस्य वर्तेते—(अ) प्रकृत्यर्थनिर्वचनम्, (आ) प्रत्ययार्थनिर्वचनम् ।

(अ) प्रकृत्यर्थनिर्वचनम्—प्रकृताध्ययने गृहीतशब्दा अधिकांशतो धातुजा एव सन्ति । अतः प्रकृत्यर्थनिर्वचनस्यायमाशयो यदमुकशब्देषु तत्तच्छब्दानां प्रचलनस्याधारात्मिका या क्रियास्ति, तदभिधानकारकधातोरर्थस्पष्टकरणदृष्ट्या अमुकामुकशब्दानां निर्वचनं कृतमस्ति । अत इदं निर्वचनं शब्दस्य ध्वन्यंशस्य व्याख्याकरणाभावेनेदं शब्दनिर्वचनम् । तथा तदर्थांशस्य व्याख्यासत्त्वादिदमर्थनिर्वचनमस्ति । यथोदाहरणानि सन्ति—√इष्>इष्, √उच्>ओकः, √घस्>घासिः, √जॄ>जरितृ, √जात+विद्>जातवेदस्, √जॄ>जार, हु>जुहुरे, √दंस्-√दस्, √दा>दानुः, √दा>दामन्, √नु>नौ, √पा>पति, √पॄ>पप्रि, पयस्, √पा>पाथस्, √पा> पितु, √भज्>भक्त, भग, भाग, √यम्>रश्मि, √वन्>वाम, √विप> विप्रः ।

(आ) प्रत्ययार्थनिर्वचनम्—शब्दार्थे प्रकृत्यर्थस्त्वाधारभूतोऽस्त्येव परन्तु तद्विभिन्नछायानां निर्माणे प्रमुखदायित्वं प्रत्ययार्थस्यैव भवति । अतो यत्र प्रकृत्यर्थः प्रायेण क्रियारूपमेव भवति । प्रत्ययार्थस्य कतिपया भेदा भवन्ति ।

(क) कारकार्थः - प्रत्ययार्थस्य भेदमिममृषयः कारकविभक्तिप्रयोगेणासूचयन् ।

(i) कर्तृ —अक्तु-अग्नि-अद्रि-अरितृ-आ दर्दिर, उग्र, ओजिष्ठ, ओजीयस्, उषस्, ऋक्व, ऋक्वन्, ऋत्विज, केतु[१], क्षत्रिय[२], गो, चक्रि, चित्र, जरितृ, जातवेदस्, ततुरी, तमस्, तरणि, तर्मन्, तुर, दस्र, दानु, दामन, दृढ, द्वर, ध्वान्त, पति, पपुरि, प्रहेतृ, भग, मण्डूक, मधु, मनुष्य, विप्र, वीरुध, वृत्र, शूर, सिन्धु, सेतु, स्तोक—इति चतुश्चत्वारिंशच्छब्दाः कर्त्रर्थे व्युत्पादिताः सन्ति ।

---

१. अस्मिन् सन्दर्भे तारकाङ्किताः सर्वे शब्दा एकाधिककारकेषु व्युत्पादिताः सन्ति । (१) कर्तृकर्मकर्तृ—केतु । (२) कर्तृ-कर्म—तमस् । (३) करण-कर्म -अर्क, दात्र, पयस् ।

२. वस्तुतोऽस्मिन् शब्दे तद्धितीयः प्रत्ययो विद्यते । प्रत्ययोऽयं कर्तृनिष्पाद्य-'अंशन'क्रियां प्रकटयति । अत इममत्रैव प्रदर्शितवान् ।

(ii) कर्म —अर्कः, उक्थ, उचथ, ऊर्व, ऋग्मिय, गूळ्ह, घासि, चर्कृत्य, जघन, जार, तमस्, तिग्म, तीर्ण, दात्र, दानु, द्वर, द्वार, धान्य, निधि, नियुत्, नेमि, पक्ति पयस्, पाथस्, पितुः, पृथिवी, प्रयस्, भक्त, भाग*, रश्मि, वाम, विधवा, वृक्ष, सुधित, सूक्त इत्येते पञ्चत्रिंशच्छब्दाः कर्मार्थे निष्पादिता व्युत्पादिताश्च सन्ति ।

(iii) करणे—अर्क*, आज्य, उद्वन्, कम्भन्, घन, घृत, चेतस्, जरणा, दात्र, नौ, पायस्, पायु, भास्, सूचो इमे पञ्चदशशब्दा व्युत्पादिताः सन्ति ।

(iv) अधिकरणे—गुहा, ग्मा । (v) कर्मणि कर्तरि च—केतुः ।

(ख) भावे—अर्क, ओजस्, ऊति, तरस्, भाग, वोळ्हु, सुदीति ।

(ग) अर्हार्थीयः —उक्थ्य, गुह्य ।

(२) अर्थनिर्वचनम्—क्षत्रिय, निधि, रश्मि इत्येतेषां व्याख्या एतद् ध्वन्यंशस्य व्युत्पत्तिं नोक्त्वा केवलमेषामर्थस्पष्टं विधायैव कृताऽस्ति । अतोऽयमर्थो निर्वचनमात्रमस्ति ।

अर्थमात्रनिर्वचनापेक्षया शब्दार्थनिर्वचनस्यैतावत् प्रचुरता अस्य तथ्यस्य पोषिका विद्यते, यद् वैदिकर्षयो निजभाषाचिन्तनं तत्स्तरं यावन्नीतवन्त आसन् यत्र प्रत्येकशब्दस्य व्युत्पत्तिर्विदिता भवति ।

अनेनायं विदितो भवति यदृग्वेदीयर्षिर्नाम्नां व्युत्पत्तिमधिकांशे मन्यते । तथा तद्भाषाभाषिकचिन्तनस्य गाम्भीर्यं सौन्दर्यञ्च व्युत्पादितमभूत् ।

अनेन विवेचनेन निम्नतथ्यानि विदितानि भवन्ति ।

१. प्रायेण समेषु निर्वचनेषु नामपदानां व्युत्पत्तिर्धातुनैव प्रदत्ताऽस्ति । अतोऽस्मिन्नाधारे वक्तव्यमिदं स्याद् यदर्षयो नामकरणस्याधारं पदार्थस्य काञ्चित् क्रियां मन्यन्ते स्म ।

२. व्युत्पाद्यार्थे व्युत्पादकधात्वर्थे च सामञ्जस्यं तेषामभीष्टं चासीत् । कारणमिदमेवास्ति यत् (आदित्यस्य कृते) प्रसिद्धस्य पपुरिरित्यस्य निर्वचनं भरणार्थक-(जलवर्षासु सहायकत्वात्) पिपर्तीत्यनेन तथापत्तितः पारकरणस्येन्द्रस्य नाम्नः पप्रीत्यस्य

---

* एतच्चिह्नवन्तौ द्वौ शब्दौ कारकार्थस्याभिधायकप्रत्ययेन निष्पन्नौ विद्येते—

(क) कर्मणि-करणे-भावे च अर्कः ।

(ख) कर्मभावयोः भागः ।

निर्वचनं पारंकारयितृ-'पारयति'-पदेन कृतमस्ति । अतोऽयं सिद्ध्यति यदृषयो निर्वचनेऽर्थाय प्राधान्यं ददति स्म ।

(३) भाषायां ध्वनिपरिवर्तनस्थित्या तथा तद्वैज्ञानिकाधारेणापि परिचिता आसन्नृषयः ।

(४) समासस्य तथा तद्धितीयशब्दस्यापि निर्वचनं ते कृतवन्तः । अत्र विग्रह-प्रदर्शनं प्रकृति-विकृतिसम्बन्धप्रदर्शनञ्च प्रमुखरूपेण कृतं वर्तते[1] ।



१. विषयेऽस्मिन् विशेषाय निरुक्तमीमांसायां वैदिकसाहित्ये निवर्चनमध्यायन्तथा विशेषतः २०७-२०८ पृष्ठं पठनीयम् ।

# वेदानामपौरुषेयत्वम्

डॉ० देवेन्द्रनाथत्रिपाठी
प्राध्यापकः, संस्कृतविभागस्य
स्वामीदेवानन्द-स्नातकोत्तरमहाविद्यालये
मठ-लार, देवरिया



स्थावरजङ्गमात्मकस्य जगतो धारकोऽप्रतिहतशक्तिसम्पन्नो हि वेदः[1]। वेद-शब्दस्तु करणार्थे प्रत्यये कृते सति निष्पद्यते। अतो हि धर्मादिपुरुषार्थचतुष्टयोपाया येन वेद्यन्ते ज्ञायन्तेऽसौ वेद इति वेदशब्दस्य व्युत्पत्तिमूलकोऽर्थः। इदमेवोरीकृत्य सायणाचार्येणैतरेयभाष्यभूमिकायां कृष्णयजुर्वेदभाष्यभूमिकायाञ्चोक्तम्—

"इष्टप्राप्त्यनिष्टपरिहारयोरलौकिकमुपायं यो ग्रन्थो वेदयति स वेद इति"[2]। प्रत्यक्षादिभिः प्रमाणैर्योऽर्थो नावगतो भवति तादृशमर्थं स्वर्गादिरूपं यो ग्रन्थो वेदयति स वेदः, अत एवोक्तम्—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते।
एनं विदन्ति वेदेन तस्माद् वेदस्य वेदता[3] ॥

प्राचीनग्रन्थेषु वेदानां कृते विद्याशब्दस्यापि प्रयोगोऽवलोक्यते[4]। वैदिकसाहित्ये वेदशब्द आद्युदात्तोऽन्तोदात्तश्च द्विप्रकारकः समुपलभ्यते। तत्र तस्यार्थोऽपि द्विविध एव भवति। आद्युदात्तो वेदशब्दो ग्रन्थाववोधकोऽपरश्चान्तोदात्तो[5] वेदशब्दो दर्भमुष्टि-वाचकः[6]। इदमेवोरीकृत्याद्युदात्तान्तोदात्तयोर्द्वयोर्वेदशब्दयोः सिद्ध्यर्थं भगवता पाणिनिमुनिना ह्युञ्छादिगणे[7] वृषादिगणे[8] च वेदशब्दद्वयं पठितम्। व्युत्पत्तेरसम्भवात्

---

१. बिभर्ति सर्वभूतानि वेदशास्त्रं सनातनम्। (मनु० १२।९९)
सर्वं वेदात् प्रसिद्ध्यति। (मनु० १२।९७)
२. कृष्णयजुर्वेद-भा० भू०, पृ० २; ३. उद्धृतम्, ऋ० भा० भू०, पृ० १०५।
४. त्रयी वै विद्याः। (श० ब्रा० ४।६।७।१) स यावतीयं त्रयीविद्या तावद्ध जयति (बृ० ५।१४।२)
५. अ० सं० ४।३५।८, ७।५७।१, तै० ब्रा० ३।१०।११।४७, ३।१२।९।४९।
६. शु० य० २।२१, अ०सं० ७।२९।१; ७. पा०सू० ६।१।१६०; ८. तदेव—६।१।२०१।

कुशमुष्टिवाचको वेदशब्दो रूढः । ग्रन्थाववोधको वेदशब्दस्तु योगरूढः, शब्दराशिबोधकस्य वेदशब्दस्य केवलं यौगिकत्वस्वीकरणे ज्ञानमात्रेऽतिप्रसक्तेः । स च [1]मन्त्रब्राह्मणात्मकोऽप्रतिमसामर्थ्ययुतो हि वेदः । यथा शङ्कराचार्येण ब्रह्मसूत्रभाष्ये निगदितम्—

"चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवं जातीयकमर्थं शक्नोत्यवगमयितुम्"[2] ।

एवं सर्वजनविश्रुतोऽप्रतिहतप्रभावो वेदः किं पौरुषेयोऽपौरुषेयो वेति विचिकित्सा जागर्ति सर्वेषां हृदि । विषयेऽस्मिन् बहवो भारतीया वेदशास्त्रमर्मज्ञा विद्वांसो वेदानामपौरुषेयत्वसाधने कृतसङ्कल्पा दरीदृश्यन्ते; परन्त्वल्पा भारतीयाः पाश्चात्यास्त्वनल्पा मनीषिणो वेदानां पौरुषेयत्वसाधनेनैव स्वजीवनसाफल्यमामनन्ति । वेदविद्याविशारदा भारतीयाः प्राक्तना अनल्पा विद्वांसो वेदानामपौरुषेयत्वमनुमोदयन्तः स्वमतपुष्ट्यर्थं प्रमाणरूपेण वेदवाक्यान्येव समुपस्थापयन्ति । वेदानां पौरुषेयं समर्थयमाना वैदेशिका अन्ये विद्वांसोऽपि स्वमतसिद्ध्यर्थमितस्ततः समागतानि श्रुतिवाक्यान्येव प्रमाणीकुर्वन्ति । वेदानामपौरुषेयत्वविषये या विचिकित्सा प्रसृता, सातिप्राचीना । यथा आचार्यजैमिनिरपि पूर्वपक्षरूपेण वेदानां पौरुषेयत्वं समुपस्थापयन् सूत्रयामास —

"वेदांश्चैके सन्निकर्षः पुरुषाख्या"[3] । इति ।

अस्य जैमिनिसूत्रस्यायं भावो यद्यथा रामायणमहाभारतादिग्रन्थानां कर्त्तृरूपेण ग्रन्थकृतां पुरुषाणां नामायात्यनेनैव प्रकारेण वेदेऽपि तैत्तिरीयकाठकादिनामनिर्देशाद् वेदानां पौरुषेयत्वं प्रसिद्ध्यति । ऋग्वेदसंहितायामपि यादृशं वर्णनमुपलभ्यते तेनेदं प्रतिभाति यद् वेदकर्त्तार ऋषय इति । ऋषीणां तु वेदकर्तृत्वं केवलं प्रतिभात्येव न खलु तद् यथार्थरूपेणावतिष्ठते । वेदेषु तावद् ब्रह्मकर्तृरूपेण गृत्समदवसिष्ठादि-ऋषीणां यद्वर्णनमुपलभ्यते, तद् वर्णनं ब्रह्मसम्प्रदायप्रवर्तनात् प्रवचनाद्वा प्रथितम् । इदमेवानुमोदयताऽऽचार्येण जैमिनिना 'आख्या प्रवचनात्'[4] इति सूत्रितम् । दिव्यदृष्टिसम्पन्नाः प्राक्तना ऋषयो वेदमन्त्रद्रष्टार इत्यृग्वेदसंहितायां[5] वर्णितमस्ति । वागियमृषीणामन्तः प्रविश्य नानारूपेणावभाति । यथा ऋग्वेदे—"यज्ञेन वाचः पदवीमायन्, तामन्वविन्दन् ऋषिषु प्रविष्टाम्'[6] इत्युक्तमस्ति वाग्देवी स्वयमेव स्वाप्रतिमं सामर्थ्यमुद्घोषयन्ती कथयति—

---

१. मन्त्रब्राह्मणयोर्वेदनामधेयम्, आ० प० ३०, सत्या० श्रौ०सू० १।१७, बौ०गृ०सू० २।६।३ ।
२. शां० भा० १।१।२; ३. जै० सू० १।१।२७; ४. तदेव—१।१।३० ।
५. ऋ० सं० ७।३३।७–१३; ६. तदेव—१०।७१।३ ।

"अहमेव स्वयमिदं वदामि, जुष्टं देवेभिरुत मानुषेभिः।
यं यं कामये तं तमुग्रं कृणोमि, तं ब्रह्माणं तमृषिं तं सुमेधाम्"[१] ॥

गत्यर्थक-ऋषिधातुना तावदौणादिक[२] इन्प्रत्यये कृते सति ऋषिशब्दः प्रसिद्ध्यति। तपसा श्रमेण वावधूतकल्मषो मनुष्य ऋषिर्भवति। तपसमतिरिच्यान्यद् ऋषिकर्म न हि विद्यते। तदुक्तं शतपथब्राह्मणे—

'ये यत्पुरास्मात्सर्वस्माद् इदमिच्छन्तः श्रमेण तपसारिषन् तस्माद् ऋषयः'[३] इति। 'पूर्वे सप्त ऋषयस्तपसे निषेदुरित्यृग्वेदसंहितायामुक्तम्[४]। ऋषयस्तपश्चर्यया वेदमन्त्रद्रष्टारः। ऋग्वेदसंहितायां ब्रह्मकर्तृत्वरूपेणर्षीणां यद् वर्णनमुपलभ्यते,[५] तद् दर्शननिमित्तमेव। निरुक्तकारो यास्काचार्योऽपि वेदानामपौरुषेयत्वं समर्थयन्नृषीणां मन्त्रद्रष्टृत्वमेवानुमोदयति। यथा—

"तद्यदेनां तपस्यमानां ब्रह्मस्वयम्भ्वभ्यानर्षत् त ऋषयोऽभवंस्तदृषीणामृषित्वमिति विज्ञायते। ऋषिर्दर्शनात्। मन्त्रान् ददर्श—इत्यौपमन्यवः"[६] इति।

श्वेतवनवासिवृत्तिरपि वेदानामपौरुषेयत्वमेवानुमोदयन्ती 'ऋषयो वेदमन्त्रद्रष्टारो न तु कर्तारः'[७] इत्येव समर्थयति।

केचिदधुनातना मैक्दोनलप्रभृतयो विद्वांसो वदन्ति यद्वेदानामपौरुषेयत्वं न साधनीयम्, यतो ह्यार्याणां धार्मिकग्रन्थेषु नूनमेवोच्चतमां कोटिमाश्रितो मन्त्रब्राह्मणरूपेण द्विधा विभक्तो वेद आर्यावर्तवासिभिः प्राक्तनैर्बहुश्रुतैर्महर्षिभिरेव तात्कालिकीं सामाजिकीं स्थितिमेवावलोक्य तामेव विषयीकृत्यारचितो वेदः। अत एव यत्र त ऊषुस्तत्रत्यानां नदीनां गिरिकन्दराणां च वर्णनं चक्रुः। तस्मिन् काले ये ये देवाः सामाजिकानां हृदि तस्थुस्तेषामेव वर्णनं त ऋषयो वेदे कृतवन्तः। यदाचरणं तदानीं प्रशंसितमासीत् तदेवाचरणमृषयो वेदेषु स्वोचक्रुः। वेदेष्वपि पूर्वमृग्वेदसंहिताया एव रचना जाता। तदनन्तरं कैश्चिन्महर्षिभिर्यजुर्वेदो विरचित। तत्रापि पूर्वंमन्त्राणां तदनन्तरं ब्राह्मणानां च रचना जातेति ते पाश्चात्त्याः स्वीकुर्वन्ति।

अत्रोच्यते—पाश्चात्त्यानां विदुषामियं विचारणा न समीचीना, यतो हि वर्षसहस्रद्वितयात् पूर्वं पतञ्जलिरासीदिति पाश्चात्त्या एव विद्वांसः स्वीकुर्वन्ति। ततोऽपि

---

१. ऋ॰ सं॰ १०।१२५।५;　　२. इन् सर्वधातुभ्यः। (उणा॰ ४।१२९)
३. श॰ ब्रा॰ ६।१।१;　　४. ऋ॰ सं॰ १।१०९।४।
५. इदं ब्रह्मक्रियमाणं नवीयः। (ऋ॰ सं॰ ७।३५।१४)
ब्रह्म कृण्वन्तो हरिवो वसिष्ठाः। (तदेव—७।३७।४)
६. निरुक्तम्—२।३।३।
७. ऋषिर्मन्त्रद्रष्टा गत्यर्थत्वात्, ऋषेर्ज्ञानार्थत्वाद् मन्त्रं दृष्टवन्त ऋषयः। (उणा॰ ४।१।१)

बहुकालात् पूर्वं महर्षिर्जैमिनिरासीत् । पतञ्जलिभाष्यावलोकनेनेदमवगम्यते यन्महर्षि-जैमिनिकालतोऽपि पूर्वं कश्चन काशकृत्स्निनामको मीमांसको जातः । महर्षिणा कात्यायनेनापि स्वग्रन्थे काशकृत्स्निराचार्योऽनूदितः[1] । कात्यायनस्तु पाणिनिसमकालिक एव । पाणिनिकालस्तु ई० पू० सप्तमो शताब्दीति त एव पाश्चात्याः स्वीकुर्वन्ति । यद्यपि नेदं पाणिनिकालस्वीकरणं भारतीयानां मनोऽनुरञ्जयति, तथापि पाश्चात्या-नामेवोक्तिस्वीकारेऽपि स्पष्टमिदमवगम्यते यदितो वर्षसहस्रत्रितयात् पूर्वं काशकृत्स्नि-राचार्योऽभवत् । वेदानां यं कालं पाश्चात्याः स्वीकुर्वन्ति, ततोऽपि पूर्वं काशकृत्स्नि-राचार्योऽभवदिति तैरेव समर्थितम् । तेनाचार्येण काशकृत्स्निनापि वेदानामपौरुषेयत्व-मेवानुमोदितम् । देवानां नदीनां पर्वतानां च वर्णनं न पुरुषकृतित्वमनुमोदयति; यतो हि न कोऽपि प्रत्यक्षः कर्त्तावलोक्यते वेदानाम् । यथाचार्येण जैमिनिना समर्थितम्—

"तत्कर्त्रनुपलम्भेन स्यात् ततोऽपौरुषेयता"[2] ।

प्राक्तनैस्तत्तच्छास्त्राणां प्रवर्तकैर्महर्षिभिर्वेदानां कोऽपि कर्त्ता न ज्ञात इति प्रमाणैरवगम्यते । इदमेवोरीकृत्य मीमांसकैः प्राचीनैः सूत्रकारैरर्वाचीनैः कैश्चिद्भाष्य-कारैश्च वेदानामपौरुषेयत्वमेव स्वीकृतम् । गुरुमुखश्रवणादनन्तरमेव वेदानामध्ययनं यथाद्यश्वो दरीदृश्यते, अनेनैव प्रकारेण सर्वदाप्यध्ययनपरम्परा प्रचलिता । अत एव वार्त्तिककारो विस्पष्टयति—

वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम् ।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा[3] ॥ इति ।

अतः प्रवचनप्रयुक्तः काठकादिनामनिर्देशोऽपि न वेदानामपौरुषेयत्वं खण्डयति ।

वेदानां पौरुषेयत्ववादिनः केचिदधुनातनाः कथयन्ति यद् वेदानां कर्त्तृस्वीकरणे दौर्बल्यमापतिष्यति, अत एव भवद्भिस्तत्र दार्ढ्यसम्पादनाय वेदानां कर्त्तारं जानद्भिरपि स वेदकर्त्ता अपह्नुत इति कथनं सर्वथानुभवविरुद्धम् । यतो हि धर्मभीरवो भारतीया अद्यश्वोऽपि पुरुषनिर्मितान् रामायणमहाभारतादीन् ग्रन्थान् प्रति सुतरामादरं प्रकटयन्ति । पुरुषकृतं मत्वा न कुत्रापि दौर्बल्यं तत्रावलोक्यते । अनेनैव प्रकारेण यदि वेदानामपि कर्त्ता कोऽपि महापुरुषोऽलप्स्यत तर्हि नूनमेव सोऽपि वाल्मीकिव्यासादिवत् समादरमलप्स्यत । ग्रन्थस्य कर्तुरुच्छेदस्तु देशस्याध्येतॄणां चोच्छेदेन सर्वनाशेन वा भवितुमर्हति ।

---

१. सद्यस्त्वं काशकृत्स्निः । ( का० ४।३।१७ )

२. जै० न्या० मा० १।१।८ ; ३. श्लो० वा०, वाक्याधि० ३६६ ।

जैनबौद्धचार्वाका नास्तिकदार्शनिका[1] अपि वेदानां प्रामाण्यं न हि स्वीकुर्वन्ति। आस्तिकेषु दार्शनिकेष्वपि वेदस्वरूपविषये भिन्नता दरीदृश्यते । मीमांसकाः शब्दो नित्य इति स्वीकुर्वन्ति । नैयायिकास्तु शब्दस्यानित्यत्वमेव स्वीकुर्वन्ति । अत एव मीमांसान्यायदर्शनयोर्मध्ये वेदानामपौरुषेयत्वविषये न मतैक्यम् । यथा पूर्वं निगदितम्, मीमांसका वेदानामपौरुषेयत्वमेवानुमोदयन्ति । नैयायिकास्तु वेदानामीश्वरो निर्मातेति समर्थयन्ति । आप्तप्रामाण्यादेव वेदानां प्रामाण्यं दुर्निवारमिति गौतमसूत्रे[2] प्रतिपादितम् । यद्यपि गौतमस्य न्यायसूत्रेषु वेदकर्त्तृरूपेणेश्वरस्य निर्देशो न जातस्तथापि वाचस्पतिमिश्रेण तात्पर्यटीकायामिदमनुमोदितं यत् परमकारुणिको जगत्कर्त्ता परमेश्वरः सृष्टिरचनां कृत्वा जराजन्ममरणपीडितानां मानवानां कल्याणार्थमुपदेशमकरोत् । त एव परमेश्वरोपदेशा वेदरूपाः सन्ति । जयन्तभट्टेनापि वाचस्पतिमिश्रस्यैव विचारणानुमोदिता । न्यायभाष्यकारो वात्स्यायनस्तु[3] वेदार्थानां द्रष्टारः प्रवक्तारश्च साक्षात्कृतधर्माण आप्ता इत्यनुमोदयति ।

वैशेषिकदर्शनमपि परमेश्वरो वेदकर्त्तेति समर्थयति। परमेश्वरस्य वचनाद् वेदानां धर्मे प्रामाण्यं सिद्धमिति वैशेषिकसूत्रकारो महर्षिः कणादोऽनुमोदयति[4] । सर्वे वेदाः परमेश्वरस्यैव मुखान्निःसृता अत एव तेषां वेदानां धर्मे प्रामाण्यम् दुर्निवारम् । उदयनाचार्येणापि[5] वैशेषिकसूत्रस्य तद्वचनशब्दस्येयमेव व्याख्या कृता । वैशेषिकसूत्रस्य षष्ठे अध्यायेऽपि वेदानामीश्वरकर्तृत्वं पौरुषेयत्वं वा समर्थयता महर्षिणा कणादेनानुमोदितं यद् येन प्रकारेण लौकिकानां वाक्यानां रचना बुद्धिपूर्वकं विचार्य भवति, तेनैव प्रकारेण वेदानामपि रचना वेदार्थज्ञेन कृता[6] । वेदार्थज्ञः परमेश्वरस्तु नित्यज्ञानसम्पन्नोऽप्रतिमसामर्थ्ययुक्तोऽन्तर्यामी जगत्कारणरूप एवास्ति । स एव शाश्वतधर्मगोप्ताऽव्यक्तोऽनन्तः परमेश्वरो वेदानामादिवक्तेति वैशेषिकनयः ।

अत्र बहवः पाश्चात्या वेदानां पौरुषेयत्ववादिनो ह्युपहसन्ति यद्वैशेषिका नैयायिकाश्च वेदानामीश्वरकर्तृत्वमुद्घोष्य प्रकारान्तरेण वेदानां पौरुषेयत्वमेव साधयन्ति । तान् प्रतीदमेव कथ्यते यन्न नैयायिकैर्वैशेषिकैर्वा सहास्माकं विरोधो यतो हि न ते दार्शनिका वेदानामस्मादृशपुरुषकर्तृत्वमर्वाचीनकालिकत्वं वाऽनुमोदयन्ति;

---

१. नास्तिको वेदनिन्दकः । ( मनु० २।११ )

२. मन्त्रायुर्वेदप्रामाण्यवच्च तत् प्रामाण्यम्, आप्तप्रामाण्यात् । ( गौ० न्या० सू० २।१।६९ )

३. आप्तास्तु साक्षात्कृतधर्माणः, आप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च । (वा० भा० ३।१।६९)

४. तद्वचनादाम्नायस्य प्रामाण्यम् । ( वै० सू० १।१।३ )

५. किरणाव० १।१।३ : तद्वचनात् तेनेश्वरेण प्रणयनात् ।

६. बुद्धिपूर्वा वाक्यकृतिर्वेदे । (वै० सू० ६।१।१), बुद्धिपूर्वो ददाति । ( तदेव—६।१।३)

किन्तु जगदाधारभूतस्य सर्वज्ञस्य परमेश्वरस्य कर्तृकत्वमुपगच्छन्ति। वेदानां निर्मितिः कदा जाता ? इति तेऽपि वक्तुं न हि प्रभवन्ति। कस्मिन् कल्पे वेदराशिरयं प्रथमं निर्मित इति न हि निश्चेतुं शक्यते, यतो हि—'प्रतिमन्वन्तरं चैषा श्रुतिरन्या विधीयते'। अतो वेदस्येश्वरकर्तृत्ववादिनोऽपि मीमांसकेभ्योऽपौरुषेयवादिभ्यो नातिदूरं गच्छन्ति। परमेश्वरकृतत्वमपि न ते दार्शनिकाः प्रमाणेन साधयन्ति; किन्तु लोके शब्दोच्चारणस्य पुरुषकृतत्वदर्शनाद् वैदिकस्यापि शब्दस्य पुरुषकृतत्वमनुमानेनाभ्युपगच्छन्ति। वेदकर्त्ता नास्मादृशः सामान्य कोऽपि पुरुषः, यतो हि तत्रास्मदादेः कर्तृत्वमसम्भवम्। साक्षाद् भूतभावनः परमेश्वर एव वेदकर्त्तेत्यभिनन्दन्ति नैयायिका वैशेषिकाश्चेति। यद्यपि मीमांसकानां शब्दनित्यत्वस्य खण्डनं कृत्वा नैयायिकाः शब्दस्यानित्यत्वं साधयन्ति,[1] तथापि सामान्यवाक्यवद् वेदस्याप्यनित्यत्वं न ते स्वीकुर्वन्ति।

योगदर्शनेऽपि वेदानामीश्वरकर्तृत्वमेव प्रतिपादितम्। 'तत्र निरतिशयं सार्वज्ञ्यबीजम्[2]' इत्यस्य योगसूत्रस्य व्याख्यानप्रसङ्गे योगसूत्रभाष्यकारेण व्यासदेवेन समर्थितं यत् परमकारुणिकः परमेश्वरो भूतानामनुग्रहभावनयाऽज्ञानान्धकारनिमग्नानां मानवानां कृते धर्ममुपदिशति, यथा—

"तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्। ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति"[3]। योगवृत्तिकारो भोजदेवोऽपि परमेश्वरस्य कारुणिकत्वाद् वेदानामीश्वरकर्तृत्वमेवानुमोदयति[4]। वेदसम्प्रदायस्य प्रवर्तको महाप्रलयेऽपि स्वयं नित्य एव भवति। एवमुपर्युक्तेन वर्णनेन स्पष्टं यद् योगदर्शननयेऽपि वेदः परमेश्वरकृतो नित्यश्च।

सांख्याचार्यास्तु वेदानामीश्वरकर्तृत्वं खण्डयन्ति। सांख्यसूत्रकारेण सांख्यनये पुरुषप्रतिषेधः[5] कृतः। अतो वेदानां पौरुषेयत्वं केन प्रकारेण ते सांख्याचार्याः स्वीकरिष्यन्ति ? पुरुषे वेदनिर्माणस्य क्षमता न हि विद्यते। सांख्यनये मुक्तोऽमुक्तश्चेति द्विविधः पुरुषो वर्णितः। अमुक्तानां पुरुषाणामसर्वज्ञत्वात् तेषां वेदकर्तृत्वं नोपपद्यते[6]। विमुक्तस्तु विष्णुर्विशुद्धसत्त्वसम्पन्नः। अतो वीतरागत्वात् तत्रापि वेदकर्तृत्वं न हि प्रसिद्ध्यति। यदि कृतबुद्धिरदृष्टेऽप्युपजायते तर्हि तत्पौरुषेयम्। केवलं पुरुषेणोच्चरित एव पौरुषेयो न हि भवति; अपि तु यत्र कृतबुद्धिर्जायते तत्र पौरुषेयत्वमापततीति

---

१. वाचस्पतिमिश्रकृतभामती—१।१।३; २. पा० यो० सूत्रे—१।२५।

३. यो० भा० १।२५; ४. तस्य कारुणिकत्वाद् भूतानुग्रह एव प्रयोजनम्; कल्पप्रलयमहाप्रलयेषु निःशेषान् संसारिण उद्धरिष्यामीति तस्याध्यवसायः। (भोजवृत्तिः—१।२५)

५. सां० सू० ५।४६; ६. विज्ञानभिक्षुः, सांख्यप्रवचनभा०, सां० सू० ५।४७।

समर्थयति सांख्यसूत्रकारः —'यस्मिन् दृष्टेऽपि कृतबुद्धिरुपजायते तत् पौरुषेयम्'[1] । अतः सांख्यनये केनापि प्रकारेण वेदानां पौरुषेयत्वं न प्रसिद्ध्यति, यतो हि वेदेषु कृतबुद्धिर्न ह्युपजायते । वेदास्तु परमेश्वरस्य निःश्वासभूता एव सन्ति । यथा श्रुतिः समर्थयति—

'तस्यैतस्य महतो भूतस्य निःश्वसितमेतद् यदृग्वेदः' इति । श्वासप्रश्वासास्तु स्वयमेवाविर्भूता भवन्ति । तेषामुत्पादने पुरुषबुद्धिर्न हि प्रभवति । अतस्तस्य महाभूतस्य निःश्वासभूता वेदाः स्वयमेवाविर्भूताः । तत्र परमेश्वरस्य किञ्चिन्मात्रमपि प्रयत्नो न हि विद्यते । अतो वेदा अपौरुषेया नित्याश्च । सर्वसामर्थ्यसम्पन्नत्वात् तेषां वेदानां स्वतः प्रामाण्यमपि सांख्याचार्या स्वीकुर्वन्ति[2] ।

वेदान्तोऽपि वेदानामपौरुषेयत्वमेवानुमोदयन् सांख्यनयमेवानुधावति । वेदान्तशास्त्रे श्रुतिः प्रत्यक्षशब्देनाभिहिता । यतो हि प्रामाण्यं प्रति तस्याः परापेक्षा न हि विद्यते । 'शास्त्रयोनित्वात्'[3] इत्यस्य ब्रह्मसूत्रस्य भाष्ये शङ्कराचार्यो निगदति यद्वेदानां ब्रह्मैव योनिः=उत्पत्तिस्थानमस्ति[4]; परन्त्वत्रेयं कारणता न ग्रन्थकर्तृरूपेणाभिहिता । यतो हि सर्वेऽपि वेदास्तस्य जगत्कर्तुः परमेश्वरस्य निःश्वासभूता लीलान्यायेन निर्गताः । वेदानां प्रादुर्भावे न तस्य ब्रह्मणः कोऽपि प्रयत्नो जातः । वेदास्तु नित्या एव[5] । वेदतत्त्वज्ञेष्वृषिषु वाग्देवो स्वयमेव प्रविष्टेति श्रुतिरपि समर्थयति । अत एव वाग्दर्शनादृषीणामृषित्वमुपपद्यते । इदमेवोरीकृत्य महर्षिणा व्यासेनोक्तम्—

"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः ।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा[6] ॥ इति ।

महाप्रलये वेदास्तिरोहिता भवन्ति । पुनः सृष्टिकालेऽन्तर्हितान् वेदान् स्वतपश्चर्यया ब्रह्मणानुज्ञाता महर्षयो लभन्ते । अनेनापि वचनेनेदं स्पष्टं यद् वेदा नित्या एव । महाप्रलयेऽपि वेदानां तिरोधानमेव भवति, न तु विनाशः । पुनश्च सृष्टिकाले तेषां स्वयमेवाविर्भावो भवति । वेदान्तपरिभाषाकारोऽपि वेदानामपौरुषेयत्वं समर्थयन्—"पौरुषेयत्वं सजातीयोच्चारणानपेक्षोच्चारणविषयत्वम् । तथा च सर्वाद्यकाले परमेश्वरः पूर्वसर्गसिद्धवेदानुपूर्वीसमानानुपूर्वीकं वेदं विरचितवान्, न तु तद्विजातीयं वेदम्[7]" इति ब्रूते । यथा लौकिकशब्दराशिषु कर्त्ता दरीदृश्यते तथा वैदिकशब्दे कोऽपि कर्त्ता न ह्युपलभ्यते । अतः सुदृढेन प्रमाणेन लौकिकवाक्यानां कर्त्तुः समुपलम्भनात् तेषां सकर्तृकत्वमुपगम्यते; परन्तु प्रयत्नेनान्विष्टोऽपि न कोऽपि पुरुषविशेषो वेदानां कर्त्ता समुपलभ्यते, अतस्तत्रापौरुषेयत्वमेव मन्यामहे । इदमेवानुमोदयता शङ्कराचार्येणोक्तम्—

---

१. सां० सू० ५।५० ; २. निजशक्त्यभिव्यक्तेः स्वतः प्रामाण्यम् । (सां० सू० ५।५१)
३. ब्र० सू० १।१।२ ; ४. शां० भा० १।१।२ ।
५. अत एव च नित्यत्वम् । ( ब्र० सू० १।३।२९ )
६. महाभा०, वनप०; ७. वेदान्तपरिभाषा, आ० परि० ।

"तस्मात् कारणादवगच्छामो न कृत्वा सम्बन्धं व्यवहारार्थं केनचिद्वेदाः प्रणीता इति । यद्यपि च विस्मरणमुपपद्येत, तथापि न प्रमाणान्तरेण सम्बद्धारं प्रतिपद्येमहि । यथा विद्यमानस्याप्यनुपलम्भो भवति, नैतावता विना प्रमाणेन शशविषाणं प्रतिपद्येमहि"[१] ।

अतो नूनमेवेदं सुस्थितं यद् वेदान्तनयेऽपि वेदा अपौरुषेया एव ।

मीमांसकानां वेदमीमांसाऽतीव विस्तृता । आचार्येण जैमिनिना स्वसूत्रेषु, शबरस्वामिना सूत्राणां भाष्ये, कुमारिलभट्टेन श्लोकवार्त्तिकेऽवान्तरकालिकैर्ग्रन्थकारैश्चापि स्वग्रन्थे वेदानामपौरुषेयतैव युक्तिवैभवेन प्रतिपादिता । मीमांसकानां शब्दनित्यत्वनयस्तत्राधुनिके वैज्ञानिकयुगेऽपि महिममण्डितोऽस्ति । मीमांसकाः समर्थयन्ति यच्छब्दोऽश्रुतोऽपि विलुप्तो न हि भवति । आकाशेऽन्तर्हिताः शब्दास्तालुजिह्वासंयोगादाविर्भूता भवन्ति, न तूत्पद्यन्ते । बहुभिर्जनैरुच्चारितोऽपि शब्द एकरूप एव भवति, वृद्धिस्तु केवलं नादस्यैव भवति । नादो ह्युच्चारणजन्यध्वनिः, सोऽनित्यः; परन्तु शब्दस्तु नित्य[२] एव । अतो नित्यशब्दानां राशिभूतो वेदोऽपि नित्य एव[३] । शब्दोऽर्थस्तस्य सम्बन्धश्चेतत्त्रयं नित्यमिति मीमांसकाः समर्थयन्ति[४] । अतो वेदानां स्वतः प्रामाण्यमपि मीमांसानये प्रसिद्ध्यति । वेदेषु काठककौथुमतैत्तिरीयादिनामनिर्देशो हि तेषामृषीणां प्रथमोपदेशसूचकः[५] । वेदेष्वनित्यपदार्थानां दर्शनाच्छ्रवणाच्चापि वेदानामपौरुषेयता न बाधिता भवति, यतो हि तत्र न सामान्यः कोऽपि जनः पदार्थो वा वेदपुरुषेणाभिहितः । यथा तैत्तिरीयसंहितायां[६] न कोऽपि बबरप्रवाहणिनामको व्यक्तिविशेषो वर्णितः; अपि तु तत्र बबरध्वनियुक्तः प्रवहणशीलो वायुरेवाभिहितः[७] । वेदेषु 'वनस्पयः सत्रमासत', 'सर्पाः सत्रमासत' इत्यत्र वनस्पतीनां सर्पाणां च सत्रयागसम्पादनस्य वर्णनं प्राप्यते । यद्यपि वनस्पतीनामचेतनत्वात् सर्पाणां च चेतनत्वेऽपि विद्याभावान्न तेषां सत्रयागानुष्ठानं सम्भवति, तथापि न कोऽपि सिद्धान्तविरोधोऽत्र दरीदृश्यते, यतो ह्यत्रार्थवादः । अयमर्थवादश्चेतनपुरुषं सत्रयागानुष्ठानार्थं प्रेरयति । वेदानामपौरुषेयत्वं समर्थयता जैमिनिना सूत्रितम्—"कृते चाविनियोगः स्यात् कर्मणः सम्बन्धात्"[८] । वेदाः पुरुषनिर्मिता भवेयुस्तर्हि तेषां स्वर्गसाधनरूपे ज्योतिष्टोमादियागे विनियोगो न स्यादित्यर्थः, यतो हि स्वर्गज्योतिष्टोमयोः साध्यसाधनभावो न हि पुरुषेण ज्ञायते । अनेनैव प्रकारेण सत्रयागप्रतिपादनमपि न प्रमत्तजल्पनम् । वेदेषु

---

१. शां० भा० १।१।५; २. मी० सू० १।१।१४; ३. तदेव—१।१।१७।
४. औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धः । ( जै० सू० १।५ )
५. जै० सू० १।३।३०; ६. बबरप्रवाहणिरकामयत । ( तै० सं० ७।२।१।१ )
७. परं तु श्रुतिसामान्यम् । ( जै० सू० १।१।३१ ) ८. जै० सू० १।१।३२ ।

यथा वर्णनमुपलभ्यते तथैवोत्तरयुगे मानवाः प्रादुर्भवन्ति । पुरा प्रजापतिर्वेदेभ्य एव सर्वेषां नामानि कर्माणि च चकार[1] । अतीतकाले जातानां मानवानां वर्णनमैतिहासिकरूपेण तत्र न हि विद्यते । आचार्येण जैमिनिना शबरस्वामिना च वेदानां स्वतः प्रामाण्यमेवानुमोदितम् । वेदानामपौरुषेयत्वं श्रुतिरेवानुमोदयति—

"तस्मै नूनमभिद्यवे वाचा विरूपनित्यया । वृष्णे चोदस्व सुष्टुतिम्"[2] ॥

ये ह्याधुनिका विचारका नैयायिका वैशेषिकाश्च वेदानां पौरुषेयत्वं साधयन्ति, तेऽपि वेदकर्त्तारं न शक्नुवन्ति वदितुम् । केवलमनुमानेनैव ते स्वमतं समुपस्थापयन्ति । यानि शास्त्राणि पुरुषनिर्मितानि तानि प्रति न कोऽपि विवदते । अतस्तत्कर्त्रनुपलम्भेन वेदानामपौरुषेयत्वं दुर्निवारम् । इदमेव समर्थयन् शास्त्रदीपिकायामुक्तम्—

'येऽपि हि पौरुषेयतां मन्यन्ते, तेऽपि नैव परम्परया तत्र कर्तृविशेषस्मरणं शक्नुवन्ति वदितुम् । सामान्यतोदृष्टेन कर्तारमनुमाय स्वाभिमतं कर्त्तारं तत्र निक्षिपन्ति केचिदीश्वरम्, अन्ये हिरण्यगर्भम्, अपरे प्रजापतिम् । न चायं नानाविधो विवादः परम्परया कर्त्तरि मन्वादिवत् स्मर्यमाणे कथञ्चिदवकल्पते । न हि मानवे भारते शाक्यग्रन्थे वा कर्तृविशेषं प्रति कश्चिद् विवदते । तस्मात् स्मर्तव्यत्वे सत्यस्मरणाददृश्यादर्शनबाधितं सामान्यतोदृष्टं न शक्नोति कर्तारमवसाधयितुम्[3] ।

एवं मीमांसानयेऽपि वेदोऽपौरुषेयो नित्यः स्वतःप्रमाणं च ।

स्मृतिषु पुराणेषु चापि वेदा अपौरुषेया एव प्रतिपादिताः । वेदो हि देवानाम्, पितॄणाम्, मनुष्याणां च पथप्रदर्शको नित्योऽपौरुषेयश्चास्ति । यथा मनुना स्मृतम्—

'देवपितृमनुष्याणां वेदचक्षुः सनातनम् ।
अशक्यं चाप्रमेयं च वेदशास्त्रमिति स्थितिः"[4] ॥

स्मृतिस्तु श्रुतिमेवानुधावति । वेदवागियमविनाशिपरमेश्वररूपा, यज्ञसम्पादयित्री, अमृतप्रसवा चास्ति, यथा श्रुतिः समर्थयति –

"वागक्षरं प्रथमजा ऋतस्य । वेदानां माताऽमृतस्य नाभिः"[5] ॥

वेदानामपौरुषेयत्वं समर्थयन् भगवता कृष्णेनापि निगदितं यदहमेव सर्वैर्वेदैः ज्ञातव्योऽस्मि । वेदान्तस्याहमेव कर्त्ता; परन्त्वहं वेदवेत्ता न तु वेदकर्त्तेति[6] ।

---

१. वि० पु० ५।६२;        २. ऋ० सं० ८।७५।६;        ३. शा० दी० १।१।८ ।
४. मनु० १२।९४;        ५. तै० ब्रा० २।८।५ ।
६. वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ ( श्रीमद्भगवद्गीता–१५ १५ )

सायणाचार्येणापि वेदभाष्यभूमिकायां वेदानामपौरुषेयत्वं प्रतिपादयन् 'यस्य निःश्वसितं वेदाः'[१] इति निगदितम् ।

एवं दार्शनिकाः पौराणिकाः स्मृतिकर्त्तारश्चैकमनसो भूत्वा वेदानामपौरुषेयत्वमेवानुमोदयन्ति । पौरुषेयमतानुयायिनो नैयायिका वैशेषिकाश्चापि जगत्कारणरूपः सर्वज्ञोऽव्यक्तोऽन्तर्यामी साक्षात्परमेश्वर एव वेदकर्त्तेति साधयन्ति । अतस्तैः सहापौरुषेयवादिनां नातिविरोधः । वेदे त्वीदृशमप्रतिमं सामर्थ्यमस्ति यदवलोक्यैव तार्किकशिरोमणिना शङ्कराचार्येणापि स्वतर्काधिरूढा वेदापवादिनी प्रतिभा वेदपद एव प्रक्षिप्ता । यद्यपि पाश्चात्यशिक्षापहृतमतीनामाधुनिकानां विचारकाणां हृदि वेदानामपौरुषेयत्वविचारणा न कदापि मनागपि पदं निदधाति, तथापीदमवितथं सुस्थितं च यद् वेदा अपौरुषेया एवेति ।



१. ऋ० भा० भू० २ ।

# वैदिकपदान्वाख्यानदृष्ट्या वैयाकरणसिद्धान्तकौमुद्यां स्थितायाः न्यूनतायास्त्रुटेश्च संक्षिप्तो विमर्शः

श्रीयुत आमोदवर्धनः कौण्डिन्न्यायनः

च. २/४१९, स्वाध्यायशाला, सरस्वतीमार्गः,

लाजिम्पाट्, काष्ठमण्डपनगरम्

नेपालदेशः

❀ ❀ ❀

वैदिकजीवनपद्धतौ चत्वारः पुरुषार्थाः स्वीकृताः सन्ति—धर्मः, अर्थः, कामः, मोक्षश्चेति। यद्यपि भारतवर्षेऽधुना बहवो जना अर्थकामपरायणा दृश्यन्ते, तथापि केचन विलक्षणा विद्वांसो मनीषिणश्च चतुर्णामेव पुरुषार्थानां प्राप्त्यर्थं सर्वदैव प्रयतमाना अपि विलोक्यन्ते। चतुर्षु पुरुषार्थेषु धर्म एव प्राथम्यं प्रामुख्यं च भजते। यतो हि—यथा ब्रह्मचर्य-गृहस्थ-वानप्रस्थ-संन्यासाश्रमेषु गृहस्थाश्रम एव सर्वाश्रममूलत्वात् प्रधानतामावहति, तथैव पुरुषार्थेष्वप्यन्यत्सर्वपुरुषार्थकारणभूतत्वाद् धर्मो नाम पुरुषार्थ एव प्राथम्यं भजते[1]। धर्मस्य सम्यग् ज्ञानं हि भारतवर्षीयाणामस्मादृशानां जनानां कृते वेदादेव भवतीति सर्वेषामतिरोहितम्[2]। अतः सर्वपुरुषार्थानां मूलं धर्मः, धर्मस्य च मूलं वेद इति निश्चीयते।

"साक्षात्कृतधर्माण ऋषयो बभूवुः, तेऽवरेभ्योऽसाक्षात्कृतधर्मस्य उपदेशेन मन्त्रान् सम्प्रादुः, उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च"[3] इति यास्कवचनात्, "द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो

---

१. पुरुषार्थेषु धर्मस्य मुख्यत्वं व्यासेनाऽप्युक्तं महाभारते (१८।५।६२)—

"ऊर्ध्वबाहुर्विरौम्येष न च कश्चिच्छृणोति मे।

धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" ॥ इति।

२ धर्मज्ञानार्थं वेद एव सर्वथाऽऽश्रयणीय इति मनुनोक्तं मनुस्मृतौ (२।१३)। यथा—

"धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः"। इति।

३. निरुक्ते—१।६।४।

वदन्ति परा चैवाऽपरा च, तत्राऽपरा ऋग्वेदो यजुर्वेद: सामवेदोऽथर्ववेद: शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति, अथ परा यया तदक्षरमधिगम्यते"[1] इति मुण्डकोपनिषद उल्लेखात्, "ब्राह्मणेन निष्कारणो धर्म: षडङ्गो वेदोऽध्येयो ज्ञेयश्च"[2] इति पतञ्जलेरुल्लेखाच्च धर्मतत्त्वज्ञानार्थं वेदार्थावबोध आवश्यक:, वेदार्थावबोधार्थं च वेदाङ्गान्यावश्यकानीति स्फुटतयाऽवगम्यते।

यथा हस्तपादादीन्यङ्गानि पुरुषमुपकुर्वन्ति, तथैव वेदार्थावबोधनाय साहाय्यं कुर्वाणानि शिक्षा-कल्प-व्याकरण-निरुक्त-च्छन्दो-ज्योतिषरूपाणि वेदाङ्गानि वेद-पुरुषमुपकुर्वन्ति। अत एव चरणव्यूहसूत्रे[3] पाणिनीयशिक्षायां[4] च वेदाङ्गानि वेद-पुरुषाङ्गेष्वारोप्य समुपदिष्टानि। तद्यथा—

"छन्द: पादौ तु वेदस्य हस्तौ कल्पोऽथ पठ्यते।
ज्योतिषामयनं चक्षुर्निरुक्तं श्रोत्रमुच्यते॥
शिक्षा घ्राणं तु वेदस्य मुखं व्याकरणं स्मृतम्।
तस्मात् साङ्गमधीत्यैव ब्रह्मलोके महीयते"॥ इति।

षट्सु वेदाङ्गेषु मुखस्थानयी व्याकरणं वेदार्थावबोधाय महत्त्वपूर्णं साधनं वर्तते। व्याक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति व्याकरणमिति 'व्याकरण'-शब्दस्य व्युत्पत्ति: क्रियते। "व्याकरणं नाम वाक्य-तदर्थसम्बन्धज्ञानस्य स्फुटप्रकृतिप्रत्ययादि-कल्पनपूर्वकै: पदतदर्थसम्बन्धज्ञापनादिभिरुपकारकं शास्त्रम्'[5] इत्युक्त्वा व्याकरण-शास्त्रस्य परिभाषा विद्वद्भि: कृता दृश्यते। व्याकरणशास्त्रं विना वेदानामर्थं बोद्धुं यज्ञियभाषाया: प्रयोगं कर्तुं च कठिनं भवति। व्याकरणशास्त्रस्य प्रयोजनं प्रदर्शयता पतञ्जलिनाऽत एव "रक्षोहागमलघ्वसन्देहा: प्रयोजनम्"[6] इत्युक्त्वा व्याकरणस्य मुख्यानि प्रयोजनानि वेदपरकाण्येव निर्दिष्टानि। अन्यान्यपि गौणानि प्रयोजनानि तेनोपदिष्टानि। पूर्वाचार्यैर्नव व्याकरणानि स्मृतानि—

---

१ मु० उ० १।१।४-५।

२. पाणिनीयव्याकरणमहाभाष्यस्य पस्पशाह्निक आगमपदार्थनिरूपणभाष्ये।

३. आचार्यमहीदासकृतभाष्यसहितस्य चरणव्यूहसूत्रस्य यजुर्वेदखण्डे ३१तमे पृष्ठे (१९३८, चौखम्बा संस्कृत सीरिज आफिस, वाराणसी)।

४. ४१-४२ तमयो: श्लोकयो:।

५. आचार्यशिवराजकौण्डिन्न्यायनप्रणीताया: कौण्डिन्न्यायनशिक्षायास्तृतीयाध्याये स्वरनिरूपणे श्रैस्वर्यादिप्रयोग--तानप्रयोगविषयविवेचनप्रकरणे ३९७तमे पृष्ठे (वि० सं० २०४९, स्वाध्यायशालाकुटुम्बम्, काष्ठमण्डपनगरम्, नेपालदेश:)।

६. पाणिनीयव्याकरणमहाभाष्यस्य पस्पशाह्निके शास्त्रप्रयोजनाधिकरणे।

"ऐन्द्रं चान्द्रं काशकृत्स्नं कौमारं शाकटायनम्।
सारस्वतं चाऽऽपिशलं शाकलं पाणिनीयकम्"[1] ॥ इति।

पाणिनिनाऽष्टाध्याय्यां केचनाऽन्येऽपि प्राचीना वैयाकरणा उल्लिखिताः सन्ति; किन्तु तेषां व्याकरणग्रन्था अधुना नोपलभ्यन्ते। अधुना पाणिनेः पश्चात्कालिकानां शर्ववर्म-चन्द्रगोमि-जिनेन्द्रबुद्धि-महाराजभोजादीनां कातन्त्रव्याकरण-चान्द्रव्याकरण-जैनेन्द्रव्याकरण-सरस्वतीकण्ठाभरणव्याकरणादीनि व्याकरणान्येव प्राप्यन्ते। एषु सरस्वतीकण्ठाभरणं विहायाऽन्यानि व्याकरणानि वेदाध्ययनाय विशेषत उपयोगीनि नैव सन्तीति विद्वद्भिः[2] प्रतिपादितं दृश्यते।

पाणिनि-कात्यायन-पतञ्जलिभिस्त्रिभिर्मुनिभिः कृतं लोकवेदसाधारणं व्याकरणमेवाऽधुनाऽधिकं प्रथितं भूम्ना वेदोपकारकं वेदाङ्गत्वेन शिष्टैः स्वीकृतं च वर्तते। एतदनुसारेणैव धर्मकीर्ति-विमलसरस्वती-रामचन्द्राननुसरता[3] भट्टोजिदीक्षितेन प्रक्रियाक्रममाश्रित्य वैयाकरणसिद्धान्तकौमुदी रचिता। अत्राऽष्टाध्याय्याः सर्वाण्येव सूत्राणि कात्यायनस्य सर्वाणि मुख्यानि वार्त्तिकानि च सङ्गृह्य तद्व्याख्यानं च सोदाहरणं सङ्क्षिप्तरूपेण कृतमस्ति। वैयाकरणसिद्धान्तकौमुद्यां वैदिकप्रकरणं स्वरप्रकरणं चेति प्रकरणद्वयं वेदमात्रोपकारकं सदपि सङ्गृहीतम्। अतो भट्टोजिदीक्षितेनापि त्रिमुनिकृतेन पाणिनीयेन व्याकरणेनेव वैदिकप्रयोगाणां व्याख्यानेऽन्वाख्याने च प्रयासः कृतो दृश्यते; किन्तु बहुषु स्थलेषु पाणिनीयव्याकरणेन व्याकृता अपि वैदिकाः प्रयोगा अनेन त्यक्ताः सन्ति। कुत्रचिदुदाहरणानां न्यूनतया विषयस्याऽस्पष्टता, कुत्रचिच्चाऽशुद्धोदाहरणानां प्रदर्शनेन विषयस्याऽन्यथा व्याख्याऽप्यनेन कृता दृश्यते। अस्मिन् निबन्धे निदर्शनरूपेण तादृशाः कतिपये विषया विविच्यन्ते, येन विवेचनेन पाणिनीयव्याकरणापेक्षया भट्टोजिदीक्षितस्य सिद्धान्तकौमुद्या वैदिकप्रकरणे स्वरप्रकरणेऽन्यत्र च स्थिता न्यूनतास्त्रुटयश्च प्रकाश्येरन्, वेदभाषां बुभुत्सवो विद्वांसः सिद्धान्तकौमुदीत उपरि गत्वा पाणिनीयव्याकरणानुशीलने वेदार्थस्य ज्ञानाय प्रचाराय च प्रयतने चोद्बोध्येरन्।

---

१. 'श्रौतत्त्वविधि'-नामके ग्रन्थ एतेषां नवानां व्याकरणानामुल्लेखोऽस्तीति युधिष्ठिरो मीमांसकः, 'संस्कृत व्याकरणशास्त्र का इतिहास' (पहला भाग) इति नामके ग्रन्थे, ६५ तमे पृष्ठे ( वि० सं० २०३०, रामलाल कपूर ट्रस्ट, हरियाणा )।

२. आचार्यशिवराजकौण्डिन्न्यायनप्रणीतस्य 'वैदिक धर्म मूल रूपमा' इत्याख्यस्य नैपालीयभाषामयस्य ग्रन्थस्य वेदाङ्गपरिचयप्रकरणे चतुर्दशे पृष्ठे ( वि० सं० २०४५, स्वाध्यायशालाकुटुम्ब, काठमाण्डु, नेपाल )।

३. धर्मकीर्ते रूपावतारः, विमलसरस्वतीकृता रूपमाला, रामचन्द्रस्य प्रक्रियाकौमुदी च प्रक्रियाक्रममाश्रित्य रचिताः कालक्रमेण ख्यातिमागता व्याकरणग्रन्थाः सन्ति।

वेदे मासनामसु 'मधुः, माधवः (मधव्यः), शुक्रः, शुचिः, नभः, नभस्यः, इषः, ऊर्जः, सहः, सहस्यः, तपः, तपस्यः' इत्येते शब्दाः प्रयुक्ता दृश्यन्ते[1]। एतेषां शब्दानां सिद्ध्यर्थं पाणिनिना "मत्वर्थे मासतन्वोः"[2] इति, "मधोर्ञ च"[3] इति च सूत्रे रचिते स्तः। अनयोर्मध्ये प्रथमसूत्रस्य व्याख्यानार्थं काशिकायां "यस्मिन्नर्थे मतुब् विहितस्तस्मिश्छन्दसि विषये यत्प्रत्ययो भवति मासतन्वोः प्रत्ययार्थविशेषणयोः ..." इत्युक्त्वा "नभांसि विद्यन्ते यस्मिन् मासे नभस्यो मासः, सहस्यः, तपस्यः, मधव्यः...."[4] इत्येतान्युदाहरणानि प्रदर्शितानि सन्ति; किन्तु वैयाकरणसिद्धान्तकौमुद्यामस्यैव सूत्रस्य व्याख्याने "नभोऽभ्रम्, तदस्मिन्नस्तीति नभस्यो मासः"[5] इत्येवोल्लिखितम्, अन्यान्युदाहरणान्यत्र न दत्तानि। तानि जयकृष्णकृतायां सुबोधिन्यां भट्टोजिदीक्षितरचितायां प्रौढमनोरमायां चाऽसङ्गृहीतानि। तावदेव न, 'मधुः, शुक्रः, शुचिः नभः, इषः, ऊर्जः, सहः, तपः' इत्येतेषां मासबोधकानां वैदिकपदानां सिद्ध्यर्थं पाणिनीयव्याकरणमहाभाष्ये "लुगकारेकाररेफाश्च"[6] इति, काशिकायां च "लुगकारेकाररेफाश्च वक्तव्याः"[7] इत्यनेन प्रकारेण सङ्गृहीतं वार्त्तिकमपि सिद्धान्तकौमुदीकारेण परित्यक्तम्। तच्च सुबोधिन्यादिषु नोल्लिखितम्। केवलं नागोजि-(नागेश-)भट्टविरचिते बृहच्छब्देन्दुशेखरे लघुशब्देन्दुशेखरे चैव तद् वार्तिकं प्रदर्शितम्। "मधोर्ञ च" इति सूत्रस्य व्याख्याने काशिकायां "मधुशब्दान्मत्वर्थे ञः प्रत्ययो भवति चकाराद् यच्च, उपसङ्ख्यानाल्लुक् च, माधवः, मधव्यः, मधुः...." इत्युल्लिखितम्; किन्तु "लुगकारेकाररेफाश्च" इति वार्त्तिकस्य त्यागात् सिद्धान्तकौमुदीस्थेनाऽनेन सूत्रेण 'माधवः, मधव्यः' इति द्वे एव रूपे सिद्ध्यतः, मधुरिति पदं तु कथमपि न सिद्ध्यति। अतः सिद्धान्तकौमुद्यामस्य सूत्रस्य व्याख्याने 'मधुः' इत्युदाहरणं न प्रदर्शितम्।

---

१. (क) "मधुश्च माधवश्च वासन्तिकावृतू"।
(माध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदसंहितायाम्—१२।३५)
(ख) "शुक्रश्च शुचिश्च ग्रैष्मावृतू"। ( तत्रैव—१४।६ )
(ग) "नभश्च नभस्यश्च वार्षिकावृतू"। ( तत्रैव—१४।१५ )
(घ) "इषश्चोर्ज्जश्च शारदावृतू"। ( तत्रैव—१४।१६ )
(ङ) "सहश्च सहस्यश्च हैमन्तिकावृतू"। ( तत्रैव—१४।२७ )
(च) "तपश्च तपस्यश्च शैशिरावृतू"। ( तत्रैव—१५।५७ )
(छ) "अनुतप्यमाना मधव्यौ स्तोकावप तौ रराध"। ( तैत्तिरीयसंहितायाम्–३।२।८।२ )

२. अष्टाध्याय्याम्—४।४।१२८; ३ तत्रैव—४।४।१२९।

४. वामनजयादित्यरचितायां पाणिनीयव्याकरणसूत्रवृत्तौ काशिकायाम्—४।४।१२८।

५. वैदिकप्रकरणस्य चतुर्थाध्याये (३४७४ तमसूत्रव्याख्याने)।

६. ४।४।१२८ इत्यत्र पाणिनीयव्याकरणमहाभाष्ये।

७. ४।४।१२८ इत्यत्र काशिकावृत्तौ।

अनयोर्द्वयोः सूत्रयोर्व्याख्यान एकस्य वार्त्तिकस्य त्यागात् सिद्धान्तकौमुद्यनुसारेण मध्वादिषु त्रयोदशसु मासबोधकेषु पदेषु मध्ये 'मधव्यः, नभस्यः, सहस्यः, तपस्यः, माधवः' इत्येतानि पञ्चैव पदानि सिद्ध्यन्ति, अन्यान्यष्टपदानि तु न सिद्ध्यन्ति। एषु पञ्चस्वपि त्रयाणामेव पदानामुदाहरणतया भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यामुल्लेखः कृत इति वैदिकपदान्वाख्यानदृष्ट्या वैदिकपदनिदर्शनदृष्ट्या च सिद्धान्तकौमुद्यां न्यूनताऽस्पष्टता च स्फुटमवगम्यते।

तथैव "एहि त्वं जाये स्वो रोहाव"[१] इति प्रयोगस्याऽन्वाख्यायकं "स्वरो रोहतौ छन्दस्युपसङ्ख्यानम्"[२] इति वार्त्तिकम्, "पीवोपवसनानाम्"[३], "पयोपवसनानाम्" इत्येतयोः प्रयोगयोरन्वाख्यायकं "पीवोपवसनादीनां छन्दसि लोपः"[४] इति वार्त्तिकं च सिद्धान्तकौमुदीकारेण परित्यक्तं वर्तते।

"मन्त्रेष्वाङ्यादेरात्मनः"[५] इति सूत्रस्याऽव्याप्तेर्निरासार्थं पाणिनीयव्याकरणभाष्ये "मन्त्रेष्वात्मनः प्रत्ययमात्रे लोपः प्रसङ्क्तव्यः, इहापि यथा स्यात् त्मन्या समञ्जन्,[६] त्मनोरन्तस्थः" इत्यादिकमुक्तमस्ति। काशिकायामपि "आङोऽन्यत्रापि च्छन्दसि लोपो दृश्यते"[७] इति वार्त्तिकमुल्लिख्य तदुदाहरणं "त्मन्या समञ्जत मह्यम्" इति प्रदर्शितम्। आङिति तृतीयैकवचनस्य पूर्वाचार्यैः कृता संज्ञा विद्यते। अतः सूत्रेण तु मन्त्रेषु तृतीयैकवचनप्रत्यये पर एवाऽऽत्मन आदेर्लोपः प्राप्नोति; किन्तूपरि प्रदर्शितेषूदाहरणेष्वन्यत्राऽप्यात्मन आदेर्लोपो दृश्यमानोऽस्ति। तस्मात् सूत्रेणाऽव्याप्तस्य लक्ष्यस्य व्यापनार्थं वार्त्तिकमावश्यकमेव। सूत्रार्थपरिष्कारायाऽस्यावश्यकमेतादृशं

१. मा. वा. शु. य. वे. शतपथब्राह्मणे (५।२।१।१०) "जाय एहि स्वो रोहाव" इत्यस्ति।

२. पाणिनीयव्याकरणभाष्ये (६।३।१०९), काशिकायामपि "स्वरो रोहतौ छन्दस्युत्वं वक्तव्यम्" इत्यस्ति। अस्यायमर्थः —वेदे रोहतौ परे स्वर्शब्दस्य रेफस्य उत्वं भवतीति। ततो लौकिकस्य 'स्वा रोहाव' इत्यस्य स्थाने छन्दसि 'स्वो रोहाव' इति भवतीति ज्ञायते।

३. मा. वा. शु. य. वे. मन्त्रसंहितायाम्—२१।४३।

४. पाणिनीयव्याकरणभाष्ये (६।३।१०९) काशिकायां च "पीवोपवसनादीनां च लोपो वक्तव्यः" इत्यस्ति। अस्यायमर्थः—'पीवस्-पयस् इत्यादीनां सकारस्य उपवसने परे लोपः स्यादिति। ततश्च 'पीव उपवसनानाम्' इत्यादीनां स्थाने 'पीवोपवसनानाम्' इत्यादयः प्रयोगाः साधव इत्यन्वाख्यातं भवति।

५. अष्टाध्याय्याम्—६।४।१४१।

६. "त्मन्या समञ्जन्" इति मा. वा. शु. य. वे. मन्त्रसंहितायाम्—२०।४५। अत्र सप्तम्येकवचनस्य यादेशो ज्ञेयः।

७. "मन्त्रेष्वाङ्यादेरात्मनः" (६।४।१४१) इति सूत्रस्य व्याख्याने।

वार्त्तिकमपि भट्टोजिदीक्षितेन सिद्धान्तकौमुद्यां न समावेशितम्। अत एतेनाऽपि वैदिकप्रयोगज्ञानविषये सिद्धान्तकौमुद्या न्यूनता स्फुटं परिज्ञायते।

"अतो भिस ऐस्" इति सूत्रादनन्तरं "बहुलं छन्दसि"[१] इति सूत्रमष्टाध्याय्यां पठ्यते। अस्य सूत्रस्य व्याख्यार्थं काशिकायां "छन्दसि विषये बहुलमैसादेशो भवति, अत इत्युक्तमनतोऽपि भवति नद्यैरिति, अतो न भवति देवेभिः सर्वेभिः" इत्युल्लिखितं वर्तते; किन्तु सिद्धान्तकौमुद्यामस्मिन् सूत्रे "अग्निर्देवेभिः" इत्येवोदाहरणं प्रदर्शितमस्ति। अत इदमुदाहरणप्रदर्शनमपूर्णमेव। भट्टोजिदीक्षितेन—

"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति[२]"॥

इत्युक्तबाहुलकस्वरूपदृष्ट्याऽपि सूत्रस्य व्याख्यानमुदाहरणस्य प्रदर्शनं च न कृतमित्यत्राऽवधेयम्।

कुत्रचिद् वार्त्तिकानां त्यागात् कुत्रचिच्च विषयोपस्थापन-व्याख्यान-स्पष्टीकरणानामभावात् सिद्धान्तकौमुद्या बहुषु स्थलेषु वैदिकप्रयोगव्याख्याने न्यूनता अस्पष्टताश्च दृश्यन्ते। "ईष्ट्वोनमिति च"[३] इति सूत्रस्य व्याख्याने काशिकावृत्त्योल्लिखितं "पोत्वीनमित्यपीष्यते" इति व्याख्यानम्, "छन्दसोरः"[४] इति सूत्रस्य व्याख्याने महाभाष्येण काशिकया च "त्रिवतीर्याज्यानुवाक्याः, हरिवो मेदिनं त्वा, अधिपतिवतीर्जुहोति, चरुरग्निवानिव" इत्येतेषामुदाहरणानां प्रदर्शनानन्तरं "छन्दसि सर्वे विधयो विकल्प्यन्त इतीह न भवति, सप्तर्षिमन्तम्, ऋषिमान्, ऋतीमान् ...."इत्याद्युक्त्वा कृतं सूत्रातिव्याप्तिनिराकरणम्, "अम्नरूधरवरित्युभयथा छन्दसि"[५] इति सूत्रस्य व्याख्याने महाभाष्येण काशिकया च सङ्गृहीतं "छन्दसि भाषायां च प्रचेतसो राजन्युपसङ्ख्यानम्" इति वार्त्तिकम्, "ये यज्ञकर्मणि"[६] इति सूत्रस्य व्याख्यानप्रसङ्गे 'ये यजामहे' इत्यत्रैव 'ये' इत्यस्य प्लुतत्वं न तु "ये देवासो दिव्येकादश स्थ"[७] इत्यादिष्विति कथयित्वा सूत्रातिव्याप्तिनिरासाय महाभाष्येण कृतं "सिद्धं तु ये यजामह इति ब्रूह्यादिषूपसङ्ख्यानम्" इति व्याख्यानम्, काशिकया च "ये यजामह इत्यत्रैव प्लुत इष्यते, इह हि न भवति, ये देवासो दिव्येकादश स्थ" इत्यनेन प्रकारेण कृतं सूत्रव्याख्यानं च सिद्धान्तकौमुदीकारेण परित्यक्तं दृश्यते।

---

१. अष्टा० ७।१।९-१०।
२ एषा कारिका मध्यसिद्धान्तकौमुद्याः "कृत्यल्युटो बहुलम्" इति सूत्रादनन्तरमुद्धृताऽस्ति।
३. अष्टाध्याय्याम्—७।१।४८; ४. तत्रैव—८।२।१५।
५. तत्रैव—८।२।७०; ६. तत्रैव—८।२।८८।
७. मा. वा. शु. य. वे. संहितायाम्—७।१९;

"समाहारः स्वरितः" इति सूत्रात् पश्चादागतस्य "तस्यादित उदात्तमर्धह्रस्वम्"[1] इति सूत्रस्य व्याख्यानं काशिकाकारेण "उदात्तानुदात्तसमाहारः स्वरित इत्युक्तम्, तत्र न ज्ञायते कस्मिन्नंश उदात्तः, कस्मिन्ननुदात्तः, कियान् वा उदात्तः, कियान् वाऽनुदात्त इति, तदुभयमनेनाख्यायते, तस्य स्वरितस्याऽऽदावर्धह्रस्वमुदात्तम्, परिशिष्टमनुदात्तम्, अर्धह्रस्वमिति चार्धमात्रोपलक्ष्यते, ह्रस्वग्रहणमतन्त्रम्, सर्वेषामेव ह्रस्वदीर्घप्लुतानामेष स्वरविभागः, शिक्यमित्यत्रार्धमात्राऽऽदित उदात्ता, अपरार्धमात्राऽनुदात्ता, एकश्रुतिर्वा, कन्या इत्यत्रार्धमात्राऽऽदित उदात्ता, अध्यर्धमात्राऽनुदात्ता, माणवका३ माणवकेत्यत्रार्धमात्राऽऽदित उदात्ता, अर्धतृतीयमात्राऽनुदात्ता"[2] इत्येवं कृतम्। एतदनुसारेण ह्रस्वस्य दीर्घस्य प्लुतस्य च स्वरितस्याऽऽदावर्धमात्रमुदात्तम्, ह्रस्वस्याऽवशिष्टमन्त्यमर्धमात्रमनुदात्तम्, दीर्घस्याऽवशिष्टमन्त्यं सार्धैकमात्रमनुदात्तम्, प्लुतस्याऽवशिष्टः सार्धद्विमात्रपरिमितो भागश्चाऽनुदात्त इति स्वरितपूर्वोत्तरभागव्यवस्था स्फुटमवगम्यते। एषा व्यवस्था सूत्रस्थस्य 'अर्धह्रस्वम्' इति पदस्य व्याकरणमहाभाष्येण "अर्धह्रस्वमात्रम्" इत्युक्त्वा कृतस्य व्याख्यानस्याऽनुरूपा वर्तते; किन्तु सिद्धान्तकौमुदीकारेण उपर्युक्तस्य सूत्रस्य व्याख्यानं "ह्रस्वग्रहणमतन्त्रम्, स्वरितस्यादावर्धमुदात्तं बोध्यम्, उत्तरार्धं परिशेषादनुदात्तम्"[3] इत्येवं कृतम्। एतदनुसारेण तु ह्रस्वस्य दीर्घस्य प्लुतस्य चेति त्रिविधस्यैव स्वरितस्याऽऽद्योऽर्धो भाग उदात्तोऽन्तिमोऽर्धो भागश्चाऽनुदात्त इति स्वीकृतं भवतीति व्याकरणमहाभाष्य-काशिकावृत्त्यादिविरुद्धा स्वरितपूर्वोत्तरभागव्यवस्था सिद्धान्तकौमुदीकारेणाऽऽश्रिता दृश्यते। सा च व्यवस्था न वेदलोकसामान्या, न चाधिकतरवेदशाखावस्तुस्थित्यनुकूलेत्यनादरणीयैव। अत एव बृहच्छब्दरत्न-लघुशब्दरत्न-शब्देन्दुशेखर-व्याकरणसिद्धान्तसुधानिधि-स्वरचन्द्रिकातट्टीकाकारादिभिश्च भट्टोजिदीक्षितव्याख्यानस्याऽनौचित्यं सम्यक् प्रतिपादितमवगम्यते[4]। "उच्चैरुदात्तः"[5] इति सूत्रस्य व्याख्याऽपि भट्टोजिदीक्षितेन पाणिनीयव्याकरणमहाभाष्यस्य प्रतिकूलतया कृतेति ज्ञायते[6]।

सुब्रह्मण्याख्यनिगदे स्वराणां व्यवस्थाया अन्वाख्यानार्थं "न सुब्रह्मण्यायां स्वरितस्य तूदात्तः" इति सूत्रस्य व्याख्याने पाणिनीयव्याकरणभाष्ये सङ्गृहीतानां "सुब्रह्मण्यायामोकार उदात्तः, आकार आख्याते परादिश्च, वाक्यादौ च द्वे द्वे, मघवन्-

---

१. अष्टाध्याय्याम्—१।२।३१-३२; २. ६।२।३२ तमसूत्रवृत्तौ; ३. सञ्ज्ञाप्रकरणेऽष्टमे सूत्रे।

४. अस्य विषयस्य विस्तृतं व्याख्यानं समालोचनं च कौण्डिन्न्यायनशिक्षायास्तृतीयेऽध्याये स्वरितपूर्वोत्तरभागव्यवस्थाप्रकरणे ३२६--३३१ तमेषु पृष्ठेषु कृतं दृश्यते।

५. अष्टाध्याय्याम्—१।२।२९।

६. अस्य विषयस्य विस्तृतं विवेचनं कौण्डिन्न्यायनशिक्षायाः ३१७--३२४ तमेषु पृष्ठेषु कृतं दृश्यते।

वर्जम्, सुत्यापराणामन्तः, असावित्यन्तः, अमुष्येत्यन्तः, स्यान्तस्योपोत्तमं च, वा नामधेयस्य"[१] इति नवानां वार्त्तिकानां मध्य आद्यानां पञ्चानां त्यागोऽन्त्यानां चतुर्णां ग्रहणं च सिद्धान्तकौमुदीकारेण कृतं दृश्यते[२]। अतः सिद्धान्तकौमुद्या व्याख्याता सुब्रह्मण्याह्वानवाक्यस्वरव्यवस्थाऽपूर्णेवेति ज्ञायते।

यमवर्णस्य परिभाषायां भट्टोजिदीक्षितेन "वर्गेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः, पलिक्क्नीः, चख्ख्नतुः, अग्ग्निः, घ्घ्नन्तीत्यत्र क्रमेण कखगघेभ्यः परे तत्सदृशा एव यमाः"[३] इत्युक्तमस्ति। अत्र दत्ते द्वे उदाहरणे अशुद्धे दृश्येते। 'चख्ख्नतुः' इत्यत्र प्रथमस्य खकारस्य चर्त्वे 'चक्ख्नतुः' इति भवति। 'घ्घ्नन्ति' इत्यत्र तु द्वित्वनिमित्तमेव नास्ति। यदि पूर्वपदकल्पनेनोक्त-मुदाहरणं कथञ्चिदुपपाद्येत, तथापि जश्त्वस्याऽऽवश्यकत्वाद् 'निग्घ्नन्ति' इत्येवंविधमेव भवितुमर्हति। सिद्धान्तकौमुद्यां स्थितयोरेतयोर्यमोदाहरणयोरशुद्धिस्तद्व्याख्यातृभिः कैरपि नोल्लिखिता न वा संशोधितेति च सिद्धान्तकौमुदीकारस्य तदनुयायिनां च वैदिकशिक्षाव्याकरणादिविषयेष्ववधानस्य न्यूनतैव प्रकटीभवति।

यद्यपि पाणिनीयव्याकरणस्याऽपि सूक्ष्मान्वेषणे कृते सन्धिविषये वैदिकोदाहरणा-न्वाख्याने च काश्चन न्यूनता अस्पष्टताश्च तत्रापि प्राप्यन्त एव, तथापि सिद्धान्त-कौमुद्यामिव न तत्र स्थूलास्त्रुटयो नाऽपि वैदिकोदाहरणाल्पता विद्यत इति वक्तुं शक्यते। भट्टोजिदीक्षितसमयपर्यन्तं पाणिनि-कात्यायन-पतञ्जलीनां व्याकरणं बहुभि-र्ग्रन्थकारैः परीक्षितं समालोचितं व्याख्यातं पूरितं च, तथापि तेषां त्रुटिषु वा न्यून-तासु वा संशोधनं वा पूरणं वाऽकृत्वा पूर्वमेवाऽन्यैः सम्यग् व्याख्यातेऽप्यंशे न्यूनतां त्रुटिं च कुर्वाणस्य सिद्धान्तकौमुदीकारस्य वेदवेदाङ्गादिशास्त्रानुशीलनविशेषोपकारकत्वं तज्ज्ञैः सम्यक् परिचिन्त्य यथार्हं व्यवहर्तव्यमिति शम्।

## आधारग्रन्थाः

१. अष्टाध्यायी पाणिनिविरचिता।
२. वार्त्तिकानि कात्यायनरचितानि।
३. पाणिनीयव्याकरणभाष्यं पतञ्जलिकृतम्।
४. वैयाकरणसिद्धान्तकौमुदी भट्टोजिदीक्षितरचिता।

---

१. पाणिनीयव्याकरणमहाभाष्ये—१।२।३७, १-९ वार्त्तिकानि।
२. स्वरप्रकरणे ३६६६ तमसूत्रव्याख्याने।
३. सिद्धान्तकौमुद्याः संज्ञाप्रकरणे बाह्यप्रयत्ननिरूपणे।

## सन्दर्भग्रन्थाः

१. माद्ध्यन्दिनीयवाजसनेयिशुक्लयजुर्वेदसंहिता ।

२. मा. वा. शु. य. वे. शतपथब्राह्मणम् ।

३. तैत्तिरीयसंहिता ।

४. शुक्लयजुर्वेदप्रातिशाख्यं कात्यायनप्रणीतम् ।

५. कौण्डिन्न्यायनशिक्षा, आचार्यशिवराजकौण्डिन्न्यायनविरचिता, सम्पूर्णानन्द-संस्कृतविश्वविद्यालयेन वाचस्पतिः ( डी. लिट्. ) इत्युपाधये स्वीकृता महाशिक्षा ( वि. सं. २०४९, काष्ठमण्डपनगरम्, नेपालदेशः ) ।

६. पाणिनीयशिक्षा पाणिनीयमतानुसारिणी ।

७. चरणव्यूहसूत्रं शौनकविरचितम् ।

८. निरुक्तम् यास्कप्रणीतम् ।

९. मनुस्मृतिः भृगुप्रोक्ता ।

१०. महाभारतम् व्यासप्रणीतम् ।

११. संस्कृत व्याकरणशास्त्र का इतिहास, पहला भाग, युधिष्ठिर मीमांसक ।

१२. वैदिक धर्म मूल रूपमा, आचार्य शिवराज कौण्डिन्न्यायन ( वि. सं. २०४५, काठमाण्डु ) ।

१३. मध्यसिद्धान्तकौमुदी वरदराजप्रणीता ।



# जैमिनीयधर्ममीमांसायां मन्त्रस्वरविचारः

**श्रीप्रमोदवर्धनः कौण्डिन्न्यायनः**

च. २/४१९, स्वाध्यायशाला, सरस्वतीमार्गः,

लाजिम्पाट्, काष्ठमण्डपनगरम्

नेपालदेशः

❀ ❀ ❀

वेदानां विविधासु शाखासु विविधाः स्वरव्यवस्था दृश्यन्ते। तथा हि कासुचन शाखासु मन्त्रसंहिता त्रैस्वर्येणाऽधीयते ब्राह्मणञ्चापि त्रैस्वर्येणाधीयते, कासुचन शाखासु च तदुभयं चातु स्वर्येणाधीयते, अन्यासु शाखासु च मन्त्रसंहिता त्रैस्वर्येणाधीयते, ब्राह्मणग्रन्थस्तु तानेन (एकश्रुत्या) अधीयते। पुनरन्यासु शाखासु च मन्त्रसंहिता त्रैस्वर्येणाधीयते ब्राह्मणञ्च भाषिकस्वरेणाधीयते। कः खलु भाषिकस्वर इत्येतस्मिन् विषये धर्ममीमांसासूत्रस्य भाष्यकारेण शबरस्वामिना वक्ष्यमाणः श्लोक उल्लिखितः प्राप्यते—

"छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते[१]"॥ इति।

अस्मिन् श्लोक उक्तस्योच्चनोचस्वरस्य स्वरूपं किमिति तु भाष्यादिषु कुत्रापि स्पष्टीकृतं नास्ति। तत्स्वरूप कौण्डिन्न्यायनशिक्षायामित्थं प्रतिपादितम्—

"उदात्तस्यानुदात्तत्वं तथा स्वारानुदात्तयोः।
उदात्तत्वं चैवमादिश् श्रुतश्शतपथादिषु॥
शब्दे स्वरविपर्यासो भाषिकस्स्वर उच्यते।
उदात्तादिस्वरूपे तु तत्र भेदो न कश्चन[२]"॥ इति।

उपर्युक्तासु विविधासु वेदशाखासु यस्यां शाखायां मन्त्रसंहिता-ब्राह्मणग्रन्थयोः स्वरे भेदो नाऽस्ति, तस्यां शाखायां मन्त्रस्वरविषय एतादृशः सन्देहो नोत्पद्यते; किन्तु यस्यां शाखायां मन्त्रसंहिता एकविधेन स्वरेणाधीयते, ब्राह्मणग्रन्थश्चान्यविधेन, तत्रैता-

---

१. शाबरभाष्ये—१२।३।२० ( आनन्दाश्रम., पृ. २२६२ )।

२ कौण्डिन्न्यायनशिक्षायाम्—३।४०–४१ (काष्ठमण्डप., पृ. ३६८-३६९)।

दृशः सन्देह उत्पन्नो भवितुं शक्नोति यन्मन्त्रसंहितायां त्रैस्वर्येणाधीतानां ब्राह्मणे च भाषिकस्वरेणोपदिष्टानां मन्त्राणां ब्रह्मयज्ञे तु त्रैस्वर्यणैवाध्ययनं कर्तव्यम्; परन्तु द्रव्यत्यागसहिते यज्ञे केन स्वरेण प्रयोगः कर्तव्यः ? इति । तत्र विधायकब्राह्मणोपदिष्टेन भाषिकस्वरेण प्रयोग इति प्राप्ते ब्राह्मणग्रन्थस्य स्वरविधाने तात्पर्यस्याभावात् प्रवचनेनैव (मन्त्रसंहितोपदिष्टेनैव) स्वरेण प्रयोगः कर्तव्य इति सिद्धान्तो जैमिनिना धर्ममीमांसासूत्रस्य द्वादशेऽध्याये तृतीयपादस्याष्टमाधिकरणे व्याख्यातः । तथा हि—

"भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधः स्यात् ।
मन्त्रोपदेशो वा भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥
विकारः कारणाग्रहणे"[1] ॥ इति ।

मन्त्रसमाम्नायेऽन्येन त्रैस्वर्यादिरूपेण स्वरेणोपदिष्टानां मन्त्राणां ब्राह्मणेन भाषास्वररूपस्वरान्तरोपदेशाद् यथा मन्त्रसंहितायां गिरापदस्य पाठेऽपि 'न गिरागिरेति ब्रूयाद्…ऐरं कृत्वोद्गेयम्' इति ब्राह्मणोपदेशाद् गिरापदस्य प्रतिषेधस्तद्वन् मन्त्रसमाम्नायस्वरस्य प्रतिषेधः स्यादिति प्रथमसूत्रार्थः । ब्राह्मणस्यायमुपदेशो मन्त्रस्यास्ति न भाषिकस्वरस्य । भाषिकस्वरो ब्राह्मणे प्रवृत्तः । तन्मध्ये यदि मन्त्रः प्रावचनस्वरेण पठ्यते तदा भाषिकस्वरसन्तानो विच्छिद्येत, तत्परिहाराय तत्र मन्त्रस्यापि भाषिकस्वरेण पाठः । तस्मान्न भाषिकस्वरोपदेश इति द्वितीयसूत्रार्थः । 'ऐरं कृत्वोद्गेयम्' इत्यत्र तु इरापदस्यानुपदेशे कारणाभावात् तेन गिरापदस्य विकारो युक्त एवेति तृतीयसूत्रार्थः ।

यो मन्त्रस्तु मन्त्रसमाम्नाये न पठितो ब्राह्मणे च भाषिकस्वरेणोपदिष्टः, तस्य प्रयोगो द्रव्ययज्ञे केन स्वरेण कर्तव्य इति संशये तस्यापि भाषिकस्वरोपदेशाभावात् त्रैस्वर्येण (चातुःस्वर्येण वा) एव प्रयोगः कर्तव्य इति प्राप्ते ये मन्त्रा भाषिकस्वर एवोत्पन्नास्तेषामन्यथाविधस्वरत्वे प्रमाणाभावाद् भाषिकस्वरेणैव प्रयोगः कर्तव्य इति सिद्धान्तश्च तत्रैव नवमेऽधिकरणे प्रतिपादितः । तथा हि—

"तन्न्यायत्वाददृष्टोऽप्येवम् ।
तदुत्पत्तेर्वा प्रवचनलक्षणत्वात्"[2] । इति ।

मन्त्रसंहितायामदृष्टो ब्राह्मणे च भाषिकस्वरेणोपदिष्टोऽपि मन्त्रो 'मन्त्रोपदेशोऽयं न स्वरोपदेशः' इति पूर्वोक्तन्यायेन प्रावचनेनैव स्वरेण प्रयोक्तव्य इति पूर्वसूत्रार्थः । मन्त्रसमाम्नायेऽदृष्टा ब्राह्मण एव दृष्टा मन्त्रास्तु तेषां ब्राह्मण एवोत्पत्तेः प्रवचनस्वरूपाधीनस्वरूपत्वाच्च, अपूर्वे प्रवचने येन स्वरेण युता उत्पन्नास्तेनैव स्वरेण युताः प्रयोक्तव्या इत्युत्तरसूत्रार्थः ।

---

१. जै. ध. मी. सू. १२।३।२०–२२ ; २. तत्रैव—१२।३।२३–२४ ।

तत्रत्ये शाबरभाष्ये चेत्थमुक्तम्—"यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टस्तस्य तथैव प्रयोगः" इति, "यश्च तत्र न दृष्टो ब्राह्मणेन च भाषिकेणोपदिष्टः। तत्र का प्रतिपत्तिः।......ब्राह्मणोत्पत्तेर्मन्त्रस्य भाषिकेण प्रयोगः स्यात्, प्रवचनलक्षणत्वात्" इति च। इत्थं भाषिकस्वरवद्ब्राह्मणपाठवतीनां शाखानां मन्त्रसंहितोत्पन्नानां ब्राह्मणोत्पन्नानां च मन्त्राणां द्रव्ययज्ञे केन स्वरेण प्रयोगः कर्तव्य इत्येतस्मिन् विषये शबरस्वामिना पूर्वोक्तः सिद्धान्तो व्याख्यातो वर्तते।

परन्त्वयं भाष्यग्रन्थो नवमाध्यायस्य द्वितीयपादस्याष्टमाधिकरणस्य तृतीयवर्णके स्थितेन भाष्यग्रन्थेन विरुद्धः प्रतीयते। द्वादशेऽध्याये—"यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टस्तस्य तथैव प्रयोगः"[1] इति वदिष्यन् भाष्यकारो नवमेऽध्याये "इह केचित् त्रैस्वर्येणाधीयन्ते केचिच्चातुस्स्वर्येण।... तत्र सन्देहः—किं समुच्चयस्त्रैस्वर्यादीनामुत विकल्प इति। किं प्राप्तम्? सर्वाङ्गोपसंहारित्वात् प्रयोगवचनस्य समुच्चय इति। एवं प्राप्ते ब्रूमः—अर्थैकत्वाद् विकल्पः स्यात्। एकोऽर्थः सर्वेषां त्रैस्वर्यादीनामध्ययननिर्वृत्तिस्तस्माद् विकल्पः। वचनाद् विनियोगः स्यात्। वचनमिदं भवति स्मृत्यनुमितं 'तानो यज्ञकर्मणि' इति। तस्मात् तानेन प्रयोगः कर्तव्यः। अथ त्रैस्वर्यादीनां किमर्थं समाम्नानमिति? उच्यते—अर्थावबोधार्थं भविष्यति"[2] इत्यवोचदिति विवेचनीयो भवत्ययं विषयः। यतो हि सामान्यतयावलोकने द्वादशाध्यायस्थयोरुपर्युक्तयोरधिकरणयोर्मन्त्रसमाम्नायोत्पन्नानां मन्त्राणां त्रैस्वर्येण (चातुःस्वर्येण वा) प्रयोगः कर्तव्यः, ब्राह्मणोत्पन्नानां तु ब्राह्मणस्वरेण (भाषिकेण) प्रयोगः कर्तव्य इति व्यवस्थापितत्वात् तद्व्यवस्थाविपरीततया यज्ञकर्मणि मन्त्रस्य तानेन प्रयोग इत्यर्थस्य प्रतिपादकं नवमाध्यायद्वितीयपादाष्टमाधिकरणतृतीयवर्णकं निर्विषयं दृश्यते। एतस्य वर्णकस्य स्वीकारे च सूत्राक्षरानुगुणे द्वादशाध्यायस्य उपर्युक्तेऽधिकरणे निर्विषये भवतः। एतस्मादेव कारणात् केचन विद्वांसो भाष्यकारोत्प्रेक्षितं तद् वर्णकं हेयं मन्यन्त इत्यत्रैव पश्चात् प्रतिपादयिष्यते।

द्वादशेऽध्याये "ये तावन् मन्त्रा लिङ्गेन विनियुज्यन्ते ते यादृशा एव निर्ज्ञातास्तादृशा एव प्रयोक्तव्याः। तत्र ब्राह्मणस्य व्यापार एव नास्ति"[3] इत्युक्त्वा भाष्योक्तार्थं समर्थयमाना वार्त्तिककारा अपि तद्विरुद्धत्वेन प्रतीयमानं नवमाध्यायस्थमुपर्युक्तं भाष्यमपि स्पष्टीकरणं विनैव मौनेन समर्थयन्त इति महदाश्चर्यं भवति।

---

१. शाबरभाष्ये—१२।३।२३ (पृ. २२६३)।

२. तत्रैव—९।२।३०-३१ (पृ. १७२४)।

३. टुप्टीकायाम्—१२।३।२३ (आनन्दाश्रम., पृ. १२६२-६३)।

मीमांसानुक्रमणिकाकारेण मण्डनमिश्रेणापि "कर्मस्वेकश्रुतिर्मन्त्रे" इति "त्रैस्वर्याद्यविकल्पः स्यात्" इति वाप्युक्त्वा[1] पुनः "मन्त्रोच्चारे भाषिको न स्वरः स्यात्"[2], "स्यादेवायं ब्राह्मणोत्पन्नमन्त्रे"[3] इति चोक्तमेव दृश्यते।

टुप्टीकाव्याख्यात्रा तन्त्ररत्नकारेण पार्थसारथिमिश्रेण नवमेऽध्याये द्वितीयपादस्याष्टमाधिकरणस्य तृतीये वर्णके "तस्माच्छ्रुतिबलेन तानो यज्ञकर्मणि इति स्मृतिं बाधित्वाऽध्ययनसिद्धयोरेव त्रैस्वर्यचातुःस्वर्ययोर्विकल्पेनोपादानमिति पूर्वपक्षः। सिद्धान्तस्तु तानो यज्ञकर्मणीति स्मृत्यनुमिताद् वचनात्। न च स्मृतेः श्रुतिविरोधः। न ह्याहत्य कर्मणि त्रैस्वर्यादेर्विनियोगोऽस्ति। न्यायमात्रं तु तत्। तच्च स्मृतेर्दुर्बलम्। तस्माज्जपन्यूङ्ख-सामवर्जं तानेन प्रयोगः"[4] इत्युक्तम्। द्वादशेऽध्याये तृतीयपादस्याष्टमनवमाधिकरणयोस्तु विशेषेण किमपि नोक्तमिति विरोधपरिहारस्तन्त्ररत्नकारेणापि न प्रदर्शितः।

पार्थसारथिनैव शास्त्रदीपिकायां नवमेऽध्याय इत्थमुक्तम्—"सामप्रसङ्गान् मन्त्राणां स्वरश्चिन्त्यते। मन्त्रा हि क्वचित् त्रैस्वर्येणाऽधीताः, क्वचिच्चातुःस्वर्येण। तत्र कर्मसु किं त्रैस्वर्यचातुःस्वर्ययोः समुच्चयो विकल्पो वा? अथोभयहानेनैकश्रुत्या प्रयोगः? इति संशयः। तत्र समुच्चय इत्युपक्रममात्रं गीत्युपायवन्निरस्तत्वात् तद्वदेव तु विकल्प इति पूर्वपक्षः। 'तानो यज्ञकर्मणि' इति स्मृत्यनुमिताद् वचनादेकश्रुत्यम्। अर्थावगमार्थं तु स्वराध्ययनम्, स्वरविशेषाधीनत्वादर्थविशेषाणाम्, 'बहुव्रीहौ प्रकृत्या पूर्वपदम्'[5] इत्यादिवचनात्। तस्मात् तानेन प्रयोगः"[6] इति।

तत्रैव पुनर्द्वादशाध्याये तु "ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाताः, ब्राह्मणे च मन्त्राः स्वरान्तरेणोपात्ताः, ते मन्त्राः किं समाम्नायसिद्धेन स्वरेण प्रयोक्तव्याः? उत ब्राह्मणस्वरेणेति संशये वाचनिकत्वाद् ब्राह्मणस्वरस्य तेनैव प्रयोगः। नैवम्, ये तावल्लिङ्गविनियुक्ता मन्त्रास्तेषां ब्राह्मणस्य गुणार्थवादपरिसङ्ख्यार्थत्वान्न मन्त्रस्वरूपे तत्स्वरे वा व्यापारः। येऽपि वचनविनियोज्यास्तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वरविनियोगे व्याप्रियते। स्वरान्तरोपादानं ब्राह्मणे प्रवृत्तस्य स्वरस्याविच्छेदार्थम्। तस्मादात्मीयेनैव स्वरेण कर्मण्यपि प्रयोगः"[7] इति।

"ये पुनर्मन्त्रसमाम्नाये नाधीता ब्राह्मणोत्पन्ना मन्त्रास्तेष्वपि ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वान्न स्वरपरत्वम्। अतो न ब्राह्मणस्वरेण प्रयोक्तव्याः। नैवम्,

---

१. मीमांसानुक्रमणिकायाम्—९।२।१५ (वाराणसी, पृ० ३३३)।
२. तत्रैव—१२।३।१८ (पृ० ४९४); ३. तत्रैव—१२।३।१९ (पृ० ४९५)।
४. तन्त्ररत्ने—९।२।३१ (सम्पूर्णानन्द., च० भा०, पृ० ८७१)।
५. अष्टाध्याय्याम्—६।२।१; ६. शास्त्रदीपिकायाम्—९।२।८(३)।
७. तत्रैव—१२।३।१८।

असत्यपि स्वरविनियोगे मन्त्रस्य विनियुक्तस्य यथाविज्ञातरूपस्य प्रयोगात् तस्य च ब्राह्मणस्वरातिरेकेण स्वरान्तरानवगमात् तेनैव स्वरेण प्रयोगः"[१] इत्युक्तम्।

इत्थं भाष्यकारवार्त्तिककारोक्तार्थानुभाषणकर्त्रा पार्थसारथिना स्वेनाऽपि वदतो व्याघात एव कृतः, न तु भाष्ये प्रतीयमानस्य विरोधस्य परिहारेण विषयप्रतिपादनं कृतम्। स्वव्याख्यां भाष्यकाराशयानुकूलां प्रभाकरव्याख्यां च भाष्यकाराशयप्रतिकूलां दर्शयितुं बहुत्र प्रयतमानः खलु न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिकायाः शास्त्रदीपिकायाः कर्ता पार्थसारथिमिश्रो भाष्ये स्थितामस्पष्टतामपि यथावदनुवदति।

प्रभाकारस्तत्सद्वैद्यनाथभट्टोऽपि सोमनाथ-खण्डदेव-शम्भुभट्टैर्विशेषेण कृतविचारेऽप्यस्मिन् विषये ग्रन्थकारतात्पर्यं स्वकृतं विवेचनं वाऽप्यनुपन्यस्यन् शास्त्रदीपिकाग्रन्थाक्षरमात्रं व्याख्याति। स्वकृते स्वतन्त्रे न्यायबिन्दुग्रन्थे च शास्त्रदीपिकोक्तार्थस्य संक्षेपीकरणेनैवात्मानं कृतकृत्यं मन्यते[२]।

पार्थसारथिवदेव जैमिनीयन्यायमालाविस्तरकारो माधवाचार्योऽपि भाष्योक्तार्थानुवदनमेव करोति। नवमेऽध्याये द्वितीयपादस्याष्टमेऽधिकरणे तृतीये वर्णके तु "यज्ञकर्मण्यजपन्यूङ्खसामसु"[३] इति पाणिनीयं सूत्रमुद्धृत्य "जपादिषु तु यथाध्ययनं स्वरः"[४] इत्येव स्पष्टीकरणं करोति।

इत्थं शबरस्वामिकृते जैमिनीयधर्ममीमांसासूत्रभाष्ये प्रतीयमानस्य विरोधस्य कुमारिलभट्ट-मण्डनमिश्र-पार्थसारथिमिश्र-माधवाचार्यादिभिः प्रायो यथावदेवानुवादः कृतो दृश्यते। तस्मिन् विषये विरोधपरिहाराय स्पष्टीकरणं तैर्न कृतम्।

सर्वतोमुखयाजिना सोमनाथेन शास्त्रदीपिकाव्याख्यायामेतस्य विषयस्य स्पष्टीकरणाय प्रयासः कृतो दृश्यते। तथा हि तत्रोक्तम्—"अयं चैकश्रुतिर्जपमन्त्रादिव्यतिरिक्तविषयः, 'यज्ञकर्मण्यजपन्यूङ्खसामसु' इति पाणिनिस्मृतेः। जपादौ तु त्रैस्वर्येण चातुःस्वर्येण वा प्रयोगः। एवञ्च जपादिव्यतिरिक्तेषु करणमन्त्रादिरूपेषु 'अग्नये जुष्टं निर्वपामि' इत्याध्वर्यवयाजमानेष्वप्याधुनिकानां याज्ञिकानां चातुस्स्वर्येण प्रयोगे मूलं मृग्यम्। अस्मिन् वर्णके सूत्र ऋक्सामशब्दश्चातुःस्वर्यादौ कथञ्चिन् नेयः"[५] इति, "अयमात्मीयः स्वरः (मन्त्रसमाम्नायस्वरः) येषां मन्त्राणां यज्ञकर्मण्यैकश्रुत्यविधानं नास्ति तद्विषयः"[६] इति च। इत्थं सोमनाथेन यत्र नवमाध्यायस्य द्वितीयपादस्याष्ट-

१. शास्त्रदीपिकायाम्—१२।३।९; २. न्यायबिन्दौ—९।२।८, १२।३।८-९।
३. अष्टाध्याय्याम्—१।२।१६।
४. जैमिनीयन्यायमालाविस्तरे—९।२।८ (३) (जीवानन्द०, पृ० ४७८-४७९)।
५. मयूखमालिकायाम्—९।२।८ (३) (मुम्बई०, पृ० ६०९)।
६. तत्रैव—१२।३।८ (पृ० ८८३)।

माधिकरणस्य शबरस्वाम्युपात्तं तृतीयं वर्णकं प्रवृत्तं न भवति, तत्रैव द्वादशाध्यायस्य तृतीयपादस्याष्टमनवमेऽधिकरणे प्रवृत्ते भवत इति व्याख्यां कृत्वा प्रतीयमानस्य विरोधस्य परिहारः प्रदर्शितः ।

सोमनाथस्यैवानुसरणं कृत्वा खण्डदेवेनास्मिन् विषये स्वमतमुपन्यस्तं दृश्यते । तथा हि—"अत्र च तानस्यार्थविशेषोपयोगाभावेनादृष्टार्थत्वेऽप्येकमन्त्रवृत्तित्वादेव त्रैस्वर्यादिबाधकता । इतरथा गुणानुवृत्त्या मन्त्रावृत्त्यापत्तेः । अजपेत्यादिना पर्युदासाज्ज-पादौ त्रैस्वर्यादिप्रतिप्रसवः"[१] । इति, "कर्मकाले प्रयोक्तव्यानां तानस्वरेण प्रयोग इत्युक्तम् । जपादिषु त्वाम्नातस्वर एव । तत्र ये मन्त्रा मन्त्रसमाम्नाये स्वरान्तर-समाम्नाताः, ब्राह्मणे च स्वरान्तरेण प्राप्ताः । तत्र कतरस्स्वरो जपादावुपयोक्तव्य इति चिन्तायाम् ···"[२] इति च । एतद्व्यवस्थानुसारेणैव शम्भुभट्टेन प्रभावल्यां व्याख्या कृता दृश्यते । खण्डदेवेन जपादिमन्त्राणामेव भाषास्वराधिकरणे विचारः कृतोऽस्ति न करणादिमन्त्राणामित्यस्य स्वकीयव्याख्यानस्य पार्थसारथ्युक्तिविपरीततामाशङ्क्य तत्परिहारायेत्थमुक्तं दृश्यते—"यत् तु पार्थसारथिना लिङ्गविनियुक्तमन्त्रविषये ब्राह्मणे गुणार्थवाद-परिसंख्याद्यर्थत्वेन पुनश्श्रवणेऽपि मन्त्रविनियोगफलकत्वस्यैवाऽभावे सुतरां स्वरविनियोगस्याप्रसक्तेर्न ब्राह्मणस्वरप्रसक्तिरिति दूषणान्तरमुक्तं तल्लिङ्गविनियुक्त-मन्त्राणां जपतिचोदनाचोदितत्वाभावे जपत्वे प्रमाणाभावाद् यत्र जपतिचोदना-चोदितसत्त्व एव लिङ्गविनियोगस्तत्र ब्राह्मणे पुनःश्रवणसत्त्व इति व्याख्येयम्"[३] इति ।

इत्थं सोमनाथ-खण्डदेवाभ्यामेतद्विषये नवीनं व्याख्यानं कृतं प्राप्यते । ताभ्या-मेतादृशस्य व्याख्यानस्य स्वीकारे कृते भाष्ये प्रतीयमानो विरोधः परिहृतो भवतीति विचारितं स्यात्; परन्तु सम्यग् विचारण एतेन नवीनेन व्याख्यानेनाऽप्युपर्युक्तो भाष्ये प्रतीयमानो विरोधः परिहृतो न भवति ।

सोमनाथ-खण्डदेवादीनां नवमेऽध्याये द्वितीयपादस्याष्टमेऽधिकरणे शबरस्वामि-प्रोक्तेन तृतीयवर्णकेन जपादिव्यतिरिक्तमन्त्राणामेव द्रव्ययज्ञे तानस्वरेण प्रयोग इत्यर्थो वर्णित इतीयं व्याख्या तु पार्थसारथिना तन्त्ररत्ने माधवाचार्येण जैमिनीय-न्यायमालाविस्तरे चापि कृतैवेति न तत्र काचिन्नूतनता दृश्यते । द्वादशाध्यायतृतीय-पादस्थयोर्भाषास्वराधिकरणतदुत्तराधिकरणयोस्तु या व्याख्या सोमनाथ-खण्डदेवाभ्यां कृता, सा शबर-कुमारिल-मण्डन-पार्थसारथि-माधवादिभिः कृताद् व्याख्यानाद् भिन्ना वर्तते । सर्वथा नवीना चास्ति; परन्त्वियमपि व्याख्या भाष्ये प्रतीयमानस्य विरोध-स्योपशमायाऽकिञ्चित्करी भाष्योक्तिविरुद्धा चाऽस्ति । यतो हि भाष्ये "भाषिकेण स्वरेण केचिन्मन्त्रा ब्राह्मण उपदिष्टाः । मन्त्रसमाम्नाये त्रैस्वर्येण पठिताः । यथा

---

१. भाट्टदीपिकायाम्—९।२।७(३);    २. तत्रैव—१२।३।८;    ३. तत्रैव ।

इमामगृभ्णन्नित्यश्वमेधे"[१] इत्यादिना करणमन्त्र उदाहृतो न जपादिमन्त्रः। अतो जपादिमन्त्राणामेव तयोरधिकरणयोर्विचारः कृतोऽस्तीति व्याख्यानं भाष्यविरुद्धमेव भवतीति सोमनाथ-खण्डदेव-शम्भुभट्टैर्ज्ञातुं न पारितम्। नो चेत् तैर्भाष्यस्थोदाहरण-विषयेऽवश्यं किञ्चिद् वक्तव्यमासीत्। यदि तैर्भाष्योल्लिखितमुदाहरणं स्वीक्रियते, तदोक्तेऽधिकरणे करणादिसर्वविधमन्त्रस्वरविचारपर इति बलादापद्यते, यदि न स्वीक्रियते तदुदाहरणमयुक्तमस्तीति वक्तव्यम्। तदुभयं न कृतमिति तैः स्वव्याख्याया भाष्यार्थाननुगुणत्वं ज्ञातुं न पारितं पलायनवादो वाऽप्याश्रित इत्यस्माभिर्मन्तव्यमेव।

स्यादुक्तेनैव कारणेन वासुदेवदीक्षितेन सोमनाथादिकृता व्याख्या न स्वीकृता। स खलु करणादिसर्वविधानामेव मन्त्राणां मन्त्रसंहितोत्पन्नानां द्रव्ययज्ञेऽपि प्रावचनेनैव स्वरेण (त्रैस्वर्येण चातुस्स्वर्येण वा) प्रयोगः कर्तव्य इत्ययमर्थ एव भाषास्वराधिकरणेन समर्थित इति मनुते। यतो हि स "तानो यज्ञकर्मणीति स्मृतिवचनादेकश्रुत्यस्यैव कर्मसु विनियोगः।......चातुस्स्वर्याध्ययनं तु यज्ञादन्यत्र पारायणादौ चरितार्थं भविष्यति"[२] इत्यध्वरमीमांसाकुतूहलवृत्तेर्नवमाध्यायस्य द्वितीयपादस्याष्टमाधिकरणे तृतीयं वर्णकं वर्णयित्वा तद् हेयत्वेन प्रतिपादयन् वदति—"तदिदं भाष्याद्युत्प्रेक्षितं वर्णकमुपेक्ष्यम्, 'भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधस्स्यात्' इति द्वादशिकतृतीयाधिकरणविरोधात्। तत्र मन्त्रसमाम्नायपठितानां मन्त्राणां कर्मणि चातुस्स्वर्यं ब्राह्मणपठितानां भाषिकस्वर इति व्यवस्थापयिष्यमाणत्वाच्च। ऋक्सामयोरित्यस्य च चातुःस्वर्यैकश्रुत्यपरतायाः कथञ्चिदप्यसम्भवेन क्लिष्टत्वाच्च। अत्र यद् वक्तव्यं तत् तत्रैव प्रपञ्चयिष्यते"[३] इति।

श्रीमद्भिः शिवराजाचार्यकौण्डिन्न्यायनैरपि "अस्मन्मते तु नवमस्य द्वितीये पादेऽष्टमेऽधिकरणे शबरप्रदर्शितं तृतीयं वर्णकं हेयं सूत्रार्थाननुगुणत्वाद् 'यो ह्युत्सूत्रं कथयेन् नाऽदो गृह्येत' इति न्यायात्। प्रकरणासङ्गतेश्च"[४] इत्युक्त्वा भाष्यकारीयस्य वर्णकस्य हेयत्वमेव स्वीकृतं दृश्यते।

वासुदेवदीक्षितस्य द्वादशेऽध्याये यद् वक्तव्यमासीत्, तत्तु तत्कृतकुतूहलवृत्तेर्द्वादशाध्यायस्यानुपलभ्यमानत्वाज्ज्ञातुं नैव शक्यते। द्वादशाध्यायस्य वृत्ते रचनां कृत्वा ग्रन्थपूर्तिं कर्तुं प्रवृत्तः पट्टाभिरामशास्त्री तु द्वादशाध्यायतृतीयपादे 'भाषास्वरोपदेशात्' इत्यादिकसूत्रपञ्चकव्याख्याने भाष्याद्युक्तार्थानुवदनमेव करोति, न तस्य नवमाध्यायद्वितीयपादाष्टमाधिकरण-तृतीयवर्णकविरोधविषये किञ्चिद् वदति। न वा वासुदेवस्योपर्युद्धृतवक्तव्यशेषसूचनामेव स्मरति। संक्षेपरुचिस्तत्सद्वैद्यनाथभट्टस्तु

---

१. शाबरभाष्ये—१२।३।२० (पृ० २२६२); २. अध्वरमीमांसाकुतूहलवृत्तौ—९।२।३१-३२। ३. तत्रैव; ४. कौण्डिन्न्यायनशिक्षायाम्—३।७४ (पृ. ३९२)।

सोमनाथादिव्याख्यायां वासुदेवव्याख्यायाश्च विषये किमप्यनुक्त्वैव शास्त्रदीपिकां व्याख्यातीति पूर्वमेवाऽवोचाम।

जैमिनीयधर्ममीमांसासूत्रस्य वृत्तिकारो रामेश्वरसूरिरप्यस्मिन् विषये स्पष्टतया किमपि न वदति; किन्तु स सोमनाथ-खण्डदेवादिव्याख्याया अनुसरणं कर्तुं वाञ्छतीति प्रतीयते। मीमांसाकोषकारः केवलानन्दोऽपि सोमनाथ-खण्डदेवोक्तार्थमेव स्वीकरोति।

मण्डनमिश्रकृतमीमांसानुक्रमणिकाया मीमांसामण्डनाख्ये व्याख्याने गङ्गानाथ-झास्तु किमपि स्पष्टीकरणमकृत्वा पार्थसारथि-माधवाद्युक्त्यनुसरणमात्रं कुरुते।

एतावता शबरस्वामिकृते भाष्ये प्रतीयमानस्य विरोधस्य विद्यमानस्यास्पष्टत्वस्य च विषये किमप्यनुक्तवद्भिर्विरोधपरिहाराय स्पष्टीकरणाय च कुमारिल-मण्डन-पार्थसारथि-माधवादिभिः प्रयत्नो न कृत इति, सोमनाथ-खण्डदेव-शम्भुभट्टैर्द्वादशाध्यायतृतीयपादाष्टमाधिकरणनवमाधिकरणस्थभाष्यग्रन्थविरुद्धतया प्रतिपादनं कृतमिति तैः प्रयत्ने कृतेऽपि विरोधपरिहारो न जात इति, वासुदेवादिभिस्तु नवमाध्यायस्य द्वितीयपादस्याष्टमेऽधिकरणे स्थितस्य तृतीयवर्णकस्य स्फुटतया विरोधः कृत इति विरोधपरिहारस्य वार्तैव दूरे जातेति, तदनन्तरभाविभिस्तत्तद्वैद्यनाथादिभिः आधुनिकैर्गङ्गानाथझा-पट्टाभिरामशास्त्र्यादिभिश्च पुनरप्यस्पष्टतैव पुरस्कृतेति च स्पष्टं भवति।

शाबरभाष्यस्य विवेचनीययोर्भागयोः प्रभाकरमिश्रकृता बृहती व्याख्या तु नोपलभ्यते। बृहतीभावं स्फुटीकर्तुं प्रवृत्तायाः शालिकनाथकृताया ऋजुविमलायाः पञ्चिकाया अपि द्वादशाध्यायप्रथमपादप्रथमाधिकरणादुत्तरो भागो नोपलभ्यते। नवमाध्यायद्वितीयपादस्थस्येदानीमनुपलभ्यमानस्यापि बृहतीग्रन्थस्योपलभ्यमानाया-मृजुविमलायां पञ्चिकायां तु—"कः पुनर्गीत्युपायैः सह स्वराणां विशेषः? उत्तरम्—अयमस्ति विशेषः स्वराणां विनियोगशेषत्वम्। मन्त्रो विनियुज्यमानः सस्वर एव विनियुज्यते जपे न्यूङ्खे च स्वरनियमदर्शनात्। येनैव हि स्वरेण मन्त्राः पठिताः, तेनैव स्वरेण जपे न्यूङ्खे च प्रयुज्यन्ते। अन्यथा हि नियमो न स्यात्। न्यूङ्खशब्देन च निरन्तरपठिताः षडोङ्कारा उच्यन्ते। यज्ञकर्मणि जपन्यूङ्खयोरैकश्रुत्यं नास्ति, यज्ञकर्मण्यजपन्यूङ्खस्विति पर्युदासात्। केन पुनर्विशेषेण जपन्यूङ्खयोरुपादानं ये[ न ] तान्यपि मन्त्रस्वरविशेषेण पठ्यन्ते, तेषामपि तर्हि स्वरविशेषेणैव प्रयोगः स्यात्। अन्यथा स्वरानर्थक्यादिति तत्राह—येषां तु तानेनैव प्रयोगस्तेषामुदात्ता-दयोऽर्थनिश्चयायैव। 'तानो यज्ञकर्मणि' इति जपन्यूङ्खातिरेकिणां येषामैकश्रुत्येन विनियोग, तान ऐकश्रुत्यम्, तेषामुदात्तादयोऽर्थनिश्चयायैव स्वाध्यायकाले। एतच्च न पूर्वपक्षवादिनोक्तम्; किन्तु सुहृद्भावेन ग्रन्थकारेण। ननु विनियोगे सति सुतरां नात्र पूर्वपक्षाशङ्का, ऐकैकश्येन विनियोगावगमात् समुच्चयशङ्का

मन्देव। परिहरति—न चात्रा[ ना ]शङ्का ; किन्त्वाशङ्कैव। कार्येऽभिधानलक्षणे स्वराणामवश्यं व्यापारदर्शनात् । अभिधानमात्राद् वर्णविशेषेणाभिधानसिद्धेः। तेनादृष्टार्थतया समुच्चय एव युक्तः। स्वरतोऽप्यर्थनिर्णयमभियुक्ता वर्णयन्तीति राद्धान्तः। अस्यार्थः—यद्यप्यनभियुक्ता लोकाः स्वरविशेषेणार्थविशेषं नावधारयन्ति, तथापि पाणिनिप्रभृतयोऽभियुक्ताः स्वरविशेषेणार्थविशेषं वर्णयन्त्येव। अर्थविशेषे स्वरविशेषानुशासनात् 'पदेऽपदेशे', 'निवाते वातत्राणे'[1] इत्यादौ"[2] इत्युक्तम्। एतेन भाष्ये वर्णितस्य तानवर्णकस्य कापि युक्ततरा सङ्गतिः सूच्यते, तथाऽपि नवमाध्यायस्थ-द्वादशाध्यायस्थ-भाष्यग्रन्थयोः प्रतीयमानस्य विरोधस्य परिहारे त्वेतेनापि विशिष्टः प्रकाशो नैव पात्यते।

अस्माकं तु विरुद्धत्वेन प्रतीयमानावुभावपि भाष्यग्रन्थौ स्पष्टीकरणेन समर्थयितुं शक्येते इति मतिः। तथा च स्पष्टीकरणं प्रस्तूयते। सर्ववेदसाधारणस्य धर्ममीमांसासूत्रस्य भाष्य उक्तस्यार्थस्य विविधासु वेदशाखासु विद्यमानानां व्यवस्थानामनुकूलरूपेण स्पष्टीकरणं न्याय्यं भवति।

भाषिकस्वरवद् ब्राह्मणपाठास्तित्वदृष्ट्या तानप्रयोगविधिदृष्ट्या च वेदशाखानां चत्वारो वर्गा भवन्ति । तत्र कस्मिंश्चन वर्गेऽन्तर्भावनीयानां शाखानां व्यवस्थाया न्याय्यत्वस्य प्रतिपादनाय शबरस्वामिना नवमाध्यायस्य द्वितीयपादस्याष्टमेऽधिकरणे तृतीयं वर्णकमुत्प्रेक्षितम्, तस्य तेनैव रूपेण व्याख्या कार्या, कस्मिंश्चन वर्गेऽन्तर्भावनीयानां शाखानां न्याय्यत्वस्य प्रदर्शनाय भाषास्वराधिकरणस्य 'करणादिसर्वविधमन्त्राणां मन्त्रसंहितोत्पन्नानां प्रावचनेन स्वरेण प्रयोगः' इत्यनेन रूपेण व्याख्या कृता इति तदनुरूपतया स्पष्टीकरणं कर्तव्यम्।

तत्र चतुर्षु वर्गेषु प्रथमवर्गं एतादृशी वेदशाखाऽऽगच्छति यस्यां वेदशाखायां ब्राह्मणग्रन्थोऽपि मन्त्रसंहितास्वरेणैवाधीयते, न तद्भिन्नेन भाषिकादिस्वरेण, श्रौतकल्पसूत्रे च कस्यापि मन्त्रस्य द्रव्ययज्ञान्तर्गतप्रयोग ऐकश्रुत्यं न विहितम्, तच्छाखानुयायिनः सर्वानपि मन्त्रांस्त्रैस्वर्यरूपेण चातुःस्वर्यरूपेण वैकविधेनैव स्वरेण प्रयुञ्जते। अत्र कस्यापि सन्दिग्धस्य विषयस्याऽभावात् सन्दिग्धार्थकवाक्यार्थविचारात्मकस्य मीमांसाशास्त्रस्य न्यायानामावश्यकतैव न भवति।

द्वितीयवर्गे च तादृशी वेदशाखाऽऽयाति यस्यां ब्राह्मणं मन्त्रसंहितास्वरेणैवाऽधीयते, परं श्रौतकल्पसूत्रे जपादिमन्त्रवर्जं मन्त्रप्रयोग एकश्रुतिर्विहिताऽस्ति, तच्छाखानुयायिनस्तु जपादिमन्त्रान् प्रावचनेन स्वरेण ( त्रैस्वर्यादिना ) तत्तद्व्यतिरिक्तान् करणादिमन्त्रांश्च तानेन प्रयुञ्जते।

---

१. अष्टाध्याय्याम्—६।२।७-८।

२. ऋजुविमलायाम्—९।२।७ (३) (मद्रपुर. पृ० २६७-२६८)।

अस्यामवस्थायां केन न्यायेन संहितायां महता प्रयत्नेन त्रैस्वर्यादिनाऽधीता अपि करणादिमन्त्रा द्रव्ययज्ञे तानेन प्रयुज्यन्ते ? इति प्रश्न उत्थितो भवितुं शक्नोति। तस्य समाधानं स्मृत्यधिकरणेनैव कल्पसूत्राधिकरणेनैव वा न भवति। अत एव खण्डदेवेन नवमाध्यायद्वितीयपादाष्टमाधिकरणतृतीयवर्णकपूर्वपक्ष उक्तम्—"....न च तानो यज्ञकर्मणीत्यजपन्यूङ्खसामस्विति स्मृत्या तानस्वरस्य विहितत्वादुभयबाध इति वाच्यम्, श्रौतानामध्ययनविध्यध्यापितानां स्वराणां तत्तत्क्रत्वपूर्वसाधनीभूतमन्त्रवृत्तित्वस्य प्रबलप्रमाणप्रमितत्वेन स्मृत्या बाधायोगात्। अन्यथाऽग्निर्मूर्धेत्यादीनां स्मृत्या नवग्रहाङ्गभौमार्चने विनियोगात्[1] क्रमादिनाऽऽग्नेयाङ्गत्वानापत्तेः"[2] इति। इत्थमतिमहत्त्वपूर्णप्रश्नत्वेन स्वीकार्यस्यास्य प्रश्नस्य समाधानं शबरस्वाम्युपात्तोपरि चर्चिततानवर्णकाभावे धर्ममीमांसाशास्त्रे समाविष्टं न भवति। तेन मीमांसाशास्त्रे न्यूनता भवति। तन्न्यूनतापूर्त्यै शबरस्वामिना "अर्थैकत्वाद् विकल्पः स्यादृक्सामयोस्तदर्थत्वात्, वचनाद् विनियोगः स्यात्"[3] इत्यनयोः सूत्रयोः क्लिष्टमपि व्याख्यान्तरं कृत्वा नवीनं वर्णकं मीमांसाशास्त्रे समावेश्य शास्त्रन्यूनतापूर्तिः कृतेति साध्वेवाऽऽचरितं तत्रभवतेति मन्तव्यम्। कुर्वन्ति हि व्याख्याकारा व्याख्याविकल्पं विषयव्याप्त्यै। अत एव तूक्तं कुमारिलभट्टपादैः —

"सर्वव्याख्याविकल्पानां द्वयमेव प्रयोजनम्।
पूर्वत्रापरितोषश्च विषयव्याप्तिरेव च"[4] ॥ इति।

अस्यामवस्थायामस्य वर्णकस्य भाषास्वराधिकरणविरोधो न भवति। उक्तविधशाखायां मन्त्रसमाम्नायस्वरभिन्नस्वरेण ब्राह्मणे कस्यापि मन्त्रस्याविनियुक्तत्वेन मन्त्रसंहितायां त्रैस्वर्यादिना पठितानां ब्राह्मणेन भाषिकस्वरेणोपदिष्टानां मन्त्राणां द्रव्ययज्ञे केन स्वरेण प्रयोग इति प्रश्नस्यैवानुत्थानात्। अत एव वासुदेवदीक्षितादीनां भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधः स्यादित्यादिसूत्रप्रतिपाद्याधिकरणविरोधादुपर्युक्तं भाष्यकारीयं वर्णकं हेयमिति कथनमनुपयुक्तं भवति। वासुदेवादिकथनस्वीकार एतादृशशाखादृष्ट्योपस्थितस्य प्रश्नस्य धर्ममीमांसाशास्त्रेण समाधानं न भवति। "यज्ञकर्मण्यजपन्यूङ्खसामसु (एकश्रुतिः)" इति व्याकरणस्मृतिविरोधश्च भवति। द्वादशाध्यायस्थ-स्वरविचाराधिकरणदृष्ट्या मीमांसाया एतादृशशाखाव्यवस्थाविरुद्धार्थप्रतिपादकत्वमापद्यत इत्यनिष्टापत्तिश्च भवति। इत्थं भाष्यकारेणोपर्युक्तप्रकारकवेदशाखादृष्ट्येदं वर्णकं रचितमिति ज्ञायते। तस्मादेतस्य वर्णकस्य हेयत्वमास्थातुं न युज्यते।

---

१. याज्ञवल्क्यस्मृतौ—१।३००;　　२. भाट्टदीपिकायाम् —९।२।७ (३)।
३. जै० ध० मी० सू० ९।२।२९--३०।
४. तन्त्रवार्त्तिके—१।३।४ (आनन्दाश्रम०, पृ० १०३)।

तृतीयवर्गे च तादृशी वेदशाखाऽऽयाति यस्यां वेदशाखायां ब्राह्मणस्वरो मन्त्रसंहितास्वराद् भिन्नः ( भाषिकादिकः ) वर्तते, अथ च श्रौतकल्पसूत्रे कस्मिन्नपि मन्त्रे प्रयोग ऐकश्रुत्यं न विहितम्, तच्छाखाध्यायिभिर्जपादिकाः करणादिकाश्चेति सर्वविधा अपि मन्त्रसंहितोत्पन्ना मन्त्राः प्रावचनेन स्वरेण ब्राह्मणोत्पन्ना मन्त्राश्च भाषिकस्वरेण प्रयुज्यन्ते। अत्रापि केन न्यायेनेत्थं प्रयोगः सम्भवतीति प्रश्न उत्थातुं शक्नोति। तस्य समाधानार्थं द्वादशाध्यायतृतीयपादेऽष्टमनवमे अधिकरणे मीमांसायां समाविष्टे। उपर्युक्तविधायां शाखायां कस्याऽपि मन्त्रस्य तानस्वरेण प्रयोगो न विहित इति मन्त्रसंहितोत्पन्नाः करणमन्त्रा अपि यथाप्राप्तेन प्रावचनेनैव स्वरेण प्रयुज्यन्त इति हेतोर्भाष्यकारेण "इमामगृभ्णन्" इति करणमन्त्रमुदाहरणतया प्रस्तुत्य मन्त्रसंहितायां त्रैस्वर्येणाधीतानां ब्राह्मणेन च भाषिकस्वरेणोपदिष्टानां मन्त्राणां त्रैस्वर्येणैव प्रयोगो न्याय्य इति प्रतिपादितो निर्णयः सङ्गत एव भवति।

सोमनाथ--खण्डदेव--शम्भुभट्टैश्च कस्याञ्चन वेदशाखायां जपादिमन्त्रा एव न, किन्तु करणादिमन्त्रा अपि प्रावचनेन स्वरेण ( त्रैस्वर्येण चातुस्वर्येण वा) प्रयोक्तव्यत्वेन प्राप्ताः सन्तीति वस्तुस्थितिमदृष्ट्वा सर्ववेदशाखासु करणादिमन्त्रास्तानेनैव प्रयोक्तव्या इति स्वीकृत्य यत् किमपि प्रतिपादितं तत् स्वज्ञानमूलकमेवेत्यवगम्यते। तत्रापि सोमनाथः 'एवञ्च जपमन्त्रादिव्यतिरिक्तेषु करणमन्त्रादिरूपेष्वग्नये जुष्टं निर्वपामीत्याध्वर्यवयाजमानेष्वप्याधुनिकानां याज्ञिकानां चातुःस्वर्येण प्रयोगे मूलं मृग्यम्'[1] इति वदति, शबरस्वामिनाऽपि 'इमामगृभ्णन्' इति करणमन्त्रमुदाहृत्य तस्य प्रावचनेनैव स्वरेण ( त्रैस्वर्यादिना ) प्रयोगो न्याय्यत्वेन प्रतिपादित एवास्तीति तु विस्मरति। भाष्यकारोदाहरणेनैव ज्ञायते यत् कस्याञ्चिच्छाखायामाध्वर्यवादिमन्त्राणामपि त्रैस्वर्येण ( चातुःस्वर्येण वा ) प्रयोगो भवतीति भाष्यकारेण स्वीकृतमिति। एतत् सोमनाथेन नाऽऽकलितम्। एवमेव टुप्टीकामूलके[2] "लिङ्गविनियुक्तमन्त्रविषये ब्राह्मणे गुणार्थवादपरिसंख्याद्यर्थत्वेन पुनःश्रवणेऽपि मन्त्रविनियोगफलस्यैवाभावे सुतरां स्वरविनियोगस्याप्रसक्तिः"[3] इति शास्त्रदीपिकाकारस्य प्रतिपादनेऽसङ्गतिं दृष्टवतः खण्डदेवस्य "तल्लिङ्गविनियुक्तमन्त्राणां जपतिचोदनाचोदितत्वाभावे जपत्वे प्रमाणाभावाद् यत्र जपतिचोदनाचोदितत्वसत्त्व एव लिङ्गविनियोगस्तत्र ब्राह्मणे पुनःश्रवणसत्त्व इति व्याख्येयम्"[4] इति कथनम्, शम्भुभट्टस्य—"इतरथा जपादिभिन्नानां तानस्वरेणैव विशेषतो विधानेन समाम्नायस्वरस्याप्रसक्तेरिति भावः"[5] इति स्पष्टीकरणञ्चोक्ततृतीयवर्गान्तर्गतवेदशाखायां विद्यमानाया जपादिव्यतिरिक्तानामपि मन्त्राणां प्रावचनेनैव

१. मयूखमालिकायाम् ९।२।८—(३) ( पृ० ६०९ )।
२. द्र० टुप्टीका १२।३।२३—(पृ० १२६२--६३ ); ३. द्र० शास्त्रदीपिका—१२।३।८।
४. भाट्टदीपिकायाम्—१२।३।८; ५. प्रभावल्याम्—१२।३।८।

स्वरेण प्रयोग इति व्यवस्थायाः, तद्व्यवस्थानुकूलस्य भाष्यकारस्योक्तप्रतिपादनस्य च सम्यगनाकलनादागतमित्यवगम्यते। अस्मिन् पक्षे 'यज्ञकर्मण्यजपन्यूङ्खसामसु'[1] इति व्याकरणस्मृतिविरोधस्तदवस्थ इति चेत्, न, तस्याः स्मृतेः सर्ववेदपारिषदत्वेन नानावेद-शाखाव्यवस्थान्वाख्यानपरत्वाद् व्यवस्थितविकल्पप्रतिपादकताया 'विभाषा च्छन्दसि'[2] इत्युपरितनसूत्रबलेन व्याख्यानात्। अतः कस्यामपि शाखायां यज्ञकर्मणि प्रयोगे केषा-मपि मन्त्राणामैकश्रुत्यं न स्वीक्रियत इत्येतस्मिन् वासुदेवोक्तपक्ष एवैतस्याः स्मृतेर्विरोधो भवति, नास्मदीये व्यवस्थितविकल्पपक्षे।

चतुर्थवर्गे च तादृशी वेदशाखाऽऽयाति यस्यां मन्त्रसंहिता त्रैस्वर्येणाधीयते ब्राह्मण-ग्रन्थस्तु भाषिकस्वरेण, श्रौतकल्पसूत्रे च सुब्रह्मण्यासामजपन्यूङ्ख-याजमानवर्जं यज्ञ-कर्मण्येकश्रुतिः (तानः) इति विधानं वर्तते, तच्छाखानुयायिभिर्याज्ञिकैर्द्रव्ययज्ञे सुब्रह्मण्याजपादिमन्त्रेषु मन्त्रसंहितोत्पन्ना मन्त्राः प्रावचनेन स्वरेण (त्रैस्वर्येण) प्रयुज्यन्ते, ब्राह्मणोत्पन्नास्तु भाषिकस्वरेण। तथा हि वाजसनेयिशुक्लयजुर्वेदशाखायां मन्त्रसंहिता त्रैस्वर्येणाऽधीयते, ब्राह्मणं भाषिकस्वरेण। श्रौतसूत्रे चोक्तम्—

"मन्त्रे स्वरक्रिया यथाम्नातमविशेषात्।
भाषिकस्वरो वोपपन्नमन्त्रोपदेशात्।
तानो वा नित्यत्वात्।
(एकश्रुतिदूरात् सम्बुद्धौ) सुब्रह्मण्या--साम--जप--याजमानवर्जम्"[3]। इति।

एतादृशशाखाया व्यवस्थायां सम्भावितस्य सुब्रह्मण्याजपादिव्यतिरिक्तानां मन्त्रसंहितायां त्रैस्वर्येणाऽधीतानां ब्राह्मणे भाषिकस्वरेणाधीतानां वा करणादिमन्त्राणां यज्ञकर्मणि तानेन प्रयोगः कथं क्रियते? इत्यस्य प्रश्नस्य समाधानं नवमाध्यायस्य द्वितीयपादस्याष्टमेऽधिकरणे भाष्यकारेणोपात्तेन तानवर्णकेन भवति।

मन्त्रसंहितायां त्रैस्वर्येण पठितानां ब्राह्मणे च भाषिकेणोपदिष्टानां जपादि-मन्त्राणां कथं त्रैस्वर्येण प्रयोगः? ब्राह्मणोत्पन्नानां तादृशमन्त्राणां च कथं भाषिकेण स्वरेण प्रयोगः? इत्यनयोः प्रश्नयोः समाधानञ्च द्वादशाध्यायस्य तृतीयपादस्याष्टम-नवमाधिकरणाभ्यां भवति। एवञ्च शाखाविशेषे जपादिमन्त्रे मन्त्रसंहितोत्पन्ने ब्राह्मणोत्पन्ने च यज्ञेषु प्रयुज्यमाने स्वरविशेषप्रयोगस्य व्याख्या तावदेताभ्यामधि-करणाभ्यां पूर्वोक्तप्रकारेण कर्तुं शक्येति बोध्यम्। अस्मिन् पक्षे च भाष्योक्तकरण-मन्त्रोदाहरणासङ्गतिमुपेक्ष्याऽधिकरणे योजयितव्ये भवतः। एवं च द्वादशाध्यायतृतीय-पादस्याऽष्टमनवमाधिकरणयोः "मन्त्रसमाम्नाये भिन्नेन स्वरेण ब्राह्मणे च भिन्नेन

---

१. अष्टाध्याय्याम्—१।२।३४;  २. तत्रैव—१।२।३६।
३. कात्यायनश्रौतसूत्रे—१।८।१६-१९।

स्वरेणोपदिष्टानां मन्त्राणां यज्ञे विशेषतया स्वरविशेषस्य विधानस्याऽभावे केन स्वरेण प्रयोगो न्याय्यः ? इति संशये तेषां मन्त्रसंहितास्वरेणैव प्रयोगो न्याय्यः, न तु ब्राह्मण-स्वरेण" इति, "ब्राह्मणोत्पन्नानां तादृशमन्त्राणां तु ब्राह्मणस्वरेणैव प्रयोगो न्याय्यः" इति च न्याययोर्व्युत्पादन एव तात्पर्यमवगन्तव्यम् । एवञ्चैतदधिकरणद्वयं करणादि-सर्वमन्त्रविषयतया जपादिमन्त्रमात्रविषयतया वाऽपि योजनीयम्, अधिकरणयोर्न्याय-व्युत्पादनमात्रपरत्वादित्यस्माकं पक्षः ।

इत्थमस्मदीयपक्षस्याश्रयणे भाष्ये प्रतीयमानस्य विरोधस्य परिहारो भवति । एतच्च ज्ञातुं शक्यते यच्छबरस्वामिकृतं भाष्यं परस्परविरुद्धतया प्रतीयमानमपि वस्तुतो विरुद्धं नास्तीति । शाखाभेदेनोभावपि भाष्यग्रन्थौ सङ्गतौ भवतः ; परन्तु तत्र स्पष्टीकरणमावश्यकं भवति । नवमेऽध्याये तानवर्णके भाष्यकारेणेत्थं स्पष्टीकरणं कर्तव्यम्—"यस्यां शाखायां कल्पसूत्रे जपादिवर्जं मन्त्रे यज्ञकर्मणि तानो विहितस्तस्या-मेव शाखायां तानः प्रयोक्तव्यः" इति । कतिपयवेदशाखाव्यवस्थाया न्याय्यत्वस्य प्रदर्शनाय वर्णकान्तरोपादानं कृतमिति समीचीनमेव कृतं भाष्यकारेण ; परन्त्वेतादृशं स्पष्टीकरणं तु न कृतमिति स्वल्पो दोष एवायं भाष्यकारस्येति मन्तव्यम् ।

एतादृशी खलु मीमांसाधिकरणविशेषविषयव्यवस्था शाबरभाष्यव्याख्यातृभिः शाबरभाष्यमुपजीव्य स्वतन्त्रं ग्रन्थं रचयद्भिश्च प्रदर्शनीया । एवञ्च शाबरभाष्ये प्रतीयमानस्य विरोधस्य परिहारश्च सम्यक् प्रदर्शनीयः । एवं तु तैर्न कृतमिति तेषां ग्रन्थे न्यूनतैव मन्तव्या । कैश्चिच्च भाष्यकारोक्तार्थस्य विपरीततया विषयप्रतिपादनं कृतमिति तेषां प्रतिपादनमग्राह्यमिति च मन्तव्यम् । अत्रोपस्थापितस्यास्मदीयस्य पक्षस्य मीमांसाशास्त्रे कृतभूरिश्रमा नानावेदशाखाविशेषव्यवस्थाभिज्ञा विद्वांसः शास्त्रदृष्ट्या समीक्षां कुर्वन्त्विति शम् ।



# वर्णानां स्थानप्रयत्नसमीक्षा

पण्डितश्रीरामदेवत्रिपाठी

प्राचार्यः, श्रीमायानन्दगिरिसंस्कृतमहाविद्यालयस्य
रामापुरा, वाराणसी

❀❀❀

अस्मिन्निबन्धेऽग्रलिखिता विषया विमृश्यन्ते—

१. अकारादिवर्णानां कण्ठादिस्थानविवेकः,
२. अत्र विषये युक्तायुक्तत्वविचारः,
३. उभयनिष्ठत्वहेतुः,
४. असम्भवत्वहेतुः,
५. वायुप्रतिघातानुसारेण वर्णस्थानस्वीकारे पाणिनिसम्मतिः,
६. वायुसंयोगानुसारमकारादिवर्णस्थानस्वीकारे तैत्तिरीयप्रातिशाख्यविरोधपरिहारः,
७. जिह्वास्पर्शाद्यनुसारेण स्पृष्टादिप्रयत्ननिश्चये पातञ्जलभाष्यसम्मतिः,
८. स्पृष्टादिप्रयत्नस्य वायुप्रतिघातस्य च विभिन्नाधिकरणत्वप्रतिपादनम्,
९. प्रयत्नोऽन्यत्र वायुप्रतिघातश्चान्यत्र क्रियते—इत्यत्र लौकिकप्रमाणोपस्थापनम्,
१०. स्थानेषु जिह्वास्पर्शस्य वायुप्रतिघातस्य च व्यधिकरणत्वनिरूपणम्,
११. ताल्वाद्येकदेशादिषु जिह्वास्पर्शानुसन्धानम्,
१२. स्पर्शवर्णानामभिव्यक्तिप्रक्रियायाः सामान्यपरिचयः,
१३. मूर्ध्न्यभिहतस्य प्राणवायोस्तालुमार्गेण कण्ठादिस्थानेषु गमनप्रकारः,
१४. जिह्वामूले कवर्गस्याभिव्यक्तिप्रक्रिया,
१५. कवर्गादिशब्दानां मूर्धस्थानत्वप्रतिपादनम्, तत्खण्डनं च,
१६. कवर्गस्य कण्ठस्थानत्वविचारः,
१७. अस्मिन् विषये युक्तायुक्तत्वनिर्णयः।

'शब्दतत्त्वम् ( तत्सम्बन्धि ) आधुनिकविज्ञानं च' एतन्नामधेयं बिभ्रद् ग्रन्थरत्नं दृष्ट्वा मदीयं मानसमत्यन्तं प्रासीदत्, एतादृशग्रन्थानां निर्मातारो न सन्ति बहुसंख्याकाः, अपि तु केचिदेव सन्ति संस्कृतव्याकरणशास्त्रज्ञा आधुनिकभाषाविज्ञानविदश्च।

अन्येऽपि ईदृशग्रन्थरत्नानामवलोकनेन मया यत्किञ्चिद् ज्ञातम्, तत्फलभूतमेवै-तन्निबन्धलेखनम् । एतस्याध्ययनेनाध्येतारो यदि ईषदपि सन्तुष्येयुस्तर्हि मदोयः परिश्रमः साफल्यमियादिति ।

### अकारादिवर्णानां कण्ठादिस्थानविवेकः

कण्ठादिस्थानस्य प्रयत्नभेदस्य च अनुसन्धानानन्तरं स्वभावत इयं जिज्ञासा समुदेति यद् अकारादिवर्णानां कण्ठस्थानत्वे को हेतुः ? कवर्गस्य जिह्वामूलमेव स्थानं स्वीक्रियते, तालुस्थानं कथं न स्वोक्रियते ? नकारादीनां नासिकास्थानत्वे को हेतुः ? यदि च नकारो नासिकया समुच्चार्यते, तर्हि नकारोच्चरणे नासिकायां का क्रिया भवति ? स्पृष्टादिप्रयत्ननिश्चयस्य कः प्रक्रमः ? इत्यादि । तैत्तिरीयप्रातिशाख्ये जिह्वाया उपसंहाराद्यनुसारेण वर्णस्थानं समुपदिष्टम् । उपसंहाराद्यनुसारेणेत्यत्रादिपदेन जिह्वास्पर्शस्य ग्रहणं कर्तव्यम् । इकारोच्चारणे कर्तव्ये जिह्वामध्यस्य तालावुपसहाराद् इकारस्य तालुस्थानम् । एवमेकारस्यापि बोध्यम् । उवर्णोच्चारणे कर्तव्ये द्वयोरोष्ठयो-रुपसंहारादुकारस्य स्थानमोष्ठं निष्पद्यते । एवं व्यञ्जनवर्णानामपि मध्ये कवर्गा-द्युच्चारणे कर्तव्ये जिह्वामूलेन हनुमूले स्पर्शात् कवर्गादोनां स्थानं हनुमूलादिकं स्वोक्रियते । हकारविसर्जनोययोश्च कण्ठस्थान मन्यते, किन्तु करणं किमपि न विद्यते ।

एवमाधुनिकशब्दशास्त्रिणोऽपि तत्तद्वर्णानां स्थानं जिह्वादिस्पर्शाद्यनुसारेण प्रति-पादयन्ति । यथा टवर्गोच्चारणे कर्तव्ये जिह्वाग्रभागस्य दन्तमूलेषु कठोरतालौ वा संश्लेषाट्टवर्गो दन्त्यो मूर्धन्यो वा विद्यते । मुखे मूर्धस्थानाभावात् "टवर्गो मूर्धन्यः" इत्येवं कथनं तेषां मते काल्पनिकं विद्यते । चवर्गसकारादिविकारं च कठोरतालव्यं प्रतिपादयन्ति । कवर्गञ्च कोमलतालुजन्यं सिद्धान्तत्वेन मन्यन्ते । चवर्गविषये च प्राचोनकाले चवर्ग-स्योच्चारणं कोमलतालुना, अधुना च कठोरतालुना समुच्चार्यते । एवं कवर्गोच्चारणे कर्तव्ये जिह्वायाः कोमलतालुना संश्लेषात् "कवर्गस्तालव्यः" इत्याधुनिकशब्दशास्त्रिणां नवीनं महत्त्वपूर्णञ्च अनुसन्धानं विद्यते । यद्यप्याधुनिकशब्दशास्त्रिणां तैत्तिरोयप्राति-शाख्यादिभिर्वर्णस्थानविषये वैषम्यं प्रतिभाति, किन्तु जिह्वास्पर्शाद्यनुसारेण कवर्गादि-वर्णस्थाननिश्चयविधौ समन्वयः कर्तुं शक्यते । यतो हि उभयोर्मते कवर्गादिवर्णस्थान-निश्चये जिह्वास्पर्श एव कारणम्, आधारो वा विद्यते ।

### अत्र विषये युक्तायुक्तत्वविचारः

वस्तुतस्तु सूक्ष्मदर्शिनो मुनयः स्थानेषु वायुप्रतिघातानुसारेण कवर्गादिवर्णानां स्थानं निर्दिष्टवन्तः ।

यद्वर्णोच्चारणे कर्तव्ये करणप्रयत्नाभ्यां यत्र वायुसंयोगस्तत् तद्वर्णस्य स्थानं स्वीकर्तव्यम् । तत्तत्स्थानेन सह जिह्वास्पर्शेन प्रयत्नस्यैव निश्चयः कर्तव्यः, तस्य च

स्पृष्टादिप्रयत्नकोटावेव गणना कर्तव्या। जिह्वास्पर्शाद्यनुसारेण तत्तद्वर्णस्य स्थानास्वीकारे कारणद्वयं विद्यते—१. उभयनिष्ठत्वम्, २. असम्भवत्वरूपञ्चेति।

### उभयनिष्ठत्वहेतुः

यथा कपालद्वयसंयोगो नैकस्मिन् कपाले वर्तते, अपि तु द्वयोः कपालयोः, यतो हि संयोगो द्विष्ठो न तु एकस्थः, तथैव रीत्या वर्णोच्चारणात् प्राग् जिह्वास्पर्शो हि उभयत्र जायते—तात्वादिस्थानेषु, जिह्वामध्यादिभागेषु च। स्पर्शस्य उभयनिष्ठत्वाज्जिह्वामध्यादिभागा अपि वर्णानां स्थानानि स्युः। तथा च शिक्षाकारैः "तवर्गो दन्तमूलीयो जिह्वाग्रयश्च" इत्येवं रीत्या स्थानं निर्देष्टव्यम्, किन्तु न निर्दिष्टम्, निर्दिष्टञ्च तवर्गस्य दन्तमूलं स्थानम्, जिह्वाग्रश्च करणमिति। तात्वादीनां स्थानत्वेन, जिह्वामध्यादीनाञ्च करणत्वेन निर्देशः कृतः।

### असम्भवत्वहेतुः

त्वया तत्तत्स्थानेषु जिह्वास्पर्शेन तत्तदुच्चार्यमाणवर्णानां स्थाननिश्चयः क्रियते। उच्चारणात्प्राक् तालुदेशे जिह्वास्पर्शाच्चवर्गस्य तालव्यत्वम्, मूर्धस्थाने जिह्वास्पर्शात् टवर्गस्य मूर्धन्यत्वम्, दन्तस्थाने जिह्वाग्रस्पर्शात्तवर्गस्य दन्त्यत्वम्, ओष्ठद्वयस्य च परस्परं स्पर्शात् पवर्गस्य ओष्ठस्थानत्वं स्वीक्रियते। एवञ्च त्वद्रीत्या 'ङञणनम' इत्यनुनासिकवर्णानां नासिकास्थानं न कदापि भवितुं शक्नोति। मुखनासिकान्तराले नकारादीनां स्थानान्तरस्वीकारपक्षेऽपि तत्र जिह्वायाः स्पर्शादिव्यापारो भवितुं नार्हति। आधुनिकभाषावैज्ञानिकैः शिक्षाकारैश्च ङकारादीनां नासिकास्थानं स्वस्ववर्गाभिव्यक्तिजनकस्थानञ्च स्वीक्रियते, तथैवानुभूयते च। ङकारादिपञ्चवर्णाश्च स्पर्शवर्णा अप्युच्यन्ते। यदि भवता जिह्वास्पर्शानुसारेण तत्तद्वर्णस्थानं स्वीक्रियते, तर्हि ङकाराद्युच्चारणे कर्तव्ये नासिकायां जिह्वायाः कथं स्पर्शो जायते? किं जिह्वाग्रं संकुच्य श्वासविवरमार्गं प्रविश्य तत्र (नासिकायाम्) स्पृशति, आहोस्वित् तालुदेशं भित्त्वा तत्र स्पर्शः सम्पद्यते? इत्युभयमपि न सम्भवति। एवञ्च नासिकादेशे जिह्वास्पर्शादिव्यापाराभावेऽपि ङकारादिवर्णानामुच्चारणस्य शक्यतया, जिह्वास्पर्शानुसारेण तत्तद्वर्णस्थाननिश्चयो न कर्तव्यः, किन्तु स्थानेषु वायुप्रतिघातानुसारेणैव। स्थानेषु वायुप्रतिघातानुसारेण तत्तद्वर्णस्थानस्वीकारे तु मकाराद्यनुनासिकवर्णोच्चारणे कर्तव्ये द्वाभ्यामोष्ठाभ्यां स्पृष्टप्रयत्ने कृते सति वायुः सर्वगामित्वाद् ओष्ठादिस्थानं नासिकादेशञ्चेत्युभयत्रापि प्रतिहन्ति, ततश्च मकारादयः परश्रोत्र-स्वश्रोत्रग्राह्या भवन्ति।

कं खं अं इत्याद्यनुनासिकवर्णानामपि भागस्य मुखेन, भागस्य च नासिकयोच्चारणं क्रियते। 'कं' इत्यादिषु 'क्' इत्याद्यंशस्य जिह्वामूलस्य हनुमूलेन स्पर्शादुच्चारणं कर्तुं शक्यते '०' इत्यंशस्य नासिकया कथमुच्चारणं सम्भवति? नासिकायाः कोटिशः

सङ्कोचनादिक्रियाभिः 'ं' इत्यंशो नोच्चारयितुं शक्यतें; किन्तु नासिकया यदा वायुसंयोगः सञ्जायते, तस्मिन् क्षण एव 'ं' इत्यंशः समुच्चार्यते। एवञ्च वायुसंयोगानुसारितत्तद्वर्णस्थानस्वीकारपक्षे 'ं' इत्यस्य नासिकास्थानं स्वीकर्तुं शक्यते। वर्गपञ्चमवर्णयुक्तस्य अन्तःस्थवर्णयुक्तस्य च हकारस्य स्थानमुरः प्रोक्तम्। जिह्वादिव्यापारानुसारेण तत्तद्वर्णस्थानस्वीकारे यथाभूतस्य हकारस्योरःस्थानं न सम्भवति। बहूपायेनापि जिह्वा उरःस्थानं स्प्रष्टुं न समर्था। वायुप्रतिघातानुसारेण तत्तद्वर्णस्थानस्वीकारपक्षे तु वायोस्तत्र प्रतिघातात् तथाभूतस्य स्थानमुरःप्रदेशः सरलतया स्वीकर्तुं शक्यते।

### वायुप्रतिघातानुसारेण वर्णस्थानस्वीकारे पाणिनिसम्मतिः

एवमुपर्युक्तहेतुद्वयस्य विवरणानुसारं वायुसंयोगानुसारेण तत्तद्वर्णस्थाननिश्चयः, जिह्वास्पर्शानुसारेण च स्पृष्टादिप्रयत्नस्य प्रक्रमः स्वीकर्तव्यः। सूक्ष्मदर्शिनः पाणिन्यादिमहर्षयोऽपि वायुसंयोगानुसारेणैव विभिन्नवर्णानां स्थानं निर्दिष्टवन्तः। अत्र 'मुखनासिकावचनोऽनुनासिकः' (१।१।८) इति सूत्रमेव प्रमाणं विद्यते। वर्गेषु वर्णचतुष्टयस्य जिह्वामूलादीनां तत्तत्स्थानेषु स्पर्शेन कथञ्चिद् उच्चारणसम्भवेऽपि ङकारादीनां वायुसंयोगं विना नासिकया कथमप्युच्चारणं न सम्भाव्यते। एवं वायुप्रतिघातानुसारेण वर्णस्थानस्वीकारे पाणिनीयं सौत्रं प्रमाणं समुपस्थापितम्। पाणिनीयशिक्षायां तु—

"सोदीर्णो मूर्ध्न्यभिहतो वक्त्रमापद्य मारुतः।
वर्णान् जनयते .... .... ... .... .... .... ....." ॥

इत्यनेन तद्वचनं दृढतां भजति। एतदेव स्पष्टयत्याचार्यो भर्तृहरिर्वाक्यपदीयस्य ब्रह्मकाण्डे—

लब्धक्रियः प्रयत्नेन वक्तुरिच्छानुवर्तिना।
स्थानेष्वभिहतो वायुः शब्दत्वं प्रतिपद्यते ॥ १८० ॥

अत्र कारिकायां 'स्थानेष्वभिहतः' इत्युक्तम्। वायोरभिघातः कण्ठादिस्थानेष्वेवेति अकारादिवर्णोच्चारणे करणप्रयत्नाभ्यां कण्ठादिस्थानेष्वेव वायोरभिघाताद् अकारादिवर्णानां कण्ठादिकमेव स्थानमिति सूचितम्। यथा कपालद्वयसंयोगः कपालद्वये, न तु एकस्मिन् एव कपाले भवति, एवं कण्ठादिस्थानेषु वायुप्रतिघातोऽपि कण्ठादिस्थाने वायौ च परस्परं जायते। वायुः स्पृष्टादिप्रयत्नेन कण्ठादिस्थानेष्ववरुद्धः सन् कण्ठादिस्थानमभिहन्ति, तदनन्तरं स्वयमेव प्रतिहतो भवति। यथा कश्चित् स्वहस्तेन काष्ठं ताडयति, काष्ठेऽभिघातो भवति, तस्य हस्तोऽपि प्रतिहतो भवति। एवं वायुतत्तद्वर्णस्थानयोः परस्परं प्रतिघातविषयेऽपि बोध्यम्।

### वायुसंयोगानुसारमकारादिवर्णस्थानस्वीकारे तैत्तिरीयप्रातिशाख्यविरोधपरिहारः

यद्यपि तैत्तिरीयप्रातिशाख्ये जिह्वोपसंहाराद्यनुसारेणैव अकारादिवर्णानां स्थानं निश्चितम् । तथा चोक्तम्—"स्वराणां यत्रोपसंहारस्तत्स्थानम्" (तै० प्रा० २।३१), "अन्येषां यत्र स्पर्शनं तत्स्थानम्" (२।३३) इति, तथापि "नासिक्या नासिकास्थानाः" (तै० प्रा० २।४९), "मुखनासिक्या" (तै० प्रा० २।५०) इत्यपि सूत्रद्वयमुक्तम् । "वर्गवच्चवर्गेषु" (तै० प्रा० २।५१) इति सूत्रे ङकारादीनां स्ववर्गवत्करणं प्रोक्तम् । नकारोच्चारणे कर्तव्ये जिह्वाग्रेण तवर्गे दन्तमूलेषु तै० प्रा० २।३८ इत्यनुसारेण दन्तमूलेषु जिह्वाग्रेण स्पर्शाद् नकारो दन्त्यो भवितुमर्हति ; किन्तु नासिकायां जिह्वायाः स्पर्शाभावाद् नासिक्यः कथं भवितुमर्हति ? कोटिशो व्यापारेषु सत्स्वपि नासिकयोः परस्परं स्पर्शो भवितुं नार्हतीति तु पूर्वमेव प्रतिपादितम् । अस्यां दशायां "मुखनासिक्या वा" इति सूत्रं व्यर्थमेव स्यात् । तदेव च सूत्रं व्यर्थीभूय ज्ञापयति—"वायुप्रतिघातानुसारेणापि तत्तद्वर्णस्थानं निश्चेतव्यम्" इति । एवं नकाराद्युच्चारणे कर्तव्ये जिह्वाग्रेण दन्तमूलेषु स्पर्शे कृते सति वायुर्दन्तमूलेष्वपि प्रतिघातं करोति । नासिकायामपीति "नासिक्या नासिकास्थानाः", "मुखनासिक्या वा" इति सूत्रद्वयं सार्थक्यं भजते । एवञ्च जिह्वास्पर्शाद्यनुसारेण स्पृष्टादिप्रयत्नस्वीकारे, वायुसंयोगानुसारेण हकारादिवर्णस्थानस्वीकारे तैत्तिरीयप्रातिशाख्यस्य सम्मतिरेवास्ति ।

### जिह्वास्पर्शाद्यनुसारेण स्पृष्टादिप्रयत्ननिश्चये पातञ्जलभाष्यसम्मतिः

एवं पूर्वोक्तपरीक्षणानुसारेण तत्तद्वर्णोच्चारणे कर्तव्ये वायुसंयोगानुसारेण तत्तद्वर्णस्थानं जिह्वास्पर्शाद्यनुसारेण च स्पृष्टादिप्रयत्नानां बोधः कर्तव्यः । भगवान् भाष्यकारः पतञ्जलिरपि जिह्वास्पर्शाद्यनुसारेणैव प्रयत्नं निर्दिष्टवान् । अत्र "नाज्झलौ" (पा० सू० १।१।१०) इति सूत्रस्थमहाभाष्यमेव प्रमाणम् । तत्र "स्पृष्टं स्पर्शानां करणम्, ईषत्स्पृष्टमन्तःस्थानाम्, विवृतमूष्मणाम्" इत्युक्तम् । शकारादीनां करणानि जिह्वामध्यादिभागा ईषद्विवृत्तानि प्रयत्ना विद्यन्ते ।

### स्पृष्टादिप्रयत्नस्य वायुप्रतिघातस्य च विभिन्नाधिकरणत्वप्रतिपादनम्

स्पृष्टादिप्रयत्नास्ताल्वादिस्थानेषु वायुप्रतिघातार्थं क्रियन्ते । वायुप्रतिघातः, तदर्थं क्रियमाणः स्पृष्टादिप्रयत्नश्च इत्युभावेकस्मिन्नधिकरणे न भवतः । अत्र विषये सर्वेषामाचार्याणां सम्मतिर्विद्यते । तथा च अकारहकारविसर्जनीयानां कण्ठस्थानम्, हनुमध्यञ्च करणं प्रोक्तम्—

"अवर्णश्च विसर्गश्च हकारश्चापि केवलः ।
कण्ठ्या वर्णाः स्मृता ह्येषां हनुमध्यं तु कारणम्" ॥

तथा च हनुमध्येन विवृते प्रयत्ने कृते सति कण्ठदेशे वायुसंयोगादकारादयः समुच्चार्यन्ते । एवमेवाकारोच्चारणे कर्तव्ये जिह्वामध्यभागेन विवृतो यत्नः क्रियते,

वायुसंयोगश्च तालुदेशे । एवमुकारोच्चारणे कर्तव्येऽधोदन्तच्छदेन विवृतो यत्नः क्रियते, वायुसंयोगश्चोर्ध्वदन्तच्छदे जायते । ओष्ठ्यवर्णानामधरोष्ठ एव करणमित्यस्य पवर्गाभिव्यक्तिप्रक्रियायां सम्यक्तया निरूपणं कृतमस्ति । अत्र तावन्निभाल्यताम् – यदि वायुसंयोगः, तदर्थं क्रियमाणश्च विवृतः प्रयत्नः – इत्युभावेकस्मिन्नधिकरणे स्याताम्, तर्हि अकारादीनां स्थानं कण्ठः, करणञ्च मध्यहनुभागः कथं स्यात् ? अनुनासिकवर्णानां मध्ये कं खं इत्यादिषु '˘' इत्येतन्मात्रस्य नासिका करणं स्थानञ्च सम्भवति, ङकारादीनां तु स्वस्ववर्गवदेव करणं प्रयत्नश्च इत्युभौ विद्येते । नकारादीनां स्पृष्टं करणं विद्यते, स्थानं तु दन्तमूलादिकं नासिका च विद्येते । स्पृष्टप्रयत्नस्य वायुसंयोगस्य चैकाधिकरणतायां नकारादीनां कथं नासिकास्थानम्, कथञ्च जिह्वाग्रादिभागाः करणानि स्युः ? एवं च शास्त्रीयप्रामाण्येन वायुप्रतिघातस्य तदर्थं क्रियमाणविवृतादिप्रयत्नस्य च इत्युभयोर्विभिन्नाधिकरणत्वं निष्पद्यते ।

चिकित्सकविद्वद्वर्याः पण्डित-एडिथस्प्राउलमहोदया अपि वायुसंयोग, तदर्थं क्रियमाणः प्रयत्नश्च—इत्युभावेकत्र न भवत इति मन्यन्ते । अन्तःश्वसनबहिःश्वसनक्रियाशक्तिः स्वयं फुप्फुसे न विद्यते; अपि तु वक्षःस्थलीयपेशीषु । तथा च वक्षःस्थलीयपेशीनां चेष्टाशक्त्या फुप्फुसे सङ्कोचविकासौ, तत्र वायुसंयोगश्च सञ्जायन्ते । एवञ्च चिकित्सकानामपि अत्र विषये सम्मतिर्विद्यते ।

**प्रयत्नोऽन्यत्र वायुप्रतिघातश्चान्यत्र क्रियते—इत्यत्र लौकिकप्रमाणोपस्थापनम्**

यदा व्यजनं हस्तेन गृहीत्वा परितो भ्राम्यते, तदा वलयसन्धिषु (यत्र व्यजनं भ्रामयितुं चेष्टा जायते) वायुप्रतिघातो नानुभूयते; किन्तु तदन्यत्र मुखमण्डलादिषु व्यजनवृन्ते च वायुस्पर्शोऽनुभूयते । आधुनिकयुगे प्रचलितविद्युद्व्यजनेऽपि यत्र व्यजनचालकविद्युत्सम्बन्धो विद्यते, तत्र वायुप्रतिघातो न जायते; किन्तु व्यजनवृन्तेषु तदधः समासीनजनानां शरीरेषु तस्य स्पर्शोऽनुभूयते । यथा च हस्तेनैव मुखमण्डले वायुः समीर्यते, यत्र वलयसन्धिषु भुजदण्डसन्धिषु वा हस्तचालनाय चेष्टा क्रियते, तत्र वायुप्रतिघातस्याभावः, तदन्यत्र (हस्तप्रेरकनन्त्रिकातन्त्रादन्यत्र) हस्ताङ्गुलमुखमण्डलादिषु समीरणस्पर्शः प्रतीयते । एवं शास्त्रीयलौकिकोभयविधप्रामाण्येन वायुप्रतिघातस्य, तदर्थं क्रियमाणप्रयत्नस्य च विभिन्नाधिकरणत्वं निर्वचनवम् ।

**स्थानेषु जिह्वास्पर्शस्य वायुप्रतिघातस्य च व्यधिकरणत्वनिरूपणम्**

स्पृष्टादिप्रयत्नवायुप्रतिघातयोरिव जिह्वास्पर्शवायुप्रतिघातयोरपि विभिन्नाधिकरणत्वं पूर्ववदेव । वायुसंयोगो जिह्वामध्यादिभागसंयोगश्च—इत्युभौ पृथक् पृथक् स्थले भवतः, यतो हि सावकाशदेश एव वायुसंयोगः सर्वत्र लोके दृष्टः, न तु सावच्छिन्नदेशे । स्पर्शशब्दोच्चारणात् पूर्वं स्पृष्टकरणविन्यासः, तदनन्तरं प्राणानामूर्ध्वसमीरणम्,

ततश्च वायुमूर्धदेशात् प्रत्यागत्य तात्वादिस्थानं प्रतिहन्ति, तदव्यवहितोत्तरक्षणे च वर्णाभिव्यक्तिर्जायते । अत्र तावद् विविच्यताम्—यदि कादिवर्णोच्चारणात् प्राक् तेनैव स्थानेन सह जिह्वायाः संश्लेषः स्याद् यत्र वायुनाऽभिघातः करिष्यते, तर्हि मूर्ध्नाभिहतो वायुर्वक्त्रमापद्य कथं तत्स्थानमभिहनिष्यति ? यथा चवर्गोच्चारणात् प्राग् यदि जिह्वायाः (जिह्वामध्यभागस्य) संश्लेषस्तालुना सह स्यात्, तर्हि तालुस्थानं जिह्वामध्यभागेन सम्पृक्तत्वेन सावच्छिन्नत्वात् तत्र मूर्धदेशात्प्रत्यावृत्तो वायुः कथं प्रतिघातं करिष्यति ? तस्मात् स्थानेषु वायुप्रतिघातस्य जिह्वासंश्लेषस्य चेत्युभयोर्विभिन्नाधिकरणत्वं विद्यते । तथा च चवर्गादिवर्णोच्चारणे कर्तव्ये कोमलतालुनोऽधःपटले जिह्वामध्यभागस्य संश्लेषः, कोमलतालुनश्चोर्ध्वपटले वायुसंयोगः सञ्जायते। वायुसंयोगस्याधारस्तालुन ऊर्ध्वं पटलम्, जिह्वासंश्लेषस्य च आधारस्तालुनोऽधःपटलम्—इत्युभयोर्विभिन्नाधिकरणत्वं विद्यते । तालुन ऊर्ध्वभागे जिह्वामध्यादिसंयोगः, तालुनश्चाधोभागे वायुप्रतिघातश्च न कदापि भवतः—इत्यप्यत्र विषये ज्ञातव्यम् ।

## ताल्वाद्येकदेशादिषु जिह्वास्पर्शानुसन्धानम्

चवर्गाद्युच्चारणे कर्तव्ये जिह्वामध्यादिभागस्य स्पर्शोऽपि यावत् कोमलताल्वादिस्थानं प्रपूर्य न जायते, किन्तु कोमलताल्वाद्येकदेशे, यद्वा कोमलताल्वाद्युपश्लिष्टस्थाने क्रियते । अत्र विषये सर्वेषामाचार्याणां सम्मतिर्विद्यते । यथा तैत्तिरीयप्रातिशाख्ये "तालौ जिह्वामध्येन चवर्गे" (तै० प्रा० २।३६) इत्याद्युक्तम् । 'तालौ' इत्यादिष्वधिकरणार्थे सप्तमी विद्यते । अत्र 'तालौ' इत्यादिषु 'तिलेषु तैलम्', 'सर्वस्मिन्नात्माऽस्ति, इत्यादिवद् अभिव्यापकाधिकरणम्, 'मोक्षे इच्छाऽस्ति' इत्यादिवद् वैषयिकाधिकरणं च भवितुं न शक्येते ; किन्तु 'कटे आस्ते' इत्यादिवद् औपश्लेषिकाधिकरणमेव सम्भाव्यते । औपश्लेषिकाधिकरणमपि द्विविधम्—१. यत्किञ्चिद्देशावच्छेदेनाधारस्याधेयेन सह व्याप्तिरूपम्, यथा—'कटे आस्ते' । २. समीपश्लेषस्तत्कृत औपश्लेषिक इति सामीप्यसम्बन्धरूपम्, यथा –'इको यणचि' इत्यादिषु 'अचि' इत्यत्रौपश्लेषिकत्वं विद्यते । तथा च 'अचि' इत्यस्य 'अजव्यवहितपूर्वत्वविशिष्टे' इत्यर्थः क्रियते। एवं 'तालौ जिह्वामध्येन चवर्गे' (तै० प्रा० २।३६) इत्यादिस्थले तालावित्यस्य 'ताल्वेकदेशे, तालूपश्लिष्टस्थाने वा' इत्यर्थः । एवम् "अन्येषां यत्र स्पर्शनं तत् स्थानम्" (तै० प्रा० २।३३) इत्यत्रापि 'यत्र' इत्यस्य 'यत्किञ्चिद्देशावच्छेदेन यस्मिन् स्थाने, यस्योपश्लिष्टदेशे वा स्पर्शस्तदन्येषां स्थानम्' इति तात्पर्यं विद्यते । एवं पूर्वोक्तरीत्या "अन्येषां यत्र स्पर्शनम्" (तै० प्रा० २।३३) 'इत्याद्यार्षसूत्राणामनुसन्धानेन इदमेवायातं यच्चवर्गाद्युच्चारणे कर्तव्ये केवलं यावत्कोमलताल्वादिस्थानमेव सम्यक् स्पृशेत्, न तु ताल्वेकदेशम्, न वा तालूपश्लिष्टस्थानं वा स्पृशेत्' इत्येवं तात्पर्यं विद्यते ।

### स्पर्शवर्णानामभिव्यक्तिप्रक्रियायाः सामान्यपरिचयः

कवर्गाद्युच्चारणेच्छायां हनुमूलेनोर्ध्वजिह्वामूलैकदेशे तदुपश्लिष्टस्थाने तालौ वा स्पर्शे सति ऊर्ध्वजिह्वामूलस्योपरिभागे वायुसंयोगः, चवर्गोच्चारणेच्छया जिह्वामध्यभागस्य तालवेकदेशेन तालूपश्लिष्टस्थानेन वा संश्लेषः, तालुन ऊर्ध्वपटले च वायुसंयोगः, टवर्गोच्चारणे कर्तव्ये च मूर्धैकदेशेन मूर्धोपश्लिष्टस्थानेन वा संश्लेषः, मूर्धोपरिभागे च वायुसंयोगः, तवर्गोच्चारणेच्छायां दन्तमूलान्तर्भागे वायुसंयोगः दन्तमूलस्य बाह्यभागे च जिह्वाग्रसंश्लेषः । पवर्गोच्चारणेच्छायाञ्च ओष्ठद्वयस्य परस्परं संश्लेषः, तदुपश्लिष्टस्थाने च वायुसंयोगः, यद्वा ओष्ठद्वयस्य परस्परं संयोगे सति ओष्ठान्तर्भागस्थासु रक्तवाहिनीषु नाडीषु वायुप्रतिघातः । अत एव ओष्ठ्यवर्णोच्चारणक्षणे ओष्ठद्वयं बाह्याभ्यन्तरतः प्रफुल्लं प्रतीयते ।

### मूर्ध्न्यभिहतस्य प्राणवायोस्तालुमार्गेण कण्ठादिस्थानेषु गमनप्रकारः

कवर्गशब्दाद्युच्चारणेच्छायां प्रयत्नेन प्रेरितः प्राणवायुर्हृदयस्थानात् सुषुम्नाख्यनाड्यां ब्रह्मरन्ध्रं मध्यमस्तकं वा गच्छति । मोक्षेच्छया ब्रह्मरन्ध्रं भित्वा बहिर्निर्गतः सन् प्राणवायुः ब्रह्म (परमात्मानं) प्रापयति । अकारादिशब्दोच्चारणेच्छायाञ्च स एव प्राणवायुस्तालुमार्गेण कण्ठादिस्थानं प्राप्तः सन् ककारादिशब्दत्वं प्रतिपद्यते । अत्रेदमवधेयम्—तालुना 'तरन्त्यनेन वर्णाः' इति व्याख्यानुसारेण कार्यद्वयं सम्पाद्यते—१. बुभुक्षायां जिह्वासाहाय्येन भोज्यादिचतुर्विधभोजनस्य कण्ठविवरमार्गेणोदरेऽवतारणम्, अत एव यस्य जिह्वा न विद्यते, स 'तालुजिह्व' इत्युच्यते । स तालुनैव कथञ्चिज्जलादिनिगरणं प्रतिपादयति । २. द्वितीयञ्च कार्यम्—शब्दोच्चारणेच्छायां हृदयदेशाद् ब्रह्मरन्ध्रं समागतः प्राणवायुः कण्ठादिस्थानेष्ववतार्यते । भोजनादिनिगरणं तालुनोऽधःपटलात् (यत्र जिह्वासंश्लेषो जायते) क्रियते, तालुन ऊर्ध्वपटलाच्च कण्ठादिस्थानेषु वर्णोऽवतार्यते । भोजनादिनिगरणं तालुनोऽधःपटलात् (यत्र जिह्वासंश्लेषो जायते) क्रियते, तालुन ऊर्ध्वपटलाच्च कण्ठादिस्थानेषु वायोरवतरणं भवति, यतो हि मूर्धस्थानात् कण्ठादिस्थानेष्ववतीर्यमाणस्य प्राणवायोस्तालुनोऽधःपटलेन, उदरे भोजनादीनाञ्च निगरणं तालुन ऊर्ध्वपटलेन न सम्भाव्येते ।

### जिह्वामूले कवर्गस्याभिव्यक्तिप्रक्रिया

तत्र "न ह्यन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवति" इत्युक्त्या प्रतिस्पर्शं वर्णोच्चारणे आभ्यन्तरप्रयत्नद्वयं कर्तव्यं भवति । मातृकाणां 'क् ख् ग्' इत्यादिस्पर्शवर्णानां कृते पूर्वं जिह्वया स्पष्टप्रयत्नः, तदनन्तरं यत् स्वराश्रयेण अर्धमात्रिकं व्यञ्जनमुच्चार्यते, तदर्थं द्वितीयो विवृतो नाम आभ्यन्तरप्रयत्नः क्रियते । तत्र विवृते प्रयत्ने कृते सति स्पृष्टस्थानं त्यक्त्वा विवृतो भवति, तदनन्तरं प्रतिस्पर्शं

वर्णोच्चारणं जायते। एवञ्च पूर्णमात्रिकेषु 'क, ख, ग' इत्यादिषु 'क् ख् ग्' इत्याद्येतन्मात्रस्य स्पृष्टप्रयत्नः, 'अ' इत्येतन्मात्रस्य च विवृतप्रयत्नो विद्यते। कवर्गाभिव्यक्तिप्रक्रियाज्ञानात्पूर्वं "तालौ जिह्वामध्येन चवर्गे" ( तै० प्रा० २।३६ ) इत्यादौ सर्वत्र 'तालौ इत्यादिष्वौपश्लेषिकाधिकरणं विद्यते' इत्यवधेयम्। तत्र कवर्गस्य जिह्वामूलं स्थानं करणञ्च—इत्युभयमपि प्रोक्तम्। अत्र ऊर्ध्वजिह्वामूलं स्थानम्, अधोजिह्वामूलञ्च करणं बोध्यम्, यतो हि समेषां स्पर्शवर्णानामुच्चारणे कर्तव्येऽधोजिह्वा एव तात्वादिस्थानं स्पृशति।

आद्यः करणविन्यासः प्राणस्योर्ध्वसमीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥

इति भर्तृहरिकारिकोक्तरीत्या सर्वप्रथममधोजिह्वामूलमूर्ध्वजिह्वामूलैकदेशम्, ऊर्ध्वजिह्वामूलोपश्लिष्टस्थानं ( तालु ) वा स्पृशति तत्क्षणाव्यवहितोत्तरकाले ब्रह्मरन्ध्रतः समागतस्य प्राणवायोश्चोर्ध्वजिह्वामूलान्तर्भागे ( ऊर्ध्वजिह्वामूलस्योर्ध्वपटले ) संयोगः सञ्जायते, कण्ठदेशस्थस्वरतन्तवश्च वितत्य काठिन्यं विदधति। अधोजिह्वामूलस्योर्ध्वजिह्वामूलोपश्लिष्टस्थानेन सम्बन्धे सति स्वरतन्तूनां तननं जायते, अतस्तेषु काठिन्यं समायाति। स्वरतन्तुषु काठिन्योत्पादने वायुसंयोगः कारणं न विद्यते, यतो हि वायुसंयोग ऊर्ध्वजिह्वामूलान्तर्भागे विद्यते। स्वरतन्तूनां परस्परं तननात्, प्रफुल्लनात्, काठिन्याच्च श्वासमार्गोऽवरुद्धः सञ्जायते। अतः कण्ठदेशं वायुर्गन्तुं न प्रभवति; किन्तु जिह्वामूलान्तर्भागमेव निहन्तुँस्तिष्ठति। कोष्ठकञ्च भेत्तुं यतते। यद्यपि—

"उदानः कण्ठदेशे स्याद् व्यानः सर्वशरीरगः"।

इत्युक्त्या वर्णोच्चारणेच्छायाः पूर्वमपि कण्ठदेशे वायुः समुपतिष्ठते, तथापि वक्तुरिच्छानुवर्तिना प्रयत्नेन हृद्देशात् समुत्थितो मूर्धानं प्रतिहत्य प्रत्यावृत्तो यो वायुः स्वरतन्तूनां तननात् प्रफुल्लनात् स्थौल्याच्चेत्यादिहेतुभिः श्वसनमार्गस्यावरोधात्तस्य वायोः कण्ठदेशे संयोगो न जायते। अकारादिस्वरेण सह कवर्गस्योच्चारणेच्छायामधोजिह्वामूले संस्पृष्टस्थानं यस्मिन्नेव क्षणे विजहाति, तस्मिन्नेव क्षणे स्वरतन्तूनां तननस्य न्यूनतया तेषु शैथिल्यं समायाति, श्वासमार्गश्चानवरुद्धः सञ्जायते। ऊर्ध्वजिह्वामूलान्तर्भागावरुद्धः प्राणवायुश्च स्वरतन्तून् च स्वरयन्त्रं प्रकम्प्य मुखविवरेण बहिर्निःसरति। तथा च यावत्कालम् अधोजिह्वामूलं संस्पृष्टस्थानेन वियुज्य स्वस्थानं गच्छति, तावत्कालम् अ-स्वरविशिष्टककारस्याभिव्यक्तिर्जायते, यदा च अधोजिह्वामूलं पूर्णरूपेण स्वस्थानं प्राप्तं भवति, तदा क-शब्दो न श्रूयते, किन्त्वकार एव श्रूयते। एवं च कशब्दोच्चारणे कर्तव्ये ऊर्ध्वजिह्वामूले वायुसंयोगात्तस्य स्थानं जिह्वामूलं निष्पद्यते। कवर्गोच्चारणे कर्तव्येऽधोजिह्वामूले वायुसंयोगासम्भवात् तत् कवर्गस्य स्थानं न सम्भवति। अधोजिह्वामूले वायुसंयोगाभावे कारणं तु यत्कारणं कण्ठदेशे वायुसंयोगा-

भावे विद्यते, तदेवात्रापि। किञ्च, अधोजिह्वामूलस्योर्ध्वजिह्वामूलोपश्लिष्टस्थानेन सम्बन्धे सति स्वरतन्तूनां तननात् काठिन्याच्च तेषु ( स्वरतन्तुषु ) स्थूलत्वे समायाते श्वासमार्गस्यावरोधेऽपि यथाकथञ्चिद् वायोरतीवसूक्ष्मत्वात् कण्ठदेशे प्रवेशेऽप्यधा-जिह्वामूलेन संयोगा दुर्लभः, यतो हि अधोजिह्वामूलम् ऊर्ध्वजिह्वामूलोपश्लिष्ट-स्थानेन संयोगात् सावच्छिन्नं जायते, अतस्तत्र वायुसंयोगस्यावसर एव नास्ति। ऊर्ध्वजिह्वामूलान्तर्भागस्तु ( ऊर्ध्वजिह्वामूलस्योपरिभागः ) निरवच्छिन्नः सावका-शश्च विद्यते। अतस्तत्र वायुसंयोगः सम्भाव्यते। अकारादिस्वररहितकेवलककारस्य तूच्चारणं न भवति। केवलं ककारादिशब्दस्याभिव्यक्तौ यत्ने कृते वायुस्तत्तत्स्थानेषु प्रतिघातमात्रं करोति। जिह्वा च स्थानेन सह संश्लिष्टावस्थायामेव तिष्ठति। अतोऽकाराद्याश्रयेणैव ककारादीनामुच्चारणं कर्तुं शक्यत इत्यवधेयम्।

## कवर्गादिशब्दानां मूर्धस्थानत्वप्रतिपादनम्, तत्खण्डनञ्च

यद्यप्येवं ककारादिवर्णानां वायुप्रतिघातानुसारेण जिह्वामूलादिस्थाननिश्चये सति "सोदीर्णो मूर्ध्न्यभिहतः" इति शिक्षाऽनुसारेण मूर्धदेशे वायुप्रतिघातात् सर्वेषां शब्दानां मूर्धस्थानत्वं समापतति, तथापि वर्णाभिव्यक्तेः प्रागव्यवहितक्षणे तत्र वायु-प्रतिघाताभावान्न समेषां वर्णानां मूर्धस्थानम्। तथा च यद्देशावच्छेदेन वायुसंयोगं विना न यद्वर्णाभिव्यक्तिः, तद्देशस्तद्वर्णस्य स्थानमिति स्वीकार्यम्।

## कवर्गस्य कण्ठस्थानत्वविचारः

भगवतः पाणिनेः सूत्ररूपायां शिक्षायाम्, 'स सर्गः श्लेषितः कण्ठे वायुना कादिमीरयेत्' इति प्रपञ्चसारे तृतीयपटले, वैयाकरणसिद्धान्तकौमुद्यादिग्रन्थेषु च कवर्गः कण्ठस्थानीयः प्रतिपादितोऽस्ति; किन्तु श्लोकात्मकपाणिनीयशिक्षायाम्, सम्प्रत्युपलभ्य-मानप्रातिशाख्यादिषु च कवर्गस्य जिह्वामूलं स्थानं प्रोक्तम्, एवं च कण्ठजिह्वामूलयोः परस्परं भेदात् 'जिह्वामूले तु कुः प्रोक्तः' इति पाणिनीयशिक्षया सह 'अकुहविसर्ज-नीयानां कण्ठः' इत्यस्य विरोधः समायाति।

## अस्मिन् विषये युक्तायुक्तत्वनिर्णयः

वस्तुतस्तु कवर्गोच्चारणे कर्तव्ये जिह्वामूलीयाधोभागस्य जिह्वामूलीयोर्ध्व-भागेन संश्लेषे सति कण्ठदेशस्य प्राक्कालिकभागोऽपि जिह्वामूलीयोर्ध्वभागस्य अतीव पार्श्ववर्ती जायते। प्राक्कालिकभागस्योर्ध्वं जिह्वामूलमुपवर्तितया तत्रापि यत् किञ्चिद् वायुः प्रतिहन्यते। अतो भट्टोजिदीक्षितादिभिः कवर्गस्य कण्ठस्थानमङ्गीकृतम्। कण्ठपदस्य जिह्वामूलपरत्वकथनं न युज्यते। अत एव 'क ख' इत्यतः प्रागर्धविसर्ग-सदृशस्य जिह्वामूलीयस्य स्थानं जिह्वामूलम्, कवर्गस्य च स्थानम् 'अकुहविसर्ज-

नीयानां कण्ठः' इति मन्यते । अतः 'अकुह.....' इत्यत्र कण्ठपदं कण्ठार्थकमेव, 'जिह्वामूले तु कुः प्रोक्तः' इति पाणिनीयशिक्षायां जिह्वामूलपदं जिह्वामूलपरमेव । एवं च कवर्गस्य स्थानविषये विरोध आयात एव, तस्य परिहारश्चिन्तनीयः । स चेत्थम्— 'जिह्वामूले तु कुः प्रोक्तः' इत्यत्र तु शब्दः पक्षान्तरेऽर्थे बोध्यः । उक्तं च मेदिनीकोशे—

"तुः पादपूरणे भेदे समुच्चयेऽवधारणे ।
पक्षान्तरे नियोगे च प्रशंसायां विनिग्रहे" ॥ इति ।

अतश्च 'जिह्वामूले तु कुः' इति शिक्षावाक्यस्य "जिह्वामूले कुः' पक्षान्तरे 'कण्ठे कुः प्रोक्तः' इति व्याख्या विधेया ।

अथवा लघुशब्देन्दुशेखरीयरीत्या 'अकुहविसर्जनीयानां कण्ठः' इत्यत्र कण्ठपदस्य कण्ठस्थानतत्समीपजिह्वामूलस्थानोभयपरत्वमभ्युपेत्य विरोधः परिहर्तव्यः ; किन्त्वेवं सति अकारादीनामप्युभयस्थानकत्वापत्तिः स्यात्, अत उभयपरत्वस्थानेऽन्यतरपरत्वं वक्तुं युक्तमिति सुधियो विभावयन्त्विति ।



# स्फोटो ध्वनिश्च

**डॉ० रामनारायणत्रिपाठी**
भूतपूर्व-अध्यक्षः,
प्राच्यसंस्कृतविभागस्य
लखनऊविश्वविद्यालयः, लखनऊ

❀❀❀

वैयाकरणनिकाये प्रसिद्धः स्फोटस्तथा साहित्यिकसम्प्रदाये प्रख्यातो ध्वनिः, अर्थान्तरमनर्थान्तरं वेति निबन्धविषयः। तत्र प्रथमतः कोऽयं स्फोटो ध्वनिरथ विविच्यानन्तरं समीक्षे।

स्फोटोऽयं न केवलं शाब्दिकानां नये प्रस्फुटितः ख्यातः सम्मतोऽपि त्वयं नैगमिक आगमिको योगादिदर्शनैस्तन्त्रादिभिश्चाभिमतः। वैदिकवाङ्मयपरम्परया प्रचलितोऽयं स्फोटसिद्धान्तो वैयाकरणैर्विवेचितः प्रसारितश्च। तथा हि—

**"असद् वा एतदग्र आसीत्, स च ऋषिः। ऋषिश्च प्राणा अभूवन्"[1]। "प्राणा वै ऋषयो दैव्यासः[2]"। "एभ्य एव चान्ततः प्रजापतिराविर्बभूव"[3]। "सोऽपोऽसृजत। वाच एव लोकात्"[4]। "सुपर्णऽपि गरुत्मांस्त्रिवृत्ते शिरो चक्षुर्बृहद्रथन्तरे पक्षौ"[5]। "स्फोटतोर्हकः पक्षयोरुपशुश्राव"[6]। "वाण्येव सौपर्णीत्यपरामाख्यां भजते"[7]। "प्रजापतिर्वै सुपर्णः"[8]। "पुरुषः सुपर्णः"[9]।**

इत्यादिवैदिकमन्त्रेषु पुरुषप्रजापत्यपरपर्यायस्य प्रजास्रष्टुः सुपर्णस्य स्फुटतो विकसतोः पक्षयोः स्फोटाख्या वाग् जाता या श्रवणगोचरा। सैव वाग् जगत्कर्त्री नामरूपाभ्याम्, सूक्ष्मा नित्या सर्वात्मिकेति निगदति श्रुतिः—**"वागेव विश्वा भुवनानि जज्ञे[10]। "ओमित्येतदक्षरमिदं सर्वम्[11]", "वाचो हि वाक्"।**

---

१. श० ब्रा० ६।१।१।१; २. ऐ० ब्रा० १।५।११; ३. श० ब्रा० ६।१।१।३६।
४. तत्रैव—६।१।१।९; ५. मा० १२।४; ६ श० ब्रा० ८।१।४।९।
७. तत्रैव—३।६।२।२; ८. तत्रैव—१०।२।२।४; ९ तत्रैव—७ ४।२।५।
१०. ऋ० सं० उ० वा० प० १।१२० स्वोपज्ञटोकायाम्।
११. मा० १, नृ० पू० ता० २।२, ४।१, नृ० उ० ता० १।३।

अपरथापि ध्येयम्—

चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति[1] ॥

वाचश्चातुर्विध्ये दत्तसङ्केतस्यास्य मन्त्रस्यार्थविषये व्याख्यातॄणां मतवैविध्यं प्रदर्शयता यास्केन षट् पक्षा उपन्यस्ताः[2] । एतेभ्योऽर्थेभ्योऽतिरिक्तैका परा-पश्यन्ती-मध्यमा-वैखरीरूपा वाचश्चतुर्धा दार्शनिकी अपरोक्षाप्यनापि वर्तते या समीचीना युक्तयुक्तिपुरःसरा सङ्ख्या व्यवस्थिताऽस्ति । सैषा सरणिस्तन्त्रानुगैर्वैयाकरणैश्चानुसृता । अत्रापि केचन त्रिधा[3] केचन चतुर्धेति[4] वदन्ति ।

तत्र योगिनां चैषा धारणा यद् वाचः परमरहस्यभूतं मूलतत्त्वं वा परमा प्रकृतिर्मानवानां शरीरे मूलाधारचक्रे विराजते । तदुक्तं हरिणा स्वोपज्ञटीकायाम्—

प्राणापानान्तरे नित्यमेका सर्वस्य तिष्ठति ।
इयमेव परमा प्रकृतिर्वाचः परमो रसः[5] ॥

अयमेव वाचः परमो रसः पुण्यतमं ज्योतिश्चाप्यभिधीयते—

प्राप्तरूपविभागाया यो वाचः परमो रसः ।
यत्तत् पुण्यतमं ज्योतिस्तस्य मार्गोऽयमाञ्जसः[6] ॥

इयमेव वाक् ज्योतिः, परा, आत्मा, चित्, संवित्, इत्यादिभिरन्यैश्चाप्यभिधेयैरभिधीयते ज्ञायते च ।

इमामेव वाचं वैयाकरणाः 'शब्दब्रह्म' इति नाम्ना, 'स्फोटः' इति नाम्ना च व्यवहरन्ति । तदेव न हि; अपि तु जगतो मूलकारणमामनन्ति । वाचो मूलकारणत्वे वाक्यपदीये ब्रह्मकाण्डे स्वोपज्ञटीकायां १, १२, ११८, १२०, १२६, १२७, १३०, १३१, १४२ श्लोकानां व्याख्यावसरे बहवो मन्त्राः प्राचीनश्लोकाश्च समुद्धृता वर्तन्ते, ते तत्रैव द्रष्टव्याः । स्वयं च हरिणा स्वकारिकाभिस्तट्टीकया च स्पष्टीकृतम् ।

मूलाधारस्था चेयं परा वाग् अतिसूक्ष्मा दुर्ज्ञेया । तत्र योगिनामपि निर्विकल्पकं ज्ञानं प्रकृतिप्रत्ययविभागरहितं भवति किं पुनः साधारणजनानाम् । सा च परा वाग्

---

१. ऋ० सं० १।१६४।४५ ।

२. नि० १३ । १. ओङ्कारो महाव्याहृतयश्चेत्यार्षम् । २ नामाख्यातोपसर्गनिपाताश्चेति वैयाकरणाः । ३ मन्त्रः कल्पो ब्राह्मण चतुर्थी व्यावहारिकीति याज्ञिकाः । ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः । ५. सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके । ६. पशुषु तूणवेषु मृगेषु आत्मनि चेत्यात्मप्रवादाः ।

३. वा० प० १।१४२;　४. तत्रैव स्वोपज्ञटीकायाम् ।

५. तत्रैव—१।१४२;　६. तत्रैव—१।१२ ।

वाचस्त्रैविध्यसिद्धान्ते पश्यन्त्याः परापरविभागद्वये या परा पश्यन्ती सैव। चातुर्विध्ये तु स्पष्टैका स्मर्यत एव।

मूलाधारचक्रस्थेयं परा वाग् यदा नाभिप्रदेशं स्पर्शयता वायुना संस्पृष्टा भवति, तदा सा पश्यन्तीनाम्नाऽभिधीयते। अस्यामवस्थायामपि वाणी अविभाज्याऽभिन्ना सर्वथैव च क्रमहीना भवति। अक्रमाऽपोयमेत्र क्रमशो व्यक्तक्रमा भवति। वर्णविभाग-शून्या सूक्ष्मा नित्या स्वप्रकाशा नाभिसंस्था चेयं मध्यमावस्थायां शब्दार्थसंसृष्टरूपेण बुद्धौ पदार्थप्रकाशनं करोति स्वचरमाभिव्यक्तौ वैखर्यामवस्थायामनन्तान् भेदान् प्रकाशयति[1]।

सा पश्यन्ती परापरविभागेन द्विधा। तत्र अपरा नाभिदेशस्थिता बुद्धिमात्र-ग्राह्या बुद्धिमात्रस्वरूपा वर्णक्रमरहिता बुद्ध्यभेदेऽपि समारोपितवर्णक्रमशक्तिः।

आहृदयमागच्छता वायुना अभिव्यज्यमाना सैव वाग् मध्यमेति नाम्ना व्यव-ह्रियते। तस्यामवस्थायां बुद्धौ शब्द एकेन विशिष्टेन क्रमेण आकारेण वा प्रत्यव-भासितो भवति। उक्तञ्च हरिणा स्वोपज्ञटीकायाम्—

केवलं बुद्ध्युपादानक्रमरूपानुपातिनी।
प्राणवृत्तिमतिक्रम्य मध्यमा वाक् प्रवर्तते॥

अयञ्च टीकायामुद्धृतश्लोको महाभारतीयः। अस्यायं भावः—मध्यमावाक् केवलं बुद्ध्या एव गृह्यमाणा न तु श्रोत्रेण। वर्णक्रमरूपानुसारिणी सूक्ष्मप्राणवृत्त्यनु-गतापि स्थूलप्राणवृत्तिमतिक्रम्य प्रवर्तते। वादिदेवसूरिस्तु स्याद्वादरत्नाकारे व्याख्यात-वानेकम्—या पुनरन्तःसङ्कल्प्यमाना क्रमवती श्रोत्रग्राह्यवर्णरूपाभिव्यक्तिरहिता वाक् सा मध्यमेत्युच्यते।.........स्थूलां प्राणवृत्तिं हेतुत्वेन वैखरीवदनपेक्ष्य केवलं बुद्धि-रेवोपादानं हेतुर्यस्याः सा प्राणस्थत्वात् क्रमरूपमनुपतति। अस्याश्च मनोभूमावव-स्थानम्। वैखरीपश्यन्त्योर्मध्ये भावान्मध्यमा वागिति।

अपि च—मध्यमायाः स्थितौ वाणी भेदाभेदस्य किं वा क्रमाक्रमस्य मध्यस्था प्रतीयते। अनया प्रतीत्यैव सा मध्यमेत्युच्यते।

यदा वायुर्मुखं प्रविश्य तत्र उत्पतन् कण्ठतालुमूर्धादिस्थानानि आहत्य विभिन्नै-र्ध्वनिभिः क्रमश आगतां परापश्यन्तीमध्यमाख्यां पूर्वां वाणीं तथाऽभिव्यनक्ति, यथान्ये श्रोतारोऽपि तां श्रोतुं शक्नुवन्ति। सा वैखरीत्युच्यते। विखरे शरीरे, मुखे वा भवा वैखरी। भर्तृहरिस्तु वैखर्यादीनां स्वरूपमित्थं वर्णितवान्[2]—

---

१. वा० प० स्वो० टी० १। परिच्छिन्नार्थप्रत्यवभासा संसृष्टार्थप्रत्यवभासा प्रशान्त-सर्वार्थप्रत्यवभासा चेत्यपरिणामभेदा।

२. वा० प० १।१४२ स्वोपज्ञटीका।

या वाणी श्रूयमाणरूपा श्रोत्रग्राह्या नानुमेया बोद्धृवेद्या विशिष्टानुपूर्वीनियता, सा वैखरी।

सापि द्विविधा—श्लिष्टा (अव्यक्ताक्षरा) व्यक्तवर्णसमुच्चारणा। प्रकारान्तरेणापि द्विविधा—प्रसिद्धसाधुभावा, भ्रष्टसंस्कारा च। या व्याकरणसंस्कृता सा प्रसिद्धसाधुभावा, या च शकटाक्ष-दुन्दुभि-वेणु-वीणादिशब्दा सा भ्रष्टसंस्कारा, व्याकरणसंस्काररहितत्वात्। सा चेयमपरिमाणभेदा अपरिमितप्रत्यायकत्वात्। वाद्यादिशब्दातिरिक्तानामपभ्रंशादिभाषाणां प्रयोगा अपि भ्रष्टसंस्कारा ज्ञेयास्तत्रापि व्याकरणसंस्काराभावात्। एषा वैखरी वाक् सर्वव्यवहारसाधिका। तदुक्तं स्वोपज्ञटीकायाम्—

गौरिव प्रक्षरत्येका रसमुत्तमशालिनी।
दिव्यादिव्येन रूपेण भारती गौः शुचिस्मिता[1] ॥

तथा च—

प्राणेनाप्यायिता सेयं व्यवहारनिबन्धना।
सर्वस्योच्छ्वासमासाद्य न वाग् वदति कर्हिचित् ॥

तथा च—

स्थानेषु विवृते वायौ कृतवर्णपरिग्रहा।
वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना ॥ इति।

## वैयाकरणानां मते ध्वनिः

महाभाष्यकारः पतञ्जलिः पस्पशाह्निके प्रारम्भे प्रोक्तवान्—'प्रतीतपदार्थको लोके ध्वनिः शब्द इत्युच्यते' इति। अर्थात् पदार्थबोधकः शब्दो लोके ध्वनिरित्याख्यायते। अत्र ध्वनिः शब्दापरपर्याय एवेति स्पष्टं भाति, न तु ध्वनिः शब्दभिन्नः कश्चन पदार्थः। स्वयमेव भाष्यकारोऽनुपदं 'तद्यथा—शब्दं कुरु, मा शब्दं कार्षीः, शब्दकार्य्ययं माणवकः इति ध्वनिं कुर्वन्नेवमुच्यते तस्माद् ध्वनिः शब्दः' इति वाक्येन ध्वनिशब्दयोरभेदमवोचत्।

प्रकृतस्थलेऽर्थप्रत्यायको ध्वनिपर्यायः शब्दः कीदृशो भाष्यकाराभिप्रेतो लौकिकः शब्द उताहो स्फोटात्मकः? मन्ये स्फोटात्मक एव, व्याकरणनयानुसारेण स्फोटस्यैवार्थबोधकत्वात्। मा शङ्कीर्यल्लोके वैखर्या एवार्थबोधकता विश्रुता, तथा च स्वयमेव भाष्यकारः स्ववाक्ये लोकपदमुपादात्, लोके तु शब्दार्थयोः सम्बन्धस्य सिद्धत्वात्।

एवं सति सिद्ध्यति यदत्र स्फोटात्मकः शब्दोऽभीष्टः, तथा सति 'अत्र तत्पर्यायस्तदभिन्नो ध्वनिरपि स्फोटरूप एवेष्यते न तु नादात्मको वैखरी वा। प्रमाणयति

---

१. वा० प० १।१४२।

चैतत् प्रदीपकारस्तत्रैव 'अन्यत्र ध्वनिस्फोटयोर्भेदस्य व्यवस्थापितत्वादिहाभेदेन व्यवहारेऽपि न दोषः, द्रव्यादयो न शब्दवाच्या इत्यत्र तात्पर्यात्' इत्यवतरणवाक्येन। समर्थयति च तपरसूत्रस्थस्य 'स्फोटः शब्दः, ध्वनिः शब्दगुणः' इति भाष्यस्यावतरणवाक्यावसरे 'व्यक्तिस्फोटोऽत्र विवक्षितः। स च नित्यः। एतच्च येनोच्चारितेनेत्यत्र पस्पशायां विचारितमिति तत एव बोधव्यम्' इति वाक्येन।

अन्यत्र 'तपरस्तत्कालस्य' इति सूत्रे भाष्यकृता प्रतिपादितम्—स्फोटः शब्दः, ध्वनिः शब्दगुणः। कथम्? भेर्याघातवत्। तद्यथा—भेर्याघातो भेरीमाहत्य कश्चिद् विंशतिपदानि गच्छति, कश्चित् त्रिंशत्, कश्चिच्चत्वारिंशत्। स्फोटस्तावानेव भवति। ध्वनिकृता वृद्धिः।

"ध्वनिः स्फोटश्च शब्दानां ध्वनिस्तु खलु लक्ष्यते।
अल्पो महांश्च केषाञ्चिदुभयं तत्स्वभावतः" ॥ इति।

अत्र ध्वनिस्फोटयोर्भेदो विवक्षितः। अत्र ध्वनिर्व्यञ्जकः, स्फोटश्च व्यङ्ग्यः। स्पष्टीकृतं प्रदीपोद्द्योतकाराभ्याञ्चैतत्।

अन्यत्र—उभयतः स्फोटमात्रं निर्दिश्यते 'रश्रुतेर्लश्रुतिर्भवति' इत्युक्तम्। अस्यार्थः—'कृपो रो लः' इत्यत्रोभयत्र स्थानिन्यादेशे च रत्वलत्वजातिरूपौ स्फोटावेव निर्दिश्येते व्यक्त्युपादानन्तु नान्तरीयकमिति।

भर्तृहरिर्ध्वनिनिरूपणप्रसङ्गे बहूनां मतमुपन्यस्याविचारयत्, तद्यथा वाक्यपदीयब्रह्मकाण्डे स्वोपज्ञटीकायां श्लोकवार्तिककारस्य कुमारिलस्य वचनमेतदुद्धृतवान्—'स्फोटः शब्दो ध्वनिस्तस्य व्यायाम उपजायते' इति। अस्यायं भावः—स्फोट एव शब्दो वाचकस्तस्य व्यञ्जको ध्वनिस्तु व्यायामे कण्ठताल्वाद्यभिघातानुकूले पुरुषप्रयत्ने सत्युपजायत इति ध्वनेर्व्यायामजन्यतया कृतकत्वम्। स्फोटस्य तु तद्व्यतिरेकेण कारणानुपलब्ध्या नित्यत्वम्। एषोऽर्थस्तु सप्तम्यन्तपाठे युक्तः। प्रथमान्तपाठे तु स्फोटः शब्दः ध्वनिस्तु व्यायामो विस्तारो व्यञ्जको वेति।

विज्ञानभिक्षुमते शब्दस्त्रिविधः—वर्णभिन्नो वर्णात्मकः स्फोटात्मकश्च। शङ्खादिषु वागिन्द्रिये वाऽभिहतादुदानवायोर्ध्वनिरुत्पद्यते[1]। स एव ध्वनिर्वीचीतरङ्गन्यायेन ध्वन्यन्तरं जनयति। एवं ध्वन्यन्तरजननपरम्परया ध्वनिः श्रोत्रदेशं सम्बध्नाति[2]। श्रोत्रदेशसम्बद्धस्य प्रथमस्य ध्वनेः परिणामविशेषो नाद इत्याख्यायते। एष नादो वर्णभिन्नः शब्द

---

१. यो० वा०, पृ० ३२४, ध्वनिर्नाम वागिन्द्रियशङ्खादिष्वभिहतस्योदानवायोः परिणामभेदः।
ना० वृ० वृ०, पृ० ३३, ध्वनिर्नाम वागिन्द्रियादिष्वभिहतस्योदानवायोः परिणामभेदः।

२. यो० वा०, पृ० ३२४, येन परिणामेनोदानवायुर्वक्तृदेहादुत्थाय शब्दधारां जनयन् श्रोतृदेशं प्राप्नोति।

उच्यते । स एव च ध्वनिपरिणामविशेषो नादो वर्णात्मकः शब्द इत्यभिधीयते[1] । द्वाभ्यामितरः स्फोटात्मकः शब्दो मानसप्रत्यक्षविषयः[2] । वर्णभिन्नो वर्णात्मकश्च शब्दौ नार्थवाचकौ[3] साहित्याभावाद् आद्ये वर्णाभावादेव सहस्थित्यसम्भवो द्वितीये चाशुविनाशित्वात् ।

अर्थबोधकस्तु तृतीयः स्फोटात्मकः शब्द एव, स च कीदृशः कथञ्च ज्ञेय इति विमृश्यते—वागिन्द्रियस्य (मुखस्य) अष्टानां कण्ठादिस्थानानां मध्ये केनचित् स्थानविशेषेण सहोदानवायोरभिघाताख्यसंयोगाज्जातानां वर्णानामेकैकशः श्रावणप्रत्यक्षात् क्रमशस्तत्तद्वर्णविषयकः संस्कार उदेति । तत्तत्संस्कारेण पदविशेषघटकसमस्तवर्णविषया स्मृतिर्जायते । तादृशस्मृतिसहितेनान्तःकरणेन आनुपूर्व्या विशिष्टस्य पदस्फोटस्य मानसप्रत्यक्षबोधो भवति तेन चार्थज्ञानम्[4] ।

इत्थं क्षणिकैः क्रमिकैर्नानाप्रयत्नसाध्यैः सखण्डैर्वर्णैर्नित्यस्याक्रमस्यैकप्रयत्नसाध्यस्याखण्डस्य पदस्फोटस्य ज्ञानं जायते ।

विषयेऽस्मिन् वाचस्पतिर्मनुते—वर्णसंस्कारसहकृतेन श्रोत्रियेन्द्रियेण पदस्फोटस्य प्रत्यक्षज्ञानं भवति, अर्थात् पदस्फोटज्ञानं श्रावणप्रत्यक्षात्मकम् । विज्ञानभिक्षुस्त्वत्र वर्णसंस्कारजन्यस्मृतिसहकृतेनान्तःकरणेन पदस्फोटस्य प्रत्यक्षता, अर्थात् पदस्फोटज्ञानं मानसप्रत्यक्षात्मकमिति मन्यते ।

एतेषु त्रिविधेषु शब्दभेदेषु पदाख्यः शब्द एव स्फोटः, अर्थस्य स्फुटीकरणात् । इदं च स्फोटाख्यं पदं वर्णेभ्यो भिन्नमभिन्नमुभयरूपम्[5] । यथा वृक्षो बीजाङ्कुरशाखापल्लवादिभ्यो भिन्नोऽभिन्न उभयरूपः । अतो धर्मधर्मिणोर्भेदाभेदविवक्षया अपदोऽपि वर्णो व्यवहारदृष्ट्या पदत्वेन कथ्यते । पदात्मकोऽयं वर्णो वर्णान्तरसहकृतः स्वसम्बद्धमर्थं बोधयितुं योग्यतां धत्ते । यथा गोपदनिष्ठो गकारो वर्णान्तरेणौकारादिना संयुक्त

---

१. यो० वा०, पृ० ३२४, तस्य ध्वनेः परिणामभूतं वर्णावर्णसाधारणं नादाख्यं शब्दसामान्यमेव श्रोत्रस्य विषयः·········स च शब्दो वर्णजातीयत्वेन वर्ण इत्युच्यते ।

२. यो० वा०, पृ० ३२४, तथा चायं तृतीयः शब्दोऽन्तःकरणस्यैव ग्राह्यः ।
ना० वृ० वृ०, पृ० ३३२, अखण्ड एकः स्फोटाख्यः·········अन्तःकरणस्यैव ग्राह्यः ।

३. यो० वा०, पृ० ३२१, वागिन्द्रियजन्यः शब्दो वर्ण एव न तु भृङ्गादिशब्दो नापि वाचकं पदम् ।

४. पूर्वपूर्ववर्णसंस्काराणां तत्स्मृतीनां चान्तःकरणनिष्ठानामन्तःकरणसहकारित्वमेवोचितम् । अतः स्मृतानां वर्णानां मनसैवानुपूर्वी ग्रहीतुं शक्यते ।

५. यो० वा०, पृ० ३२४, तच्च स्फोटपदं गकारादिवर्णेभ्यो भिन्नाभिन्नम्, भेदाभेदयोरनुभवात् ।

आत्मानं गणादिपदेभ्यो व्यावर्तयति, अखण्डेन स्फोटात्मकेन पदेन सह तादात्म्यमाधायार्थं च बोधयति। न ह्येतावता स्फोटस्य नैरर्थ्यं सन्देग्धुं शक्यते, स्थानप्रयत्नभेदेनोच्चरितानां वर्णानामभिन्ननिमित्तं (स्फोटं) विना पदत्वासम्भवात् तादृशदशायां सत्यामर्थबोधासम्भवाच्च।

उत्पत्तिलयशीलानां वर्णानां भिन्नभिन्नक्षणस्थायित्वेन युगपत् साहित्याभावात् पदरूपत्वासम्भवेऽर्थबोधानुपपत्तिः। न हि स्वतन्त्राः प्रत्येकं वर्णा अर्थमवबोधयितुं शक्ताः, अत उच्चरितवर्णैरर्थबोधनाय स्फोटसिद्धान्तः। तस्यायं भावः—वागिन्द्रियेण विशेषक्रमद्वारोच्चरितवर्णसमुदाय एव पदम्। वर्णोत्पत्तिदशायां प्रत्येकवर्णग्राहिश्रावणप्रत्यक्षज्ञानमप्येकैकशो जायते, तेन च तत्तद्वर्णविषयक एकैकशः संस्कारो भवति, तत्तत्संस्कारसहकृतेन चरमवर्णात्मकप्रत्यक्षेणाखण्ड एको घटाद्यात्मकः पदस्फोटोऽभिव्यक्तो भवति। स एवाभिव्यक्तपदस्फोटो घटपदार्थं बोधयति। एवं वाक्यार्थबोधे वाक्यस्फोटोऽभिमतः।

## स्फोटाभिव्यक्तिः

योगसिद्धान्ते पदस्फोटस्याभिव्यक्तिर्नैककालावच्छेदेन भवति; अपि तु क्रमशः प्रथमवर्णेन स्फोटस्य (पदाख्यस्य) अस्फुटा, अनन्तरं क्रमशो द्वितीयादिवर्णैः स्फुटा, स्फुटतरा, स्फुटतमा च भवति[1]। अर्थात् प्रत्येकमपि वर्णाः स्फोटमभिव्यञ्जयन्ति, किन्तु नातिशीघ्रेण स्पष्टतया तेऽभिव्यञ्जकाः; अपि तु पूर्वपूर्वाभिव्यक्तिजातसंस्कासहकृतचरमवर्णं एव स्फोटं स्पष्टं स्फोटयति। दृश्यते च लोकव्यवहारे क्रमिकानुभवपरम्परा, पूर्वमस्पष्टज्ञानमनन्तरं स्पष्टज्ञानमिति[2]।

## साहित्यिकानां निकाये ध्वनिः

साहित्यिकानां निकाये ध्वनिपदेन कोऽर्थोऽभिप्रेत इति विविच्यते। तत्र प्रथमं ध्वनिसम्प्रदायप्रवर्तकस्याचार्यस्यानन्दवर्धनस्य मतं प्राथम्येन प्रस्तूयते—ध्वन्यालोके प्रथमोद्द्योते ध्वनिलक्षणप्रतिपादकत्रयोदशकारिकाया व्याख्यानावसरे लोचनकारेण ध्वनेः पञ्च अर्थाः स्वीकृताः—शब्दः, अर्थः, व्यापारः, प्रतीतिः, काव्यञ्चेति[3]। यद्यप्या-

---

१. त० वै०, पृ० ३२२, केवलभागानुभवेन पदमव्यक्तमनुभूयतेऽनुसंहारधिया तु भागानुभवयोनिसंस्कारलब्धजन्मना व्यक्तमिति विशेषः।

२. त० वै०, पृ० ३२२, अव्यक्तानुभवाश्च प्राञ्चः संस्काराधानक्रमेण व्यक्तमनुभवमादधाना दृष्टाः। स्फोटदर्शनम्, पृ० १०५—

पूर्वापूर्वानुभवजन्यभावनासचिवेऽन्तिमे।
चेतसि स्फुरति स्फोटो रत्नतत्त्वमिव स्फुटम्॥

३. ध्व० लो० एवं चतुष्कमपि ध्वनिः, तद्योगाच्च समस्तमपि काव्यं ध्वनिः।

चार्याभिनवगुप्तैर्ध्वनेः पञ्चाभिधेयाः कथितास्तत्ववश्यमेव किन्तूदाहरणमुखेन ध्वनिकारसम्मता इमेऽर्था इति न प्रमाणीकृताः। एवमेव महामहोपाध्यायश्रीदुर्गाप्रसादमहाभागैः—'ध्वनतीति ध्वनिः शब्दः, ध्वन्यतेऽनेनेति ध्वनिः शब्दादिशक्तिः, ध्वन्यते (यः) इति रसादिरर्थः, ध्वननं ध्वनिरिति रसादिप्रतीतिः, ध्वन्यतेऽस्मिन्निति ध्वनिः काव्यम्, इति ध्वनेः पञ्चार्थान् प्रतिपाद्यास्य मूले 'ध्वनिकारव्यवहारम्' इति वाक्यमेवोपस्थापितं साहित्यदर्पणभूमिकायां किन्तु दृष्टान्तेन तादृशव्यवहारोपपादनेन च न स्पष्टीकृतं न सुदृढीकृतम्। अत इमेऽर्थाः पञ्च ध्वनिकृतोऽभीष्टा न वेति सन्देहनिराकरणाय स्थलान्यन्वेषणीयानि। यद्यपि ध्वनिकृता स्वकारिकायां काव्यविशेषस्यैव ध्वनिरिति संज्ञा कण्ठशः प्रतिपादिता तदेव लोचनकारेणापि तत्रैव लोचने 'कारिकायां तु प्राधान्येन समुदाय एव काव्यरूपो मुख्यतया ध्वनिरिति प्रतिपादितम्' इत्युक्त्वा पञ्चधाऽर्थः प्रकटितस्तत्र किं बीजमिति न जाने; तथापि प्रयते।

**काव्यविशेषे ध्वनिरिति व्यवहारः—**

यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।
व्यङ्क्तः काव्यविशेष स ध्वनिरिति सूरिभिः कथितः॥

इति कारिकायाम्। एतदेवानुसृतं मम्मटेन—"इदमुत्तममतिशायिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः"[१]।

**अर्थे व्यवहारो यथा** "काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः"[२] इति।

काव्यानुशासने—"मुख्याद्यतिरिक्तप्रतीयमानो व्यङ्ग्यो ध्वनिः"[३]। ध्वन्यालोके—प्रथमे हि विद्वांसो वैयाकरणाः····वर्णेषु ध्वनिरिति व्यवहरन्ति····काव्यतत्त्वार्थदर्शिभिर्वाच्यवाचकसंमिश्रः शब्दात्मा काव्यमिति व्यपदेश्यो व्यञ्जकत्वसाम्याद् ध्वनिरित्युक्तः। इत्युक्त्या अर्थोऽपि ध्वनिपदवाच्यो भाति निःसंशयम्। भट्टनायकश्च—

ध्वनिर्नामापरो योऽपि व्यापारो व्यञ्जनात्मकः।
तस्य सिद्धेऽपि भेदे स्यात् काव्येंऽशत्वं न रूपता[४]॥

मम्मटः तटादौ ये विशेषाः पावनत्वादयस्ते चाभिधातात्पर्यलक्षणाभ्यो व्यापारान्तरेण गम्याः। तच्च व्यञ्जनध्वननद्योतनादिशब्दवाच्यमवश्यमेषितव्यम्[५]।

एतावताऽऽयाति यद् व्यञ्जनाव्यापारे ध्वनिशब्दोऽभिप्रेतो मम्मटस्य।

१ का० प्र० १।४  २. ध्व० १;  ३. का० प्र० १।१९।
४. उद्धृतं ध्व० लो०, पृ० ३९;  ५. का० प्र०, का० १८।

काव्यविशेषे व्यवहारो यथा—

यत्रार्थः शब्दो वा ... ... .... .... .... ..... .... .... ।
व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः[1] ॥

एकावल्यां विद्याधरः —[2]शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः ।

विषयेऽस्मिन् दीपशिखाटीकाकारेण चण्डिकाप्रसादशुक्लेन ध्वन्यालोकस्य भूमिकायां युक्तयुक्तिभिर्भट्टनायक-भर्तृहर्युक्तिदिशमनुसृवतो लोचनकारस्य ध्वन्यार्थविषयकं मतं यत्नेन समीक्ष्य निरस्य च तथा प्रसङ्गादागतं महिम-भोज-हेमचन्द्र-विश्वनाथानां ध्वनिविषयकं मतं गड्डलिकाप्रवाहं मत्वा ध्वनिः काव्यविशेष एवेति ध्वनिकारमतं व्यवस्थापितम् । अन्यार्थपरत्वेन प्रतीयमानानि अन्यानि ध्वनिवाक्यानि काव्यविशेषपरकत्वेन उन्नीतानि । भवतु नाम ध्वनिः पञ्चविधः, एकविधो वा, नात्र ममाग्रहः, आचार्यैर्निरूपिते पञ्चविधत्वे मूलं मृग्यम्[3] । न हि मूलान्वेषणाभावे तदपलपितं स्यात्, अपलपितुं तु तदेव भवति यत्सत्त्वे व्यभिचारः सम्भवेत् । एतावदेवात्रोक्त्वाऽत्र किञ्चिदुच्यते—काव्यविशेषो ध्वनिरिति पक्षे "काव्यं च तद्विशेषश्चासौ काव्यस्य वा विशेषः" इति लोचनः ।

विशिनष्टीति विशेषः, वैशिष्टयं गुणालङ्कारोपस्कृतत्वम् । काव्यविशेषस्य ध्वनित्वे काव्यस्य ध्वनित्वं न स्यादिति कर्मधारयसमासाश्रयणम् । विशिष्यते व्यवच्छिद्यत इति विशेषः, शास्त्रादिभ्यश्च व्यवच्छेदो विवक्षितः, काव्यविशेषपदस्यैवार्थवत्त्वे सति परपर्यनुयोगपरिहारः फलिष्यति । पर्यनुयोगः शङ्का, आपत्तिर्वा ।

काव्यस्य शब्दार्थोभयनिष्ठत्वेन काव्यपदेन व्यञ्जकशब्दवद् व्यङ्ग्योऽर्थो रसादिर्गृह्यत एव । तथा सति सिध्यत्यर्थो ध्वनिः, पञ्चविधत्वे तु स्पष्टमेव शब्दार्थावुभौ ध्वनी । एवं सति उभयपक्षे तादृशो ध्वनिः स्फोट एव, अर्थात् स्फोटापरपर्याय एव, अन्यद् वेति विचारणीयमिति ।



---

१. ध्व०; २. एका० १।१३ ।
३. नात्र मूलत्वेन ध्वन्यालोक एवाभीष्टः; अपि त्वन्ये लक्षणलक्ष्यग्रन्था अभिप्रेताः ।

# ब्रह्मप्रपञ्चयोः शङ्करसम्मतनिर्वाच्यत्वानिर्वाच्यत्वसमीक्षणम्

डॉ० आदित्यनाथभट्टाचार्यः
उपाचार्यः, संस्कृतविभागस्य
वर्धमानविश्वविद्यालये

❀ ❀ ❀

श्रुतिस्मृतिपुराणानामालयं करुणालयम् ।
नमामि भगवत्पादं शङ्करं लोकशङ्करम् ॥
शङ्करः शङ्करः साक्षाद् व्यासो नारायणः स्मृतः ।
सन्देहो नैव कर्त्तव्यो यदि मुक्तिं समिच्छति ॥

अथ ब्रह्मणः शाब्दबोधविषयत्वं ( निर्वाच्यत्वं वा ) सम्भवति न वेति मिथो विप्रतिपद्यन्ते बहवो विद्वांसः । शङ्करमते ब्रह्मणो निर्गुणत्वात्, अशरीरित्वात्, अखण्ड-सच्चिदानन्दरूपत्वात्, सर्वभेदराहित्यात्, अत एकाद्वितीयत्वाच्च शाब्दबोधविषयत्वं नास्त्येव । यतो हि सशरीरस्य साकारस्य देशकालादिपरिच्छिन्नस्य सविशेषवस्तुन एव शब्दविषयत्वमुपपद्यते, न पुनर्निर्गुणस्य यथोक्तशुद्धस्वरूपब्रह्मणः शब्दवाच्यत्वमित्युप-पन्नतरं वचः । तथा च भाष्यम्—

'वाङ्मनसातीतम् अविषयान्तःपातिप्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्म' । ( शाङ्करभाष्यम्—३।२।२ ) इति । श्रुतिषु च पुनः पुनः समाम्नायते—

'अशब्दमस्पर्शमरूपमव्ययम्' ( कठोपनिषत् —१।३।१५ ), 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' ( तैत्तिरीयोपनिषत्—२।४।१ ) 'यद्वाचानभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि····' ॥ ( केनोपनिषत् —१।४ ) इत्यादि ।

नन्वेवं ब्रह्मणः शब्दाविषयत्वे सति 'शास्त्रयोनित्वात्' (ब्रह्मसूत्रम्—१।१।३ ) इति सूत्रं कथं प्रवर्त्तते ? तत्र भगवता सूत्रकृता भाष्यकृता च शब्दप्रतिपाद्यं वेदपुराणादि-वाक्यलिङ्गकं वेदान्तवाक्यश्रवणादिजन्यविशुद्धान्तःकरणवृत्तिगम्यं निर्गुणमपि ब्रह्मेति प्रतिपिपादयिषितम् । क्वचित् 'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै० उ० २।१।१ ), 'विज्ञान-मानन्दं ब्रह्म' ( बृ० उ० ३।९।२८ ) इत्यादिश्रुतिषु तत् स्वरूपत उपदिष्टम्, क्वचिद्वा 'तज्जलान्' ( छा० उ० ३।१४।१ ) 'यतो वा इमानि भूतानि जायन्ते····' ( तै० उ० ३।१ ) इत्यादिवाक्येषु चिह्नतया ( तटस्थतया ) सूचितम् । एवमस्य शब्दगम्यत्वं

स्वयमेव घोषयति श्रुतिः—'तत्त्वौपनिषदं पुरुषं वेद' ( बृ० उ० ३।६।२६ ), 'नावेद-विन्मनुते तं बृहन्तम्' ( तै० ब्रा० ३।१२।६।७ ) इत्याद्या । इति चेत् ?

तत्रोच्यते—ब्रह्मज्ञानप्रतिबन्धकाविद्यानिवर्त्तकत्वमेव हि शास्त्राणाम्, न पुनस्तेषां निर्गुणब्रह्मप्रतिपादकत्वमिति विधित्सितमत्र भाष्यकृद्भिराचार्यभगवत्पादैः "तत्तु समन्वयात्' ( ब्रह्मसूत्रम्—१।१।४ ) इति सूत्रव्याख्यायाम् । तथा च भाष्यसन्दर्भः —

"अविषयत्वे ब्रह्मणः शास्त्रयोनित्वानुपपत्तिरिति चेत्, न, अविद्याकल्पितभेद-निवृत्तिपरत्वाच्छास्त्रस्य । न हि शास्त्रमिदन्तया विषयीभूतं ब्रह्म प्रतिपिपादयिषति, किं तर्हि ? प्रत्यगात्मत्वेन अविषयतया प्रतिपादयद् अविद्याकल्पितं वेद्यवेदितृवेदनादिभेदम् अपनयति" । (ब्रह्मसूत्रम्—१।१।४ भाष्यम् ) ।

अयं भावः —वेदान्तवाक्यजन्यशुद्धान्तःकरणवृत्त्या नैव अभेदतत्त्वं सन्निकृष्यते; किन्तु केवलं वेद्यवेदितृवेदनादिभेद एव अपनीयते । न किमपि शास्त्रं वाच्यवाचकभावेन ब्रह्मतत्त्वं निर्धारयति । मनननिदिध्यासनसहकृतवेदान्तवाक्यश्रवणेन सम्यग् ब्रह्मान्तः-करणवृत्तौ सत्यां सकलभेदबुद्धिनिवर्त्तनेन केवलं ब्रह्मज्ञानप्रतिबन्धकब्रह्मविषयकासम्भा-वना-विपरीतभावनाविनिवृत्तिरेव भवति, न तु तेन कस्यापि ब्रह्मप्रतिपत्तिः स्यात् । 'तत् केन कं पश्येत्, केन कं विजानीयात्' ( बृ० उ० २।४।१३ ), 'विज्ञातारमरे केन विजानीयात्' ( बृ० उ० ४।५।१५ ), 'अविज्ञातं विजानतां विज्ञातमविजानताम्' (केनो-पनिषत्—२।३ ) इत्यादिवाक्यैः अविद्याकल्पितभेदनिबन्धनं प्रमाणप्रमेयादिव्यापारं निषेधत् शास्त्रं ब्रह्मतत्त्वं ज्ञापयत्येव केवलम् । अतः शास्त्रे सर्वत्र निषेधमुखाश्रयेण आत्मनि अनात्मभ्रान्तिरेव निवर्त्तते । ततश्च शुद्धान्तःकरणे स्वानुग्रहादेव स्वप्रकाशं ब्रह्म प्रतिबिम्बितं भवतीत्येवोपनिषद्वचःसारः । तस्माच्छब्दजन्यवृत्तिविषयत्वेऽपि वृत्तिप्रतिफलितचैतन्येन स्फुरणाभावात्, न कथमपि ब्रह्मणः शाब्दबोधविषयत्वम् उपपद्यते ।

अथ शङ्केत, कथं तर्हि 'एकधैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम्' (बृ० उ० ४।४।२०) इति वाक्ये 'अनुद्रष्टव्यमि'त्युक्त्या ब्रह्मणः प्रमेयत्वाभिधानम्, कथञ्च पुनस्तत्रैव 'अप्रमेयम्' इत्युक्तिविरोधपरिहारः स्यादिति ? तत्रेदं प्रतिविधीयते—

निषेधमुखेनैव शास्त्रे प्रतिपादनीयत्वाद् ब्रह्मणः शास्त्रप्रमाणकत्वेन प्रमेयत्वं सङ्गच्छते । तथा हि आगमजन्यान्तःकरणवृत्त्या अतद्व्यावृत्त्यैव सर्वधर्मवर्जितस्य स्वयं-प्रकाशस्य ब्रह्मणः शास्त्रेण बोधितत्वाद् अप्रमेयत्वमवधार्यते । एवं प्रकाशविषयत्वेन शास्त्रे विधिमुखेन प्रतिपादयितुमशक्यत्वाद् ब्रह्मणोऽप्रमेयत्वमपि युज्यते । अत्र घटादिवद् ब्रह्मण आगमनिरपेक्षेण प्रत्यक्षादिप्रमाणेन नैव विज्ञातं भवति इत्यतो ब्रह्म खलु अप्रमेयं भवति । अतः सर्वं सुसमञ्जसम् । तथा चोक्तं सुष्ठु स्वयं भगवता शङ्करेण—

'ननु विरुद्धमिदमुच्यते, अप्रमेयं ज्ञायत इति च। ज्ञायत इति प्रमाणैर्मीयत इत्यर्थः, अप्रमेयमिति च तत्प्रतिषेधः। नैष दोषः, अन्यवस्तुवदागमातिरिक्तप्रमाणप्रमेयत्वप्रतिषेधार्थत्वात्। यथा अन्यानि वस्तूनि आगमनिरपेक्षैः प्रमाणैर्विषयीक्रियन्ते, न तथैतदात्मतत्त्वं प्रमाणान्तरेण विषयीकर्तुं शक्यते। सर्वस्यात्मत्वे केन कं पश्येत्, विजानीयादिति प्रमातृप्रमाणादिव्यापारप्रतिषेधेनैवागमोऽपि विज्ञापयति, न त्वभिधानाभिधेयलक्षणवाक्यधर्माङ्गीकरणेन। तस्माद् नागमेनापि स्वर्गमेर्वादिवत् तत् प्रतिपाद्यते। अनात्मभावनिवृत्तावात्मभावः स्वात्मनि स्वाभाविको यः स केवलो भवतीत्यात्मा ज्ञायत इत्युच्यते। स्वतश्चाप्रमेयः प्रमाणान्तरेण न विषयीक्रियते इत्युभयमप्यविरुद्धमेव' ( बृ० उ० ४।४।२० भाष्यम् )।

इदं त्ववधेयम्, यद्यपि ब्रह्मणो वेदान्तवाक्यजन्यमनोवृत्तिवेद्यत्वेन कथञ्चित् प्रमेयत्वमस्तीति तर्क्यते। तथा हि, ब्रह्मण्यज्ञाननिवृत्तये वृत्तिव्याप्तिरपेक्ष्यते। तदुक्तं विद्यारण्यमुनिना—

'स्वप्रकाशोऽपि साक्ष्येव धीवृत्त्या व्याप्यतेऽन्यवत्'। (पञ्चदशी—७।९०)

'ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता'। (तदेव—७।९२)

अतो ब्रह्मणो वृत्तिव्याप्यत्वमेव, न तु पुनः प्रकाशविषयत्वमित्यभिप्रेत्योक्तं भगवता शङ्करेण—

"अज्ञानाध्यारोपणनिवृत्तिरेव 'आत्मानमेवावेदि'त्युक्तम्, नात्मनो विषयीकरणम्"। ( बृहदारण्यकोपनिषत्—१।४।१० भाष्यम् )

ननु वृत्तिव्याप्यत्वेन ब्रह्मणः प्रमेयत्वमस्तु। यथोक्तं चानन्दगिरिणा—'वृत्तिव्याप्यत्वेन मेयत्वम्' ( बृ० उ० ४।४।२०—आनन्दगिरिः )। रत्नप्रभाकृताप्युक्तम्—'वेदान्तजन्यवृत्तिकृताविद्यानिवृत्तिफलशालितया शास्त्रप्रमाणकत्वम्' ( ब्रह्मसूत्रम्—१।१।४—भाष्यरत्नप्रभा )।

तस्माद् ब्रह्मणः शास्त्रगम्यत्वमस्त्विति चेत्, तथापि नैतन्मनोरमम्। ब्रह्मान्तःकरणवृत्त्या ब्रह्मविषयकाज्ञाननिवृत्तिरेव, ततस्तज्जन्यारोपनिषेध एव, आरोपजन्ययावद्दुःखध्वंस एव च भवति, न तु ब्रह्मस्वरूपमोक्षफललाभः।

वस्तुतस्तु निर्गुणं ब्रह्म उपलब्धिमात्रगम्यं भवति, न तु वेदान्तवाक्यजन्यवृत्तिगम्यं भवेत्। अन्तःकरणवृत्तेः पुरुषविचारादिसाध्यत्वेन अनित्यत्वाद् नैव नित्यमोक्षप्रयोजकत्वम्। किञ्च, साकारस्यैव वस्तुनस्तदाकारेणाकारिताया अन्तःकरणवृत्तेः सम्भवाद् निराकारनिर्गुणब्रह्माकाराकारितान्तःकरणवृत्तिरेव न भवितुमर्हति। अपि च 'साक्षी चेता केवलो निर्गुणश्च' ( श्वेताश्वतरोपनिषत्—६।११ ) इत्यादिश्रुतिभिः ब्रह्मण एव साक्षित्वोपदेशात् तद्भिन्नस्य तु साक्षिभास्यत्वेन जडत्वात् अन्तःकरणवृत्तेरपि

साक्षिभास्याया जडत्वमापद्यते। अतो भासकत्वाभावाद् नान्तःकरणवृत्तेर्ज्ञानत्वमस्तु। ज्ञानमेव हि सर्वदा प्रकाशशीलं भवति। यन्न भासते, न तस्य ज्ञानत्वम्। तत्र प्रकाश-स्वभावत्वं चेतनस्यैव युक्तम्। अन्तःकरणवृत्तेस्तु अचेतनत्वाद् विषयप्रकाशनसामर्थ्यं नास्ति। अतस्तस्या न ज्ञानत्वम्, न वा अज्ञाननाशकत्वम्। विद्यारण्यादिभिर्वृत्तेः ज्ञानत्वं यदुक्तं तद्धि व्यवहारमनुरुध्यैव उक्तमिति औपचारिकमेव तत्, न तु तात्त्विकम्। एवम् अन्तःकरणवृत्तेः प्रकृतज्ञानत्वानुपपत्तेर्ब्रह्मणः शब्दजन्यज्ञानविषय-त्वाभाव एव सिद्ध्यतितराम्। अपि च 'तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति' (कौ० उ० २।५।१५) इति श्रुतेश्चैतन्यरूपस्य वृत्त्युपहितचिदाभासस्यैव भासकत्वेन ज्ञानत्वम्, ज्ञानत्वाच्च अज्ञाननाशकत्वमपि समास्थेयम्; किन्तु ब्रह्मणः स्वप्रकाशत्वात् तत्र ब्रह्माकारवृत्त्युपहितचिदाभासव्याप्यत्वमपि (फलव्याप्यत्वमपि) न प्रसज्यते। तदुक्तं पञ्चदश्याम्—

'फलव्याप्यत्वमेवास्य शास्त्रकृद्भिर्निवारितम्।
स्वयं प्रकाशमानत्वान्नाभास उपयुज्यते'॥ (७।९०)

एवं फलव्याप्यत्वासम्भवाद् ब्रह्मणोऽप्रमेयत्वमेव सिद्धमिति[1] सर्वमनवद्यम्।

अयमत्र गूढाभिसन्धिः—ईश्वरानुग्रहादेव हि शास्त्राचार्योपदेशादिसंस्कृते विनिर्मले मनसि ब्रह्मणः स्वरूपाविर्भावो भवति। स च अवगत्यभिव्यक्त्युपलब्ध्यात्मको नित्यो बोद्धव्यः। तथा हि अभिव्यक्तिरूपब्रह्मस्वरूपविज्ञानं स्वतःसिद्धत्वाद् नित्यमेव भवति। तच्च नित्यमोक्षप्रयोजकं नित्यनिरतिशयसच्चिदानन्दस्वरूपं मोक्षभूतं ब्रह्मैव भवति। अत एव ब्रह्म खलु नित्यम्, उपलब्धिगम्यमेव भवति, न तु पुनस्तच्छास्त्र-वाक्यनिर्वाच्यं स्यादिति तत्त्वविदां परामर्शः। तथा च श्रुतिः—

नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन।
यमेवैष वृणुते तेन लभ्यस्तस्यैव आत्मा विवृणुते तनूं स्वाम्॥
(कठोपनिषत्—१।२।२३)

अथ कथ्येत, वाङ्मनसोरगोचरत्वेन ब्रह्मण एव अनिर्वाच्यत्वमस्तु, कथं पुन-रद्वैतिनां मतेन प्रत्यक्षादिप्रमाणसन्निधापितस्य विश्वप्रपञ्चस्यानिर्वाच्यत्वम्। जगतो ज्ञानविषयत्वेन सत्त्वात् सच्छब्दवाच्यत्वं कथं न स्यादिति।

तत्रोच्यते—प्रतीयमानत्वं सत्त्वमिति मीमांसकाद्यभिमतं सत्त्वलक्षणमस्मा-भिर्न गृह्यते, युक्तिपराहतत्वात्। अन्यथा रज्जुसर्पादीनां स्वाप्निकविषयाणां प्रतीय-मानत्वेन सत्यत्वापत्तेः; किन्तु त्रिकालाबाध्यत्वं सदैकरूपेणावस्थितत्वं वा सत्त्वमित्यु-

---

१. स्वप्रकाशब्रह्मणो वृत्त्यभिव्यक्तस्फुरणाविषयत्वाद् अप्रमेयत्वम्। (ब्रह्मसूत्रम्—१।१।४ भाष्यरत्नप्रभा)

परोक्तम् आचार्यभगवत्पादैः। तच्च ब्रह्मण एवास्ति, तद्दृष्ट्या ब्रह्मैव हि शास्त्रतः कथञ्चित् सच्छब्दनिर्वाच्यं भवति। जगतस्तु उत्पत्तिविनाशशीलत्वेन अनित्यत्वात् तत्र त्रिकालाबाध्यत्वरूपसत्त्वलक्षणायोगः, तथा नित्यपरिणामशीलत्वेन तस्य नियत-भिन्नरूपत्वात् सदैकरूपत्वलक्षणसत्त्वलक्षणायोगश्च; ततश्च जगतः सच्छब्दवाच्यत्वं नोपपद्यतेतराम्। अथ असत्त्वेन जगतो निर्वाच्यत्वमस्तु, स्वयं भगवता तस्य मिथ्यात्वो-पदेशादिति चेत्, नालं साम्प्रतं वक्तुम्। ज्ञानाविषयत्वमेव हि असत्त्वम्। तच्च जगतो नास्ति, तस्य प्रत्यक्षादिज्ञानविषयत्वसिद्धेः। इत्यतोऽकामेनापि जगतः सदसदनिर्वाच्य-त्वमेवाभ्युपेतव्यम्।

अथ शङ्केत, सदसद्विलक्षणं वस्तु न सम्भाव्यते, सत्त्वम् असत्त्वं चेति द्विविधमेव हि वस्तुतत्त्वम्। तथा चोक्तं मीमांसकैः —

स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।
वस्तुनि ज्ञायते किञ्चिद् रूपं कैश्चित् कदाचन॥

तथा हि स्वरूपेण सत्त्वम्, पररूपेण च असत्त्वं भवतः। यथा रज्जुसर्पस्थले रज्जुरूपेण सत्त्वम्, सर्परूपेण तु असत्त्वम्। तद्विलक्षणं च नास्ति किमपि वस्तुजातम्। घटः अघटश्च इत्युच्यमाने यथा निखिलवस्तूनामेवोपादानम्, न च तदतिरिक्तं किञ्चिदस्ति वस्तुसत्, एवमिहापि बोध्यम्। अतो जगतः सदसदनिर्वाच्यत्वोक्तिः किं कथिका स्यादिति, तत्र प्रत्युच्यते—

अत्र परेषां यत् पररूपेण प्रतीयमानस्य असत्त्वकल्पनं तन्नैव न्याय्यम्। न हि पररूपेण प्रतीतिविषयीभूतानां रज्जुसर्पादीनाम् अलम् असत्त्वं कल्पयितुम्। न च असताम् आकाशकुसुमादीनां कथमपि प्रतीतिविषयत्वं शक्यते सम्पादयितुम्। प्रतीते-रविषयस्यैव हि असत्त्वं व्यवस्थाप्यते। सत्त्वमपि च तत्त्वतः सर्वेषां स्वरूपभूतस्य ब्रह्मण एव अभ्युपगम्यते। जगतश्च तदुभयविलक्षणत्वेन अनिर्वाच्यता एव सङ्गच्छते।

वस्तुतस्त्वसतो लक्षणं नालमस्माभिराविष्कर्त्तुम्। तथैवाद्वैतमते सतोऽपि लक्षणं न शक्यं निर्वक्तुम्। असाधारणधर्म एव हि लक्षणम्। सर्वधर्मशून्यता चासत्त्वमिति। अतो लक्षणायोगाद् न खलु असतो निरूपणं भवति। न चासत्त्वं तत्त्वं किञ्चित्, तस्य भावो धर्मो वा तत्त्वमिति व्युत्पत्तेः। अपोहनमात्रसारम् असद् अव्य-पदेश्यं भवति। तस्मात् शब्दोच्चारणजनितबोधविषयाभावाद् असतः खपुष्पादेरभि-धानमिहाकिञ्चित्करमेव स्यात्। अतस्तस्यापि तत्त्वतो लक्षणेन निरूपणं न सम्भवेत्। जगदपि सदसद्विलक्षणमित्यास्थीयते चेत्, विरुद्धधर्मावगाहितया न निर्देश्यं भवति।

तदेतावता ब्रह्माद्वैतवादिभगवच्छङ्कराचार्यमतेन सद् ब्रह्म, असत् खपुष्पादिकम्, सदसद्भिन्नं जगच्चेति सर्वमेव स्वरूपेण निरूपणानर्हम् अनिर्वाच्यम् अव्याख्येयं वा भवतीति सुस्थित एव भाववादः। एवं सति पुनश्चिन्तनीयम्, कथं तर्हि ब्रह्मणः सत्त्वेन निर्वाच्यत्वम्, कथं वा खपुष्पादीनामसत्त्वेन निर्वाच्यत्वम्, ततश्च कथङ्कारं पुनः सदसद्विलक्षणत्वेन जगतोऽनिर्वाच्यत्वं समुद्घोष्यतेऽद्वैतवादिभिः ? नित्यनिरतिशयाखण्डवस्तुसतो ब्रह्मणः, प्रत्यक्षादिज्ञानागोचरस्य चासतः खपुष्पादेः लक्षणप्रमाणाभ्यां निरूपणासम्भवेऽपि देशकालादिपरिच्छेदवत्त्वेन प्रत्यक्षादिप्रमाणसिद्धत्वाद् नामरूपादिव्याकृतस्य जगतो निरूपणं कथं न स्यात् ? एतेन स्वसिद्धान्तव्याघात एव भवति। तत्रोच्यते—पारमार्थिकसत्तावत्त्वाद् ब्रह्मणः सत्यत्वम्, तुच्छसत्ताकत्वात् खपुष्पादीनामलीकत्वम्, जगतस्तु दृष्टिभेदेन व्यावहारिकसत्तावत्त्वेन प्रातिभासिकसत्तावत्त्वेन च तदुभयवैलक्षण्याद् अनिर्वाच्यत्वं मिथ्यात्वं वा इत्यभ्युपगतमद्वैतिभिर्दार्शनिकैस्तत्त्वबुभुत्सूनां बोधनाय। अथोच्येत, ब्रह्माद्वैतवादिनां मते ब्रह्मणः शब्दस्पर्शादिगुणशून्यत्वोपदेशेन शरीराकारादिराहित्योपदेशेन च शून्यवादानुप्रवेशः स्यादिति। तत्रोच्यते—ब्रह्मणोऽशरीरत्व-निराकारत्व-शब्दस्पर्शादिविहीनत्वोपदेशेन तस्य अपरिच्छिन्नत्व-शुद्धत्व-निर्गुणत्वप्रदर्शनद्वारा सदद्वैततत्त्वमेवोपस्थाप्यते। न च पुनर्जगतः सदसद्विलक्षणत्वकथनेन निःस्वभावरूपशून्यत्वसम्पादनम्; अपि तु सृष्टिदृष्टिवादिमतानुसारेण जगतो व्यावहारिकसत्तावत्त्वात्, दृष्टिसृष्टिवादिमतानुसारेण च तस्य प्रातिभासिकसत्तावत्त्वाद् जगतो माध्यमिकबौद्धाभिमततुच्छसत्ताकत्वलक्षणशून्यत्वनिरसनं कृतमित्यलमनल्पजल्पनेन।

शङ्करं शङ्कराचार्यं केशवं बादरायणम्।
सूत्रभाष्यकृतौ वन्दे भगवन्तौ पुनः पुनः॥



# काव्यहेतुविमर्शः

डॉ० राजदेवमिश्रः

कुलपतिचरः,

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

वाराणसी

❀ ❀ ❀

संस्कृतालङ्कारशास्त्रीयपरम्परा नितरामुदात्ता समृद्धा प्राचीना चास्ति। एकतः संस्कृतेऽलौकिकप्रतिभामण्डितैः कविभिः स्वालौकिककाव्यसृष्टिभिस्तस्य (संस्कृतस्य) भाण्डागारं परिपूर्णतां नीतम्, पुनरपरतः काव्यतत्त्वमीमांसकैरलङ्कारशास्त्राचार्यैस्तस्य काव्यतत्त्वचिन्तनपरम्पराऽपि नितरां समृद्धिं प्रापिता। परम्परायामस्यां काव्यसम्बद्धसर्वविषयाणां सम्यग् विचारो जातः। काव्यतत्त्वविचारप्रसङ्गे आचार्याणां सूक्ष्मेक्षिका काव्यहेतुं प्रत्यपि समाकृष्टा। तेषां समक्षमियं समस्या सहजतः समुपस्थिता यदलौकिककाव्यनिर्मितौ कानि तत्त्वानि कारणत्वेन तिष्ठन्ति? यद्वशाद्विनिर्मिता काव्यसर्जना सहृदयजनसरसचेतांसि समाह्लादयन्ती तन्निर्मातृकवियशांसि विस्तृते जगति विस्तारयति। प्रश्नमिमं समाधातुं संस्कृतालङ्कारशास्त्रे भामह-दण्डि-वामन-रुद्रटानन्दवर्धन-मम्मट-हेमचन्द्र-वाग्भट-पण्डितराज-राजशेखरप्रभृतिभिः संस्कृतालङ्कारशास्त्रमर्मज्ञैः सर्वाङ्गपूर्णं विवेचनं विहितम्। आचार्याणां समेषां काव्यहेतुविवेचनावलोकनेन दृष्टिपथमायाति तथ्यमिदं यदस्मिन् विषये परस्परं मतभेदोऽस्त्याचार्याणाम्।

आचार्यभामहेन स्वीयकाव्यालङ्कारनाम्नि ग्रन्थे नामतः काव्यहेतुचर्चा न कृता। तेनाधस्तनासु कारिकासु काव्यनिर्माणोपादानानामुल्लेखो विहितः —

गुरूपदेशादध्येतुं शास्त्रं जडधियोऽप्यलम्।
काव्यं तु जायते जातु कस्यचित् प्रतिभावतः॥
शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथाः।
लोको युक्तिः कलाश्चेति गन्तव्या काव्यगैर्ह्यमी॥
शब्दाभिधेये विज्ञाय कृत्वा तद्विदुपासनम्।
विलोक्यान्यनिबन्धांश्च कार्यः काव्यक्रियादरः[1]॥

---

१ काव्यालङ्कारः —१।५, ९, १०।

उपर्युक्तकारिकात्रितये काव्यहेतुत्वेन प्रतिभा, व्युत्पत्तिरभ्यासश्च सङ्केतिताः। प्रथमकारिकायां 'काव्यं तु प्रतिभावतः कस्यचिद् जातु जायते' इति कथनेन तेन काव्य-हेतुत्वेन प्रतिभामुक्त्वा साऽनिवार्यकाव्यकारणत्वेनाङ्गीकृता। द्वितीयकारिकायां काव्यरचनायै छन्दोव्याकरणादिशास्त्राणां लोकव्यवहारस्य कलायाश्च मननमपेक्षितं विज्ञाप्य तेन प्रकारान्तरेण व्युत्पत्तिरेवेङ्गिता। तृतीयकारिकायां काव्यज्ञोपासनां शब्दार्थज्ञानम् अन्यलेखकरचनाश्रयञ्च विधायैव काव्यप्रणयने प्रवृत्तिर्विधेयेति कथनेन तेन वस्तुतोऽभ्यासस्य सङ्केतः प्रदत्त इति वक्तुं पार्यते।

दण्डी स्वकाव्यादर्शे नैसर्गिकीं प्रतिभामनेकशास्त्रकाव्यादिविमर्शजनितज्ञानं प्रगाढमभियोगञ्चैतत् त्रितयं च काव्यसम्पदः कारणत्वेन मनुते—

नैसर्गिकी च प्रतिभा श्रुतं च बहुनिर्मलम्।
अमन्दश्चाभियोगोऽसौ कारणं काव्यसम्पदः[1] ॥

कारिकागतेन श्रुतेतिशब्देन व्युत्पत्तिः, अभियोगेति पदेन चाभ्यासोऽभिप्रेत इति दण्डिवचनेनैव ज्ञातुं शक्यते। उक्तकारिकायां 'कारणम्' इत्येकवचनप्रयोगेण वक्तुमेत-च्छक्यते यद् दण्डी काव्यनिर्माणे प्रतिभादीनां समस्त(सम्मिलित)हेतुत्वमेवाङ्गीकुरुते। दण्डिना मतमिदमवश्यमेव ध्येयं यत् प्रतिभाया अभावेऽपि श्रुतेन (व्युत्पत्त्या), यत्नेन (अभियोगेन अभ्यासेन) च कवित्वसिद्धिः शक्या—

न विद्यते यद्यपि पूर्ववासना गुणानुबन्धिप्रतिभानमद्भुतम्।
श्रुतेन यत्नेन च वागुपासिता ध्रुवं करोत्येव कमप्यनुग्रहम्[2] ॥

दण्डिवचनेनानेन वक्तुमिदं समीचीनं यदुत्कृष्टकवित्वं निर्मातुमुक्तहेतुमपेक्ष्यते; परन्तु सहजप्रतिभामन्तराऽपरहेतुद्वितयं (श्रुतम् अभियोगश्च) समाश्रित्यापि सामान्यं काव्यं रचयितुं शक्यमेव। समुत्कृष्टं काव्यन्तु दण्डिना विचारेऽपि प्रतिभां विना न कर्तुं शक्यते। वस्तुतो दण्डी सहजप्रतिभासम्पद्विहीनं जनमपि श्रुतेनाभियोगेन च कवित्वं कर्तुं प्रोत्साहयन्निव लक्ष्यते।

वामनेन काव्यालङ्कारसूत्रे काव्यहेतुत्वं विशदं विचारितम्। तेन काव्यहेतु-शब्दस्थाने काव्याङ्गशब्दः प्रयुक्तः। तन्मते त्रीणि काव्याङ्गानि सन्ति—

'लोको विद्या प्रकीर्णञ्चेति काव्याङ्गानि'[3]।

अर्थात् लोकः, विद्या, प्रकीर्णं चैतत्त्रयं काव्यहेतुत्वमुपयान्ति। लोकशब्देन स स्थावरजङ्गमात्मकलोकस्य वृत्तमपेक्ष्यते—

---

१. काव्यादर्शः—१।१०३ ; २. तदेव —१।१०४ ; ३. काव्यालङ्कारसूत्रम्।

'लोकवृत्तं लोकः। लोकः स्थावरजङ्गमात्मा। तस्य वर्तनं वृत्तमिति[1]' ॥

विद्याशब्देन शब्दस्मृतिः (शब्दानुशासनम्), अभिधानकोशः (शब्दकोशः), छन्दोविचितिः (छन्दःशास्त्रम्), कलाशास्त्रम् (चतुःषष्टिकलाप्रतिपादकशास्त्रम्), कामशास्त्रम्, दण्डनीतिः (कौटिल्यरचितार्थशास्त्रं) चाभिप्रेताः —

'शब्दस्मृति-अभिधानकोश-छन्दोविचिति-कला-कामशास्त्र-दण्डनीतिपूर्वा(विद्या)'[2]।

एतासां विद्यानां परिज्ञानं काव्यनिर्मितौ सहायकं भवति। शब्दस्मृतेरर्थाद् व्याकरणात् शब्दशुद्धिर्भवति। व्याकरणज्ञानेन कविः स्वकाव्ये साधुशब्दान् प्रयोक्तुं सामर्थ्यमेति। अभिधानकोशतः (शब्दकोशतः) पदार्थनिश्चयो भवति, येन कविः समीचीनपदानि निबद्धुं प्रभवति। सुकवित्वस्य कृते छन्दःशास्त्रज्ञानमपेक्ष्यते, तद्विना छन्दसां प्रयोगे संशयो जायते। तन्निवृत्तये (संशयनिवृत्तये) छन्दःशास्त्रपरिज्ञानमुपयुज्यते। कलातत्त्वज्ञानमन्तरा काव्ये कलावस्तु सम्यग् विरचयितुं न शक्यतेऽतः कलाशास्त्रज्ञानस्य महत्यपेक्षा। कामचारस्य परिज्ञानाय कामशास्त्रस्य बोध आवश्यकः। सन्धिविग्रहादिषड्गुणानां समुचितप्रयोगो नयस्तद्विपरीतोऽपनयः कथ्यते। नयापनयज्ञानमन्तरेण काव्ये नायकप्रतिनायकगतव्यवहारं प्रदर्शयितुं न पार्यतेऽतो दण्डनीति-(अर्थशास्त्र) ज्ञानेन काव्यरचनायां साहाय्यमधिगम्यते। नयानयरूपदण्डनीतिज्ञानेन काव्यशरीरभूतस्य वृत्तस्य वैचित्र्यं सम्पाद्यते।

वामनमते 'प्रकीर्णाभिधाने हेतौ लक्ष्यज्ञत्वमभियोगः। वृद्धसेवा, अवेक्षणम्, प्रतिभानम्, अवधानञ्च परिगण्यन्ते[3]। अन्यविरचितकाव्येषु परिचयो लक्ष्यज्ञत्वमुच्यते। काव्यावलोकनाभ्यासादेव काव्यविरचनायां शक्तिर्जायते। काव्यविरचनाय कृत उद्यमोऽभियोग उच्यते। स (अभियोगः) कवित्वोत्कर्षं विधत्ते। काव्यारम्भकोपपदे सेवा वृद्धसेवाऽभिधीयते। ततः काव्यविधाया निपुणता (संक्रान्तिः) भवति। काव्यविरचन उपयुक्तपदानां ग्रहणेन तथाऽनुपयुक्तपदानां त्यागेन रचनासौन्दर्योपयोगित्वपरीक्षणमेवावेक्षणमस्ति। कवित्वस्य बीजं प्रतिभानम् (अर्थात् प्रतिभा) अस्ति। कवित्वबीजभूतं प्रतिभानं कश्चिज्जन्मान्तरागतसंस्कारविशेषोऽस्ति यस्माद्विना काव्यं न निष्पद्यते निष्पन्नं वा हास्यास्पदं भवति।

चित्तस्यैकाग्रताऽर्थाद् बाह्यार्थनिवृत्तिरवधानं कथ्यते। अवहितमर्थादेकाग्रं चित्तमभिनवपदार्थान् द्रष्टुं समर्थं जायते। वामनः कथयति यदुक्तमवधानं (चित्तैकाग्रता) निर्जनदेशाद् रात्रेश्चतुर्थप्रहरकालाच्चाधिगन्तुं शक्यते। ब्राह्ममुहूर्त्तप्रभावाच्चित्तं

---

१. काव्यालङ्कारसूत्रम्—१।३।१२ ;　　　　२. तदेव—१।३।३।

३. लक्ष्यज्ञत्वमभियोगो वृद्धसेवा अवेक्षणं प्रतिभानमवधानञ्च प्रकीर्णम्।

(काव्यालङ्कारसूत्रम्—१।३।१३)

लौकिकविषयेभ्यो विरक्तं सत्प्रसन्नतां याति[१]। काव्यहेतुविषयके वामनमते वस्तुद्वयमुल्लेख्यमस्ति। प्रतिभानं (प्रतिभां) कवित्वबीजत्वेन मन्यमानोऽपि स काव्याङ्गत्रये प्रतिभामङ्गद्वयानन्तरमर्थाल्लोकविद्यानन्तरं तृतीये काव्याङ्गे प्रकीर्णे स्थापितवान्। पुनरपरतः सोऽवधानं काव्यरचनासहायकत्वेनोरीकरोति। तन्मते एकाग्रचित्तो जन एवार्थवान् (काव्यवस्तूनि) साक्षात्कृत्य स्वकाव्ये तानि निबद्धुं प्रभवति।

रुद्रटः स्वप्रणीतरुद्रटालङ्कारे कथयति यदसारपरित्यागात् (दोषत्यागात्) सारग्रहणात् (अलङ्कारोपादानात्) काव्यं चारुत्वमाधत्ते। अतः चारुकाव्यनिर्माणे शक्तिः, व्युत्पत्तिः, अभ्यासश्चाभीष्टाः —

तस्यासारनिरासात् सारग्रहणाच्च चारुणः करणे।
त्रितयमिदं व्याप्रियते शक्तिर्व्युत्पत्तिरभ्यासः[२]॥

शक्तिस्वरूपं प्रकाशयितुं स वक्ति यत् कवेः सुसमाहिते प्रतिपादनसमर्थानि पदानि झटित्येव प्रतिभान्ति, सा शक्तिरस्ति। वस्तुनो यद्वशाद्धृदयङ्गमौ नानाविधौ शब्दार्थौ प्रतिभासेते, सा शक्तिरित्यभिधीयते—

मनसि सदा सुसमाधिनि विस्फुरणमनेकधाभिधेयस्य।
अक्लिष्टानि पदानि च विभान्ति यस्यामसौ शक्तिः[३]॥ १५॥

इयमेव शक्तिर्दण्डिप्रभृतीनामाचार्याणां मते प्रतिभापदेनोक्ता। रुद्रटमते शक्तिर्द्विविधा भवति—१. सहजा, २. उत्पाद्या च। पुंसा सहोत्पन्ना सहजा (प्रतिभा) प्रशस्यतरा भवतीति रुद्रटाभिमतम्। तद्यथा—

प्रतिभेत्यपरैरुदिता सहजोत्पाद्या च सा द्विधा भवति।
पुंसा सह जातत्वादनयोस्तु ज्यायसी सहजा[४]॥ १६॥

सहजा शक्तिर्न केवलं पुंसा सहोत्पन्नत्वादेव ज्यायसी; अपि तु सा स्वसंस्काराय केवलमभ्यासमपेक्षते न तूत्पत्त्यर्थमतः सा ज्यायसी। एतद्विपरीतमुत्पाद्या शक्तिस्तु महता कष्टेन जन्यतेऽतः सा न ज्यायसी—

स्वस्यासौ संस्कारे परमपरं मृगयते यतो हेतुम्।
उत्पाद्या तु कथञ्चिद् व्युत्पत्त्या जन्यते परमा[५]॥ १७॥

रुद्रटविचार उचितानुचितत्वविवेको व्युत्पत्तीति पदेनोच्यते। अयं विवेकः (परिज्ञानम्) छन्दसो व्याकरणस्य, नृत्यादिविषयकभरतादिप्रणीतशास्त्रस्य, लोकेषु चराचरादिस्वरूपनियमबोधकलोकशास्त्रस्य नाममालापठितपर्यायशब्दरूपपदानामभि-

---

१. काव्यालङ्कारसूत्रम्—१।३।१३; २. काव्यालङ्कारः; ३. तदेव। ४. तदेव; ५. तदेव।

धेयार्थविषयकप्रयोगनिश्चिततायाश्च ज्ञानाज्जायते । रुद्रटमते व्युत्पत्तिविवेचनमिदं संक्षेपतोऽस्ति, विस्तृता व्युत्पत्तिस्तु सर्वविषयज्ञानमेवास्ति, यतो हि संसारे नास्तीदृशः शब्दोऽर्थो वा यः काव्याङ्गत्वं न याति । अस्यायमेव भावो यत्काव्यविषयपरिधेर्बहिर्नास्ति किञ्चिदप्यस्मिन् संसारेऽतः काव्यविरचनायां सर्वज्ञताऽपेक्ष्यते—

विस्तरतस्तु किमन्यत्तत इह वाच्यं न वाचकं लोके ।
न भवति यत्काव्याङ्गं सर्वज्ञत्वं ततोऽन्यैषा[1] ॥ १९ ॥

शक्तिव्युत्पत्तिभ्यां साकमभ्यासोऽपि नितरामपेक्षणीयः काव्यविरचनाय । उक्तप्रतिभासम्पन्नस्य सर्वज्ञतामवाप्तस्य च कवेः कृत आवश्यकमिदं यत् स सुकविसन्निधानेऽहर्निशं काव्यरचनामभ्यसेत्—

अधिगतसकलज्ञेयः सुकवेः सुजनस्य सन्निधौ नियतम् ।
नक्तं दिवमभ्यस्येदभियुक्तः शक्तिमान् काव्यम्[2] ॥ २० ॥

ध्वन्यालोककारेण आनन्दवर्धनेन यद्यपि काव्यहेतुविमर्शो न कृतस्तथापि स प्रकारान्तरेण कवित्वनिर्माणे प्रतिभाया महत्त्वमङ्गीकरोत्येव । ध्वन्यालोकस्य चतुर्थ उद्द्योते प्रतिभामहिमानं मनसि निधाय स कथयति यच्चेत्प्रतिभागुणोऽस्ति कविपार्श्वे तर्हि, काव्यगतरमणीयार्थानां समाप्तिर्न स्यात् । कविः प्रतिभाबलेनैव नवनवानर्थान् निबद्धुं स्वकाव्ये नितरां क्षमतामवाप्नोति । अविद्यमानायां प्रतिभायान्तु नास्तीदृशं वस्तु कवौ, येन स चमत्कृतिमयं काव्यं विरचयितुं प्रभवेत्—

न काव्यार्थविरामोऽस्ति यदि स्यात्प्रतिभागुणः[3] ॥ ६ ॥

सत्स्वपि पुरातनकविप्रबन्धेषु यदि स्यात्प्रतिभागुणः । तस्मिंस्त्वसति न किञ्चिदेव कवेर्वस्त्वस्ति ।

ध्वन्यालोकस्य तृतीय उद्द्योते षष्ठकारिकागतवृत्तौ ध्वनिकार आनन्दवर्धनः कथयति यत् शक्तेः (प्रतिभायाः) व्युत्पत्तेश्च न्यूनतायाः क्रमशो दोषद्वयं सम्भवति । प्रथमो दोषोऽस्ति अव्युत्पत्तिकृतो द्वितीयोऽस्त्यशक्तिकृतः । तन्मते प्रथमो दोषः शक्त्या (प्रतिभया) संवृतो न प्रतीयते । द्वितीयदोषस्तु काव्ये झटित्येव प्रतीयते । इदमेव तथ्यं द्रढयितुं तेनाधस्तनः परिकरश्लोक उद्धृतः सन्दर्भेऽस्मिन् —'अव्युत्पत्तिकृतो··· ···'[4] ।

अनेन काव्यसृष्टौ शक्ति( प्रतिभा )माहात्म्यं तेन स्फुटं प्रकाशितमिति वक्तुं सुकरम् ।

आचार्यमम्मटेन काव्यप्रकाशस्य प्रथमोल्लासे काव्यहेतुविषयको विशदो विचारो विहितः । काव्यहेतुमालक्ष्य स कथयति -

---

१. काव्यालङ्कारः; २. तदेव ; ३. ध्वन्यालोकः, च० उ० ।
४. तदेव, तृ० उ०, षष्ठकारिकावृत्तिः ।

शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात् ।
काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे[१] ॥

अर्थात् शक्तिः, निपुणता, अभ्यासश्च काव्यहेतुत्वं यान्ति । शक्ति व्याख्यायता तेनोच्यते यच्छक्तिः कवित्वबीजरूपः संस्कारविशेषोऽस्ति, यामन्तरा काव्यं न जायेत, तां (शक्ति) विना चेज्जायेत दोषवैशिष्ट्याद् हास्यास्पदमेव स्यात्—

'शक्तिः कवित्वबीजरूपः संस्कारविशेषो यां विना काव्यं न प्रसरेत्, प्रसृतं वा उपहसनीयं स्यात्'[२] ।

एतेन सिद्ध्यति यच्छक्तिमता कविनैव चारुकाव्यं निर्मातुं शक्यते । शक्तिहीनेन कविना विरचितं काव्यं हास्यभाजनत्वमेव याति । मम्मटप्रतिपादितेयं शक्तिर्वस्तुतोऽन्याचार्याभिमता प्रतिभैव । शक्ति कवित्वबीजरूपतयोक्त्वा मम्मटस्तस्या प्राधान्यमेवाङ्गीकरोति ।

द्वितीयश्च मम्मटाभिमतः काव्यहेतुरस्ति निपुणता । निपुणता पदार्थव्युत्पत्तिरिति मम्मटाभिमतम् । सा निपुणताऽथवा व्युत्पत्तिर्लोकशास्त्रकाव्यादिविमर्शाज्जायते । कारिकागतेन लोकेति पदेन स्थावरजङ्गमात्मकलोकवृत्तमपेक्ष्यते, शास्त्रेति पदेन पिङ्गलादिमुनिप्रणीतं काव्यवर्णादिनियमप्रख्यापकं छन्दःशास्त्रम्, पाणिनिप्रभृतिविरचितं व्याकरणशास्त्रम्, अमरसिंहादिरचितः कोषग्रन्थः, नृत्यगीतादिचतुःषष्टिकलाविषयका भरतादिविरचिता ग्रन्थाः, पुरुषार्थचतुष्टयविषयकं क्रमशो धर्मशास्त्रम्, अर्थशास्त्रम्, कामशास्त्रम्, मोक्षशास्त्रं च, गजतुरगखड्गादिलक्षणग्रन्थाश्चाभिप्रेताः । एवमेव काव्यपदेन महाकविविरचितानि काव्यानि, आदिग्रहणादितिहासादिविषयकग्रन्थाश्चाभिमताः[३] ।

मम्मटमते कस्मिंश्चित् कार्यसम्पादने पौनःपुन्येन प्रवृत्तिरभ्यास इत्युच्यते । सोऽभ्यासो वाल्मीकिकालिदासप्रभृतिमहाकवीनां काव्यमर्मज्ञानामाचार्याणाञ्चोपदेशेनाधिगन्तुं शक्यते तथा काव्यनिर्माणहेतुत्वं याति[४] ।

मम्मटमत एतेषां त्रयाणां हेतूनां काव्यनिर्माणम्प्रति हेतुत्वं समुदितरूपेणेव जायतेऽर्थात् ते दण्डचक्रादिन्यायेन सम्मिलितरूपेणेव हेतुत्वमुपयान्ति, न तु तृणारणिमणिन्यायेन प्रत्येकं काव्यजनकता । कारिकागते हेतुरिति पद एकवचनप्रयोगस्यायमेवाभिप्रायः —

'त्रयः समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे हेतुर्न तु हेतवः'[५] ।

इत्थं मम्मटः शक्ति निपुणताम् अभ्यासञ्चेति त्रितयं काव्यहेतुं मन्यते तथा तन्मते ( त्रयोऽपि हेतवः ) काव्यनिर्माणं प्रति सम्मिलितरूपेणेव हेतुतां यान्ति ।

---

१. काव्यप्रकाशः प्रथमोल्लासः ; २. तदेव, वृत्तिः ; ३. तदेव, वृत्तिः ।
४. तदेव ; ५. तदेव ।

हेमचन्द्रस्य मते काव्यनिर्माणे प्रतिभैव प्रधानं कारणमस्ति। तन्मते नवनवोन्मेषशालिनी प्रज्ञैव प्रतिभा। अतः केवलं तस्या एव काव्यकारणत्वं समीचीनम्। व्युत्पत्तिरभ्यासश्च तस्याः (प्रतिभायाः) संस्कारकौ स्तः। प्रतिभाया अभावे व्युत्पत्त्यभ्यासौ निष्फलौ स्तस्तयोर्न कश्चिदुपयोगः —'प्रतिभाऽस्य हेतुः'।

प्रतिभा नवनवोन्मेषशालिनी प्रज्ञा। अस्य काव्यस्येदं प्रधानं कारणम्। व्युत्पत्त्यभ्यासौ तु प्रतिभाया एव संस्कारकौ वक्ष्येते। अत एव तौ काव्यस्य साक्षात्कारणं प्रतिभोपकारिणौ तु भवतः। दृश्यते हि प्रतिभाहीनस्य विफलौ व्युत्पत्त्यभ्यासौ[1]।

तन्मते प्रतिभाया भेदद्वयं भवति—सहजा औपाधिकी च। तेन प्रतिभाभेदद्वयस्य स्वरूपमपि प्रदर्शितम्। यद्यपि स प्रतिभामेव मुख्यतः काव्यकारणं मन्यते; परन्तु तेन प्रतिभासंस्कारकत्वेनाभिमतयोर्व्युत्पत्त्यभ्यासयोरपि स्वरूपं प्रकाशितम्। तद्विचारे लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिरित्युच्यते —

'लोकशास्त्रकाव्येषु निपुणता व्युत्पत्तिः'[2]।

लोकेति पदेन तेन लोकवृत्तम्, शास्त्रेति पदेन व्याकरणशास्त्रादिकमभिप्रेतम्। कवेः काव्यज्ञस्य (आचार्यस्य) च शिक्षया काव्यनिर्माणे वारं वारं प्रवृत्तिमेव सोऽभ्यासत्वेनाङ्गीकरोति—

काव्यविच्छिक्षया पुनः पुनः प्रवृत्तिरभ्यासः[3]।

काव्यं कर्तुं जानन्ति विचारयन्ति वा ये ते काव्यविदः काव्यसहृदयास्तेषां शिक्षया वक्ष्यमाणलक्षणया काव्यस्य पौनःपुन्येन प्रवृत्तिरभ्यासः। अभ्याससंस्कृता हि प्रतिभा काव्यामृतकामधेनुर्भवति।

वाग्भटस्य मते केवलं प्रतिभैव काव्यकारणत्वं भजते। व्युत्पत्तिरभ्यासश्च प्रतिभायाः संस्कारकौ स्तः —

प्रतिभैव च कवीनां काव्यकरणं कारणम्।
व्युत्पत्त्यभ्यासौ तस्या एव संस्कारकौ[4]॥

वाग्भटमेवानुसरन् जयदेवः प्रतिभामात्रमेव काव्यहेतुतयाऽङ्गीकुर्वन् वदति यद् व्युत्पत्त्यभ्यासौ तां प्रतिभां तथैव पोषयतो यथा लताकारणं बीजं मृत्तिकाम्बुनो पोषयतः —

प्रतिभैव श्रुताभ्याससहिता कवितां प्रति।
हेतुर्मृदम्बुसम्बद्धबीजोत्पत्तिर्लतामिव[5]॥

पण्डितराजजगन्नाथमतानुसारेण प्रतिभैव केवलं काव्यनिर्माणस्य कारणमस्ति—

---

१. काव्यानुशासनम्; २. तदेव; ३. तदेव; ४. वाग्भटालङ्कारः।
५. चन्द्रालोकः।

तस्य च कारणं कविमता केवला प्रतिभा। तस्य मते काव्यरचनानुकूलशब्दार्थोपस्थितिरेव प्रतिभाऽस्ति —

'सा च काव्यानुकूलशब्दार्थोपस्थितिः'[१]।

पण्डितराजेन प्रतिभायाः कारणत्वमपि विवेचितं रसगङ्गाधरे। तदनुसारं प्रतिभाकारणस्य भागद्वयमस्ति। प्रथमे भागेऽदृष्टन्तथा द्वितीये ( भागे) व्युत्पत्त्यभ्यासौ च परिगण्यन्ते। अदृष्टं देवतामहापुरुषप्रसादादिजन्यं भवति। व्युत्पत्त्यभ्यासौ तु विदितावेव। पण्डितराजोऽदृष्टस्य वैविध्यात् प्रतिभाया अपि वैविध्यं स्वीकुरुते—

'क्वचिद्देवतामहापुरुषप्रसादादिजन्यमदृष्टम्। क्वचिच्च विलक्षणव्युत्पत्ति-काव्यकारणाभ्यासौ'।

अदृष्टव्युत्पत्त्यभ्यासानां न मिलितकारणत्वं प्रतिभां प्रति। तौ (व्युत्पत्त्यभ्यासौ) विनाऽपि केवलमहापुरुषप्रसादादपि प्रतिभोत्पत्तिः—

"न तु त्रयमेव। बालादेस्तौ विनाऽपि केवलान्महापुरुषप्रसादादपि प्रतिभोत्पत्तेः" प्र० आ०[२]।

राजशेखरेण स्वकाव्यमीमांसायां काव्यहेतुविषयमाधृत्य विमर्शो विहितः। यद्यपि स काव्यम्प्रति प्रतिभाव्युत्पत्त्योः पारस्परिकसमवेतत्वं श्रेयस्करं मनुते, तथा प्रतिभाव्युत्पत्तियुक्तः कविर्वास्तविकः कविरिति घोषयति; परन्तु काव्यहेतुविचारप्रसङ्गे स केवलां शक्तिमेव काव्यकारणत्वेनोरीकरोति—

'प्रतिभाव्युत्पत्ती मिथः समवेते श्रेयस्यौ' इति।

'प्रतिभाव्युत्पत्तिमांश्च कविः कविरित्युच्यते, सा शक्तिः केवलं काव्यहेतुः[३]'।

शक्तिमेव काव्यस्य प्रधानं कारणं मन्यमानः स समाधिमभ्यासञ्च शक्तेरुद्भासकत्वेन मन्यते। मनस एकाग्रता समाधिरित्युच्यते। तन्मते समाधिरान्तरिकप्रयत्नस्तथाभ्यासो बाह्यप्रयत्नश्चास्ति। तावुभावपि शक्तिमुद्भासयतः। प्रतिभाव्युत्पत्तिभ्यां शक्तेर्विविधरूपेण विस्तारो जायते। प्रतिभाव्युत्पत्ती शक्तेरेव जायेते। शक्तिसम्पन्नपुरुष एव प्रतिभा तिष्ठति तथा शक्तिमान् एव व्युत्पन्नो भवति—

'मनस एकाग्रता समाधिः—समाधिरान्तरः प्रयत्नो बाह्यस्त्वभ्यासः। तावुभावपि शक्तिमुद्भासयतः। विप्रसृतश्च स प्रतिभाव्युत्पत्तिभ्याम्। शक्तिकर्तृके हि प्रतिभाव्युत्पत्तिकर्मणो। शक्तस्य प्रतिभाति शक्तश्च व्युत्पद्यते'[४]।

अन्यैराचार्यैः शक्तिप्रतिभे समानेऽर्थे प्रयुज्यते परन्तूक्तविचारणेत्थं प्रतिभाति यद् राजशेखर उभयोर्मध्ये भेदं कुरुते तथा शक्तेर्व्यापकेऽर्थे प्रतिभायाश्च सीमितार्थे

---

१. रसगङ्गाधरः; २. तदेव ; ३. काव्यमीमांसा ; ४. तदेव।

प्रयोगं विधत्ते; परन्तु स काव्यमीमांसायाः पञ्चमेऽध्याये व्युत्पत्तिविषयकविचारावसरे 'उचितानुचितविवेको व्युत्पत्तिः' इतीत्थं व्युत्पत्तिस्वरूपं समुद्घाट्य 'शक्तिशब्दश्चायमुपचरितः प्रतिभाने वर्त्तते' इति कथनद्वारा द्वयोरभेदं निरूपयन् शक्तिशब्दः प्रतिभोपचाररूपेणास्तीति मनुते।

राजशेखरमतानुसारं 'या शब्दसमूहम् अर्थसमूहमलङ्कारशास्त्रमुक्तिमार्गं तथाऽन्यदपीदृशकाव्यपदार्थं हृदये प्रतिभासयति सा प्रतिभेति निगद्यते'। प्रतिभाहीनस्य जनस्य पदार्थजातमपरोक्षमिव तथा प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इवाभाति—

'या शब्दग्राममर्थसार्थमलङ्कारतन्त्रमुक्तिमार्गमन्यदपि तथाविधमधिहृदयं प्रतिभासयति, सा प्रतिभा। अप्रतिभस्य पदार्थसार्थः परोक्ष इव, प्रतिभावतः पुनरपश्यतोऽपि प्रत्यक्ष इव'[1]।

प्रतिभा द्विविधा—कारयित्री भावयित्री च। काव्यनिर्माणे कवेरुपकारिका 'कारयित्री' कथ्यते। कारयित्री प्रतिभाऽपि त्रिविधा—सहजा, आहार्या, औपदेशिकी च। सहजा प्रतिभा जन्मान्तरसंस्काराज्जायते। आहार्या चेह जन्मसंस्कारादुत्पद्यते। औपदेशिकी च ग्रन्थतन्त्राद्युपदेशादुत्पन्ना भवति। कारयित्र्याः प्रतिभाया भेदमिदमाधृत्य कवीनां भेदत्रयं भवति—सारस्वतः, आभ्यासिकः, औपदेशिकश्च—

'सा च द्विविधा—कारयित्री भावयित्री च। कवेरुपकुर्वाणा कारयित्री, सापि त्रिविधा—सहजाऽऽहार्यौपदेशिकी च। जन्मान्तरसंस्कारापेक्षिणी सहजा। इह जन्मसंस्कारयोनिराहार्या। मन्त्रतन्त्राद्युपदेशप्रभवा औपदेशिकी। ऐहिकेन कियतापि संस्कारेण प्रथमां तां सहजेति व्यपदिशन्ति। महता पुनराहार्या। औपदेशिक्याः पुनरैहिक एव उपदेशकालः, ऐहिक एव संस्कारकालः। त इमे त्रयोऽपि कवयः—सारस्वतः, आभ्यासिकः, औपदेशिकश्च। भावकस्य (आलोचकस्य) उपकर्त्री भावयित्री प्रतिभोच्यते, अर्थाद् यया प्रतिभया समालोचकः (पाठकः) कवेरभिप्रायं बोद्धुं प्रभवति, सा भावयित्री प्रतिभा। अनयैव प्रतिभया कविव्यापाररूपो वृक्षः फलति। एतां विना काव्यवृक्षो वन्ध्यतां गच्छति'।

'भावकस्योपकुर्वाणा भावयित्री। सा हि कवेः श्रममभिप्रायं च भावयति। तया खलु फलितः कवेर्व्यापारतरुः। अन्यथा साऽवकेशी स्यात्'[2]।

उपर्युक्ताचार्याणां काव्यहेतुविषयकमतानि समालोच्याधस्तनया तालिकया काव्यहेतुत्वं समासतः प्रदर्शयितुं शक्यते—

| आचार्यनाम | काव्यहेतुनाम | | |
|---|---|---|---|
| १. भामहः | प्रतिभा | व्युत्पत्तिः | अभ्यासः |
| २. दण्डी | प्रतिभा | श्रुतम् | अभियोगः |

१. काव्यमीमांसा ;　　　२. तदेव।

| | | | |
|---|---|---|---|
| ३. वामनः | लोकः | विद्या | प्रकीर्णम् |
| ४. रुद्रटः | शक्तिः | व्युत्पत्तिः | अभ्यासः |
| ५. आनन्दवर्धनः | प्रतिभा | | |
| ६. मम्मटः | शक्तिः | निपुणता | अभ्यासः |
| ७. हेमचन्द्रः | प्रतिभा | व्युपत्तिः | अभ्यासश्च संस्कारकौ |
| ८. वाग्भटः | प्रतिभा | व्युत्पत्तिः | अभ्यासश्च संस्कारकौ |
| ९ जयदेवः | प्रतिभा | व्युत्पत्तिः | अभ्यासश्च |
| १०. पण्डितराजः | प्रतिभा | | |
| ११. राजशेखरः | शक्तिः | | |

उक्ततालिकां दृष्टिगतां विधाय चेद् विमृश्येत तदेदं सुस्पष्टं भवेद् यत् प्रथमतो भामहेन प्रतिभा, व्युत्पतिः, अभ्यासश्चेति हेतुत्रितयमङ्गीकृतम्। तथैव दण्डी, रुद्रटः, मम्मटोऽपि काव्यहेतुत्रयं स्वीकृत्य तस्य (हेतुत्रयस्य) विमर्शं विहितवन्तः। हेमचन्द्रः, वाग्भटः, जयदेवश्चेमे त्रयोऽप्याचार्याः प्रतिभां मुख्यं हेतुं मत्वा अन्यौ द्वौ हेतू प्रतिभासहायकत्वेन स्वीकृतवन्त । हेमचन्द्रस्य वाग्भटस्य च मतेऽपरौ हेतू प्रतिभा-संस्कारत्वेन मतौ। जयदेवमते च तौ (हेतू) सहायकत्वेन निर्धारितौ। अतो वक्तुं शक्यते यदेतेषामाचार्याणां मते साक्षात्प्रतिभैव काव्यहेतुत्वं भजते। अपरयोर्व्युत्पत्त्य-भ्यासयोश्च हेतुभूतप्रतिभायाः साहाय्यमेव भवति । आनन्दवर्धनः पण्डितराज-जगन्नाथश्च केवलां प्रतिभां तथा राजशेखरः केवलां शक्तिञ्च काव्यकारणतया मानितवन्तौ।

इदमत्र ध्येयं यदाचार्यद्वारा हेतुनामोल्लेखे वैविध्यं दृष्टिगोचरं याति। रुद्रटेन मम्मटेन च प्रतिभापदस्थाने शक्तिपदं प्रयुक्तम् । सूक्ष्मपर्यालोचनेन वक्तुमिदं सुकरं यदेतेषामाचार्याणां मते शक्तिप्रतिभयोर्नास्ति भेदः। केवलं राजशेखर एवैतादृश आचार्यो यन्मते शक्तिः प्रतिभया भिन्ना।

काव्यहेतुविषयको वामनविचारस्तु विलक्षण एव यत्र विलक्षणरीत्या काव्यहेतु-र्विमृष्टः। वामनेन काव्यहेतुस्थाने काव्याङ्गशब्दं प्रयुज्य काव्यहेतुत्रितयं निरूपितम्— लोकः, विद्या, प्रकीर्णञ्च। लोकपदेनापेक्षितं लोकवृत्तं मम्मटादिप्रतिपादिते निपुणतादि-नामके हेतौ समापतितम्। तस्य विद्याभिधानहेतुरपि तथैवाङ्गीकृतो यथाऽन्यैराचार्यै-र्व्युत्पत्तिनामको हेतुरभिमतः। वस्तुतो वामनाभिमतो लोको विद्या चान्याचार्यप्रति-पादितव्युत्पत्तिनामके हेतौ परिगणयितुं शक्येते। तत्प्रतिपादिते प्रकीर्णाभिधाने हेतौ प्रतिभानस्य (अर्थात् प्रतिभायाः) स्थानं निर्धारितम्। प्रतिभानमथवा प्रतिभां कवित्व-बीजभूतत्वेन स्वीकृत्यापि वामनेन कथं गौणस्थाने स्थापितमिति विचारार्हम्।

द्वितीयहेतुरूपेण भामहरुद्रटाभ्यां व्युत्पत्तिपदं दण्डिना श्रुतेति पदं तथा मम्मटेन निपुणतेति पदं प्रयुक्तम्। सम्यग् विचारेण तथ्यमिदमनायासेनैव समापतति समक्षमस्माकं यदस्मिन् सन्दर्भे प्रयुक्तश्रुतनिपुणताव्युत्पत्तिपदानि समानमेवाभिप्रायं वहन्ति। तृतीयहेतुत्वेनान्यैराचार्यैरभ्यासपदमङ्गीकृतम्; परन्तु दण्डिना वामनेन चाभियोगपदस्य प्रयोगो विहितः। अभ्यासाभियोगपदयोरभिप्रायः समान एव।

उपर्युक्तसमेषामाचार्याणां मतसमीक्षणेन वक्तुमिदं युक्तं यत्काव्यविरचनायां प्रतिभायाः (शक्तेः) महती भूमिका। नूनमेव तां विना समुत्कृष्टं काव्यं रचयितुं न शक्यते। अतः प्राधान्यं तस्याः (प्रतिभायाः शक्तेर्वा) निर्विवादम्; परन्तु ध्येयमिदं तथ्यमत्र यत् केवलं प्रतिभामात्रेण विरचितं काव्यं न सर्वाङ्गपूर्णतां याति। तदर्थं प्रतिभया साकं निपुणता अभ्यासश्चापि नितरामपेक्षितौ। अतो वक्तुमिदमापाततो सङ्गतं यत् काव्यहेतुत्वेन प्रतिभायाः (शक्ते) स्वीकृतेऽपि प्राधान्येऽपरौ द्वौ समुद्धृतौ हेतू अपि नितान्तमपेक्षितौ। दशायामस्यामाचार्यमम्मटस्यायं विचारो याति सङ्गतिं यत् त्रयाणामपि हेतूनां काव्यरचनां प्रति समुदितं (सम्मिलितं) हेतुत्वं न तु व्यस्तहेतुत्वम्[1]। अत एव तेन काव्यहेतुवोधिकायां कारिकायां हेतुपदस्यैकवचनत्वं प्रयुक्तम्—'इति हेतुस्तदुद्भवे'। इत्थं कथनेऽस्मिन्नास्ति किमप्यनौचित्यं यद् मम्मटकृतः काव्यहेतुविचारः सर्वथा समीचीन इति।

●

१. 'त्रयः समुदिता न तु व्यस्तास्तस्य काव्यस्योद्भवे'। (का० प्र० प्र० उ० का० वृत्तिः)

# प्रजावृद्धिरिति विषयविवेचनप्रसङ्गे शास्त्रीयसिद्धान्तः

**आचार्यश्रीकमलाकान्तशुक्लः**
सम्मानिताचार्यः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

❀❀❀

प्रजावृद्धिः, परिवारनियोजनं वेति विषयविवेचनप्रसङ्गे देवर्षिनारदमतं समुपस्थाप्यते। प्रजाशब्दस्य सृष्टेश्च प्राचीनतमः सम्बन्धो यथा—"एकोऽहं बहु स्याम्" तथा "एकं सद् विप्रा बहुधा वदन्ति" इति श्रुत्योस्तादात्म्यसम्बन्धः।

प्र-उपसर्गवशाज्जनि-प्रादुर्भाव इति धातोः, "उपसर्गे च संज्ञायाम्" (अष्टा० ३।२।९९) इति पाणिनीयसूत्राद् 'उ'प्रत्यये, स्त्रीलिङ्गे प्रजाशब्दस्य उत्पत्तिर्जायते। यज्ञ-प्रजा-सवितृणां च परस्परं शाश्वतः सम्बन्धोऽस्ति। यथा—प्रजायै क्रतवे त्वत्पुनर्मार्तण्डमारभत इति। ऋग्वेदेऽपि राष्ट्रे कीदृशी प्रजा भाव्येति सम्यङ् निर्दिष्टमस्ति (ऋ० सं० १०।७२।९)। अनेकार्थसत्त्वादपि प्रजाशब्दस्य कोशकारैः लोके जने चार्थे च मान्यता स्वीकृता—"प्रजा स्यात् सन्ततौ जने" इत्यमरकोशः। "लोके जने च प्रजा" इति अभिधानचिन्तामणिः। परमात्मनः सृष्टौ प्रजायाः सन्ततेश्चासाम्यत्वे मातुः पितुश्च शीलौदार्यगुणविभिन्नत्वमेव कारणमस्तीति। यथोक्तमग्निपुराणे—

"मातृणां शीलदोषेण पितृशीलगुणेन च।
विभिन्नास्तु प्रजाः सर्वा भवन्ति भवशीलिनाम्" ॥

अपरञ्चाधानकाले पित्रोर्भावनयाऽपि जीवात्मनि सन्निवेशो जायत इति।

अन्यच्चापि राजा राष्ट्रस्य कारणं भवति—"यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" इति। सम्प्रति राजाशब्दो राष्ट्रपतौ, प्रधानमन्त्रिणि सभासदसि चान्तर्हितो वर्तते। राज्ञां महापुरुषाणाञ्च लोके यथाऽऽचरणं तथैवानुव्रजन्ति जना इति भगवता श्रीकृष्णेनापि स्वीकृतम्। अत एव राष्ट्रस्य पतने (ह्रासे) समुन्नतौ च राजा, राष्ट्राध्यक्षः, नेतारश्च मुख्यं कारणं भवन्तीति शाश्वतो नियमोऽस्तीति विचारणीयं निष्पक्षपातिभिर्महापुरुषैः। यतो हि देशाधिप एव सुयोग्यप्रजासम्पादने हेतुर्भवतीति निर्विवादमेव यथोक्तं पूर्वम्।

महाकविकालिदासोऽपि प्रजायोग्यत्वायोग्यत्वे हेतुर्नृपतिरेव कारणं भवतीति स्वीकृतवान् । स च प्रजाया विनयाधानाद्रक्षणाद्भरणादपि तदानीन्तनं शास्तारं दिलीपमेव प्रजापितरं स्वीकृतवानस्ति । यथोक्तं तेन स्वकाव्ये—

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि ।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ इति ।

एवमेव सम्प्रति प्रजाशब्दो जनताशब्दे सम्प्रविष्टो भवति । अत एव प्रजा-सन्ततिशब्दाभ्यां जनताशब्दोऽवगन्तव्य इति ।

राष्ट्रस्य बहुमूल्येषु निधिषु सर्वप्रथमो निधिः प्रजा एवास्ति । यथा यस्य देशस्य यादृशी प्रजा स्यात्, तथैव तस्य देशस्यानागतातीतगौरवमवमानञ्चेति ।

अतीवगौरवशालिप्राचीनसंस्कृतेः सुमेरुरयं भारतवर्षोऽतीतकालतो राजतन्त्रा-धीनः समागतो वरीवर्ति; किन्तु तदानीं राजधर्मः प्रजापालनं तदनुरञ्जनञ्चासीत् । प्रजातः करग्रहणन्तु तेषां सहस्रगुणवर्द्धनायेत्यत्र कीदृशमुपमानमुद्धृतं कविकुलशिरो-मणिकालिदासेन यथा—

"सहस्रगुणमुत्स्रष्टुमादत्ते हि यथा रविः" । इति ।

पूज्यतमेन महात्मना गान्धिमहोदयेनापि रामराज्यस्य निर्माणाय जनमत-मार्कर्षितं तदनुसृत्य प्रजाऽपि निर्विकल्पमनसा सहानुव्रजनं कृतवती ; किन्तु ससङ्कल्प-स्त्विदानीं "विनायकं प्रकुर्वाणो रचयामास वानरम्" इव जातो दरीदृश्यते । 'हा' क्व गतो वर्तते स महात्मा कीदृशवेदनया कालं यापयति स्म । यत्र कुत्र वधिकहस्तगतो जीव इव भारतवर्षस्तमनुचिन्तयन् तिष्ठति । अवलोक्य तां प्रचीनतमां राजतन्त्रव्यवस्थां महाप्रभुः पुरुषोत्तमोऽपूर्वोदारशीलगुणविशिष्टः श्रीरामः प्रजानामनुरञ्जनार्थमेव परम-प्रियतमां शीलौदार्यगुणविभूषितां सतीं सीतां वने निर्वासितवान् । महाराजसगरोऽपि स्वज्येष्ठपुत्रम् असमञ्जसं राज्याद्बहिर्निष्कासितवान् । प्रजासुखेच्छया महेन्द्रोऽपि सपक्ष-माणः पर्वतान् निष्पक्षिणो विहितवान् । अथ च वनवासिनः पाण्डवा अपि दुर्योधन-शासितराज्ये प्रजापालनवृत्तिज्ञानाय गुप्तचरं प्रेषितवन्तोऽहा ! कीदृशो भारतवर्षस्य गौरव आसीदिति मुहुर्मुहुर्विचारणीयम् ।

महात्मा हनुमान् प्रजापालनरूपराजधर्मविमुखाचरितराक्षसराजपालितां प्रजा-हृदयग्राहिणो विभीषणस्य गृहं विना सकलां लङ्कापुरीं दग्धवान् । मानवधर्मविरुद्धा-चरणशीलां प्रजां शासितुमेव राजा दण्डं धारयति । कविकालिदासेनाभिज्ञानशाकुन्तले राजधर्मो विहितो यथा—"राजानं दुष्यन्तं पात्रमाश्रित्येति नियमयसि विमार्गस्थि-तात्तद्दण्ड" इति । एवमेव प्रजापालनरूपराजधर्मप्रतिकूलाचारतो महाराजो वेनः प्रजयैव

विनिःसारितः, प्रजोत्पीडनतत्परां दानवीं शक्तिमुत्पाटयितुमेव यथावसरं भगवानपि रूपान्तरं विधायावतरित इति ।

अत्रेदं ज्ञायते यदविवेकिनं राजानं प्रजास्तथाऽविवेकशीलां पथविरुद्धां प्रजां राजानश्च यथावसरं परस्परं नियामका भवन्त आव्रजन्तीति भारतीया शाश्वती परम्परा। यस्मिन् देशे इतो भिन्नमाचरणं जायते, स देशो विनष्टो भूत्वाऽविवेकिशासक-ग्रासकवलीकृतो भविष्यतीति राद्धान्तः ।

अहो किमित्यद्भुतं प्रजापालनचरित्रमासीदिति ! किमिदानीन्तनाः प्राप्तैक-प्रजातन्त्रविडम्बिनस्तथाकथितशास्तारो महात्मनः सङ्कल्पं सार्थीकरिष्यन्तीति न वेति विचारः कर्तव्यः सर्वैरिति । जनकशासकयोरपि योग्यतमायाः प्रजायाः सन्ततेश्चाभिलाषा भवतीति निर्बाधः सिद्धान्तः। अपि च सुयोग्यतमा प्रजा सन्ततिश्चापि देशस्य कुलस्य च मर्यादां परिपालयितुं सक्षमा भवति। यथा एकश्चन्द्रस्तमो निरस्य सकलां रात्रिं प्रकाशयति न तु तथा तारासमूहः। अन्यच्चैव एकः सुपुष्पितश्चन्दनतरुः सकलमपि तरुसमूहालङ्कृतं मलयालयं स्वसौरभेण सुरभितं करोत्यत्र न सन्देहः। अपि चैकेन सुपुत्रेण जननी मातृभूमिश्च स्वकीयां गौरवीं मर्यादामनुभावयति, न तथा दुर्वृत्तशतेनापि । यथोक्तं नीतिकारैः —

वरमेको गुणीपुत्रो न च मूर्खशतान्यपि ।
एकश्चन्द्रस्तमो हन्ति न च तारागणा अपि ॥
एकेनैव सुपुत्रेण सिंहिनी स्वपिति निर्भया ।
अपि पुत्रसहस्रेण भारं वहति गर्दभी ॥
एकेनापि सुवृक्षेण पुष्पितेन सुगन्धिना ।
वासितं तद्वनं सर्वं सुपुत्रेण कुलं यथा ॥

अपि च या सन्ततिः प्रजा च मर्यादादिगुणचतुष्टयपरिवर्जिता सती मातु-र्मातृभूमेश्चाञ्चलं रक्षितुमक्षमा चेत् तदा तस्या जन्म केवलमजागलस्तन इव निरर्थकं भवति, सा प्रजा अरण्यपशुरिव भूभारभूता मृतचर्मावगुण्ठितमिव श्वसति । यथा—

"अजागलस्तनस्यैव तस्य जन्म निरर्थकम्" ।
"भुवि भारभूता मनुष्यरूपेण मृगाश्चरन्ति"। इति ।

इत्थमनुशासितमर्यादापरिप्लाविता देशकुलधर्मानुसारिणी स्वल्पीयस्यपि प्रजा नातिचिरं देशस्य अथवा कुलस्य सर्वाङ्गीणमभ्युदयं कर्तुं शक्यते। इतो भिन्ना साधन-परिपूर्णापि दुर्दान्तराक्षसकुलमिव देशञ्चापि भस्मीकरिष्यतीति विचारणीयम् ।

अत एव शरीरं पातयामि कार्यं वा साधयामीति मनोबुद्ध्या प्रजायाः सन्ततेश्चैक-मात्रलक्ष्यं भवितव्यं येन कुलस्य देशस्य मातृभूमेश्च मर्यादायाः परिपालनं भवेत् ।

एवं न चेत्तदाऽरक्षितेन देशेन सह समूलं विनष्टा भविष्यतीति नात्र सन्देहः। यथा वृत्तहीनं समृद्धमपि यदुकुलं पश्यत एव स्वयमेव नष्टं जातमेव। तत्र कुले जातः स्वयं भगवान् वासुदेवोऽपि न तद्रक्षितुं पारयामास इति प्रज्ज्वलितोदाहरणं वरीवर्ति। ईदृशी भारतीया पद्धतिरासीत्। यथा देशस्य पराजये ह्रासे च राजानः सम्प्रति नेतारश्च समत्वेनोत्तरदायिनो भवन्तीति।

अथ प्रायो बहुदेशवासिनो जनसंख्यावृद्धया त्रस्ताः सन्ति। सत्स्वपि भोजन-वसन-निवास-चिकित्साव्यवस्थासु संख्यावृद्धयानुपातेनापूर्णैव प्रतिभाति। अन्यच्च भरण-पोषण-शिक्षा-दीक्षा-कृते विशालजनसमूहोऽमर्यादित उच्छृङ्खलो भूत्वा अनाचारेऽत्याचारे, व्यभिचारे, परद्रव्यदारापहारे संल्लग्नो दरीदृश्यते। अनेन लोकव्यवहारेण विवेकशीला गृहिणो लोकनायका सर्वेऽपि चिन्तातुरा दृश्यन्ते। अथ च देशस्याधिकारिणोऽपि स्वकर्तव्यच्युता दुष्कर्मप्रवृत्ता उत्तरोत्तरं दूषितमनोवृत्तयः सन्ति। देशवासिनां जनानां यादृशी भावना सम्प्रति दृश्यतेऽनेनेदं फलितं प्रतिभाति, यत्प्रतिक्षणं देशवासिनो देशश्चेत्यन्धस्तमसि गन्तुमुत्सुका दरीदृश्यन्ते। अत्रेदमपि कारणं दृश्यते यदधिकारिणोऽमर्यादिता येन केनाऽपि सर्वोत्कृष्टनियामकपदे नियोजिताः सन्ति ये स्वभावतः प्रकृत्या संस्काराच्च सदाचारमर्यादावहिर्भूता व्यवहरन्तीति देशस्य ह्रासः प्रजाया उच्छृङ्खलप्रवृत्तेः कारणम्। ततोऽप्यधिकाः प्रतिनिधयो देशस्य सुव्यवस्थां कर्त्तुं समुद्यताः कर्णधाराः साम्प्रतिका प्रतिनिधयो ये नित्यमप्यभिनवां योजनां निर्मापयन्ति; किन्तु दुःखस्य विषयोऽयं यत्सर्वाऽपि योजना उल्लूककृते प्रचण्डरविकिरणप्रभेव निष्फलीभूता जायते। तथापि भारतीयपरम्परया पुरुषार्थान्तरगतत्वाच्च सदुद्देश्यस्य सफलत्वे सुकर्तव्यं करणीयमेव। यतो हि कार्यमारभ्यमाणं हि पुरुषं श्रीर्निषेवत इति सिद्धान्तमनुसृत्य "मनुष्यास्तु कलत्रण रमन्ते महिषा इव" इति प्रवृतिं विहाय देवर्षिसाधितदिशा सुचिन्तितशास्त्रप्रतिपादितसंस्कारमवलम्ब्य सन्तत्युत्पादने सर्वैः प्रयत्नशीलैर्भवितव्यमित्यनेन स्वल्पीयसी प्रजा अपि वह्वीव भारतवर्षरत्नरूपा भविष्यतीति दिक्।

प्रस्तूयतेऽत्र देवर्षिकर्तव्यं यदाधुनिकैरपि करणीयमिति ब्रह्मणोपदेशाद् देवर्षिगन्धर्वासुरनागादिमानसिकसृष्ट्याऽतृप्तो दक्षप्रजापतिर्मैथुनीं सृष्टिं विधातुं लोकधारिणितपस्विनि-वीरणप्रजापतिपुत्र्या असिक्न्या सह विवाहं विधाय स्वसामर्थ्यसदृशान् सृष्टिकर्मदक्षान् पञ्चसहस्रपुत्रान् जनयामास, यथा—

मैथुनेनैव धर्मेण सिसृक्षुर्विविधाः प्रजाः।
असिक्नीमावहत्कन्यां वीरणस्य प्रजापतेः॥
अथ पुत्रसहस्राणि वैरुण्यां पञ्च वीर्यवान्।
असिक्न्यां जनयामास सर्गहेतोः प्रजापतिः॥ (विष्णुपुराणम्)

एते हर्यश्वगणाः प्रजापतिपञ्चसहस्रपुत्राः सृष्टौ शक्तिशालिनः पितुरुपदेशाद्बहुसृष्टिं कर्तुं सुदुश्चरं तपस्तप्तुं प्रवृत्ता जायन्त इति । बहुसृष्टिं राष्ट्रधर्मविरुद्धां मन्यमानो देवर्षिनारदः प्रजोत्पत्तिनिमित्ते तपसि संल्लग्नान् दक्षपुत्रान् तत्र तपःस्थाने गत्वाऽऽह यद् हे तपस्विनो ! भुवो विस्तारमदृष्ट्वैव बहुप्रजोत्पत्तौ संल्लग्ना यूयं बालिशा मूढा इव भान्ति, तर्हि पूर्वं त्रैलोक्येऽपि अप्रतिहतगतयो भवन्तो भुव ऊर्ध्वमधो मध्यञ्च सर्वतोभावेन कथं नावलोकयिष्यन्ता यतो हि भुवः परिधिं सीमां निश्चित्यैव तदनुकूलं सृष्टिविधानं शोभनं राजधर्मानुकूलं भविष्यतीति । यथोक्तं विष्णुपुराणे—

"तान् दृष्ट्वा नारदो विप्रान् संविवर्द्धयिषून् प्रजाः ।
संगम्य प्रियसंवादो देवर्षिरिदमब्रवीत् ॥
हे हर्यश्वा महावीर्याः प्रजा यूयं करिष्यथ ।
ईदृशो दृश्यते यत्नो भवतां श्रूयतामिदम् ॥
बालिशा बत यूयं वै नास्या जानीत वैभवम् ।
अन्तरूर्ध्वमधश्चैव यदाप्रतिहता गतिः ॥
तदा कस्माद्भुवो नान्तं सर्वे द्रक्ष्यथ बालिशाः ॥ इति ।

इत्थं देवर्षिमतं साधु मन्यमानास्ते भुवो विस्तारजिज्ञासया विभिन्नासु दिक्षु गताः सन्तः समुद्रगता नद्या इव अध्यापिनः परावृता इति ।

ते तु तद्वचनं श्रुत्वा प्रयाताः सर्वतोदिशम् ।
अध्यापिनो निर्वतन्ते समुद्रेभ्य इवोपगाः ॥ इति ।

इत्थं स्वपुत्राणां नारदकृतसृष्टिविमुखीभूतवृत्तान्तं श्रुत्वा स प्रजापतिः पुनर्वैरिण्या नाम्न्या कन्यया सह विवाहं कृत्वा सहस्रसंख्यकान् तथाद्भुतसामर्थ्ययुक्तान् पुत्रान् जनयामास । तेऽपि पितुरुपदेशात्तथाविधां सृष्टिं सम्पादयितुं तपसि संल्लग्ना बभूवुः । शबलाश्वगणनाम्ना प्रसिद्धानिमान् तथाविधान् दृष्ट्वा सत्यसङ्कल्पसिद्धो देवर्षिनारदः पुनस्तत्र गत्वा तानबोधयद् यद् यूयमतिबालिशा अज्ञानिनः सन्ति । यतो हि भूविस्तारज्ञानाय गतास्ते भ्रातरोऽद्यावध्यपि न समागतास्ते कुत्र किंविधाः सन्तीति अज्ञात्वैव तन्मार्गगामिनः कथं भविष्यथ इति लोकदृष्टयाऽसंस्तुतस्ते व्यवहार इति तेऽपि सर्वे देवर्षिनारदकथितं यथायोग्यं कर्तव्यं सम्प्रधार्य भ्रातॄणां पथपथिका भवेयुः, अद्यावधि न निवर्तिताः । यथोक्तं विष्णुपुराणे—

हर्यश्वेष्वथ नष्टेषु दक्षः प्राचेतसः पुनः ।
वैरुण्यामथ पुत्राणां सहस्रमसृजत्प्रभुः ॥
विवर्द्धयिषवस्ते तु शबलाश्वाः प्रजाः पुनः ।
पूर्वोक्तं वचनं ब्रह्मन्नारदेनैव नोदितम् ॥

अन्योन्यमूचतुः सर्वे सम्यगाह महामुनिः।
भ्रातॄणां पदवीं चैव गन्तव्या नात्र संशयः॥
ज्ञात्वा प्रमाणं पृथिव्याश्च प्रजाः स्रक्ष्यामहे ततः।
तेऽपि तेनैव मार्गेण प्रयाताः सर्वतोमुखम्॥
अध्यापिनो निवर्तन्ते समुद्रेभ्य इवोपगाः॥ इति।

अनेनेदं ज्ञायते यदनिन्त्रितप्रजावृद्धेर्निरोधोऽतीतकालत एवागच्छन्नस्ति। किन्तु तदानीं विरोधे मनोवृत्तिनिरोधो धर्म एवेति हेतुर्न तु भ्रूणहत्या, यथेदानीं भवतीति। इदानीन्तनीयया परिपाट्या बलस्य ह्रासो मानसिकप्रवृत्तिश्च दूषिता जायते। तेन लोके दुःखस्योपद्रवस्याशान्तेश्चानुदिनं वृद्धिर्भवतीति। अत एव सुसंस्कारयुता स्वल्पीयसी अपि सृष्टिः सुख-कल्याण-शान्तिहेतुकी भविष्यतीति सिद्धान्तदृष्ट्या विधेया सर्वैर्जगद्धिताय स्वोपकाराय चेति श्रीविश्वनाथः प्रार्थ्यत इति शम्।



# अस्माकं सौरपरिवारः

श्रीदेवीप्रसादत्रिपाठी

अनुसन्धाता, ज्योतिषविभागस्य

काशीहिन्दूविश्वविद्यालये

वाराणसी

❀❀❀

सूर्यस्य परिवारः सौरपरिवारः सौरमण्डलं वा। अस्मिन् ब्रह्माण्डे बहवः सौरपरिवारा विद्यन्ते। तेषामन्यतमोऽयमस्माकं सौरपरिवारोऽप्यस्ति। अस्य सौरपरिवारस्य प्रमुखः सञ्चालकः स्वयमेव सूर्यो वर्तते। अस्य परिवारस्य ग्रहा उपग्रहाः क्षुद्रग्रहा धूमकेतव उल्काश्च प्रमुखाः सदस्याः सन्तीति। एषां सदस्यानां मध्ये ग्रहाणां स्थानं सर्वोपरि वर्तते। इमे ग्रहाः सूर्यस्य परिक्रमां दीर्घवृत्ताकारायां कक्षायां कुर्वन्ति। एषां स्वरूपस्थित्यादीनां सहैवेयं जिज्ञासा समुद्भवति यत् सौरपरिवारस्य कथमुत्पत्तिर्जाता।

**सौरपरिवारस्योत्पत्तिः —**

अस्योत्पत्तिविषये समुल्लिखितं यद् ब्रह्माण्डस्य सर्वे पदार्था हिरण्याण्डेनोत्पन्नाः। उक्तञ्च शतपथब्राह्मणे —'आपो ह वा इदमग्रे सलिलमेवास। ता अकामयन्त कथं नु प्रजायेमहि इति। ता अश्राम्यन् तास्तपोऽतप्यन्त। तासु तपस्तप्यमानासु हिरण्याण्डं सम्बभूव। तदिदं यावत् संवत्सरस्य वेला, तावत् पर्यप्लवत, ततः संवत्सरे पुरुषः समभवत्। सः प्रजापतिः'[1]। पुनश्च वायुपुराणे—

अन्तस्तस्मिंस्त्विमे लोका अन्तर्विश्वमिदं जगत्।
चन्द्रादित्यौ सनक्षत्रौ सग्रहौ सह वायुना॥
लोकालोकं च यत्किञ्चिच्चाण्डे तस्मिन् समर्पितम्।
अद्भिर्दशगुणाभिस्तु बाह्यतोऽण्डं समावृतम्[2]॥

किमसौ महदण्डमेकमेवासीत्? किं तेनैकेनाण्डेनेमेऽगणिताः सूर्यश्चन्द्रा ग्रहास्तारकादयश्च समुत्पन्ना अभवन्? किं सम्पूर्णाः सृष्टय एकेनैव प्रजापतिना समुत्पन्नाः[3]? उक्तप्रश्नानामुत्तराणि विष्णुपुराणे समुद्धृतानि सन्ति—

---

१. श. ब्रा. ११।१।६।१-२; २. वायुपुराणे—४।७३-७५; ३. वेदविद्यानिदर्शने, पृ० ८१।

अण्डानां तु सहस्राणां सहस्राण्ययुतानि च ।
ईदृशानां तथा तत्र कोटि-कोटिशतानि च[१] ॥

पुनश्च वायुपुराणेऽप्येतादृशमेव वर्णनं प्राप्यते—

अण्डानामीदृशानां तु कोट्यो ज्ञेयाः सहस्रशः ।
तिर्यगूर्ध्वमधस्ताच्च कारणस्याप्ययात्मनः[२] ॥

उक्तानां मतानामाधारेण पण्डितभगवद्दत्तमहोदयाः कथयन्ति यदसंख्यानामण्डानां परिणामभूता एताः सुदूरस्थिता असंख्याः सृष्टयः सन्ति । अस्य विचारस्य पुष्ट्यर्थं पण्डितभगवद्दत्तैरेकस्य डचज्योतिर्विदो विचाराः समुद्धृताः । तद्यथा च— The total number of stars in galactic system including the most distan and faint ones is estimated by the duch astronomer kapteyn to whom we owe the most careful study of the milky way, to be about 40 billions.[३]

**वैज्ञानिकानां दृष्ट्या सौरपरिवारोत्पत्तिः —**

ग्रहाणां द्वौ वर्गौ स्तस्तत्रैक आन्तरिका ग्रहाः, द्वितीयाश्च बाह्या ग्रहाः । ज्ञकविभूकुजरव्याः सौरपरिवारस्यान्तरिका ग्रहाः सन्ति । एषां रचनायां गुरुतत्त्वानामाधिक्यं वर्तते । गुरुशन्यरुणवरुणादयो बाह्या ग्रहाः सन्तीति । येषां रचनायां गुरुतत्त्वानामल्पत्वं दृश्यते । आन्तरिकग्रहाणामपेक्षया बाह्या ग्रहाः स्थूलास्तथा च तेषामुपग्रहाणामपि संख्या अधिका । सौरमण्डलस्योत्पत्तिविषये वैज्ञानिकानां मतमस्ति यत्—

**(अ) एकरूपतावाद्येकपैतृकपरिकल्पना**[४] (Unifarmitairan and Uniparental Hypothesis)—एकपैतृकपरिकल्पनानुसारेण सौरमण्डलस्योत्पत्तिरेकस्यैव बृहत्पिण्डस्य मन्दक्रमिकपरिक्रमाया विकासेनाभवत् । वक्ष्यमाणाः सन्त्येकरूपतावादिपरिकल्पनाः —

१. काण्टमहोदयस्य नीहारिकापरिकल्पना ।
२. लाप्लसमहोदयस्य नीहारिकापरिकल्पना ।
३. वाइजेकरमहोदयस्य नीहारिकापरिकल्पना ।
४. अल्फवेनमहोदयस्य विद्युच्चुम्बकीयपरिकल्पना ।
५. कुइवरमहोदयस्य नीहारिकापरिकल्पना ।
६. शिमड्महोदयस्योल्कापिण्डपरिकल्पना ।

---

१. विष्णुपुराणे—२।७।२७;	२. उद्धृतम्—वेदविद्यानिदर्शने, पृ० ८२ ।
3. G. Gamow, The birth and death of the sun, p. 183.
४ भूविज्ञान : एक परिचय, पृ० १२–१४ ।

**(ब) प्रलयवादिद्विपैतृकपरिकल्पना**[1] (Cataclysmic biparental hypothesis)—एतासां परिकल्पनानुसारमस्माकं सौरमण्डलं द्वयोस्तारकयोर्मध्ये संघर्षणविस्फोटकयोः प्रलयकारिपरिणामस्य फलमस्ति। अस्य वर्गस्य विभिन्नाः परिकल्पना निम्नाङ्किताः सन्ति—

१. बफनमहोदयस्य संघर्षण-(भिडन्त)परिकल्पना।
२. चेम्बरलेनमोल्टनमहोदययोर्ग्रहाणुपरिकल्पना।
३. जीन्सजेफ्रीजमहोदययोर्ज्वारीयपरिकल्पना।
४. रसेललिटिलिटनमहोदययोर्युग्मतारापरिकल्पना।
५. रासगनमहोदयस्य विखण्डनपरिकल्पना।
६. ए.सी. बनर्जीमहोदयस्य सिफीडपरिकल्पना।
७. फेडहायलमहोदयस्य नवतारापरिकल्पना।

**सौरमण्डलस्योत्पत्तेः प्रमुखाः सिद्धान्ताः —**

**१. बफनमहोदयस्य संघर्षण(भिडन्त)परिकल्पना**—सर्वप्रथमं १७४५ ईस्वीयवत्सरे फ्रांसदेशीयैः जार्जकास्तेदवफनमहोदयैर्वैज्ञानिकपरिकल्पना प्रस्तुता। अस्या परिकल्पनानुसारेणैकस्य विशालकायस्य धूमकेतोः सूर्येण सह घोरं संघर्षणमभवत्। तेन संघर्षणेन सूर्यांशाः पदार्था विखण्डिता भूत्वा सुदूरमगच्छन्। तैः सूर्यांशैः सौरपरिवारस्योत्पत्तिरभवत्।

**२. जीन्स-जेफ्रीजमहोदययोर्ज्वारीयपरिकल्पना**[2]—१९१९ तमे ईस्वीयवत्सरे सर-जीन्समहोदयो ज्वारीयपरिकल्पनां प्रतिपादितवान्। १९२९ तमे वर्षे जेफ्रीजमहोदयैर्जीन्समहोदयस्य परिकल्पना संशोधिता। अस्यां परिकल्पनायामादिकालीनः सूर्य एको गैसीयपिण्ड आसीत्। एकस्तारकः परिभ्रमन् सूर्यस्य समीपमगच्छत्। परिभ्रमता तारकेण सूर्ये ज्वारोत्पत्तिर्जाता। कालान्तरे स तारको भ्रमन्नन्तरितः। सूर्यंतारकयोर्मध्ये ये ज्वारीयाः पदार्था उत्पन्ना अभूवन्, ते 'सिगार'वस्तुविशेषाकारे आसन्। ज्वारीयपदार्थानां पिण्डाः शनैश्शनैः सूर्यस्याकर्षणे समायाताः। आगत्य च सूर्यं परितो भ्रमणमारब्धवन्तः। एवं शनैश्शनैः सौरपरिवारस्योत्पत्तिर्जाता। अयं सिद्धान्तः चित्रेणाधिकं स्पष्टं भवतीति (द्रष्टव्यं चित्रम्–१)।

**३. रसेलमहोदयस्य युग्मतारापरिकल्पना**[3]—श्री एच० एन० रसेलमहोदयानुसारेणादिकालेऽस्माकं सूर्यं परित एकस्तारको भ्रमति स्म। कालान्तरे नवागतस्य तारकस्याकर्षणेन सूर्यं परितो भ्रममाणात्तारकाद् वायव्यपदार्थाः पृथगभवन्। इमे वायव्यपदार्थाः सूर्यं परितो भ्रमन् सौरपरिवारस्य रूपमधारयन् (द्रष्टव्यं चित्रम्–२)।

---

१. भूविज्ञान : एक परिचय, पृ. १२–१४; २. भौतिक भूगोल के तत्त्व, पृ० १५-४३।
३. भौतिक भूगोल के तत्त्व, पृ० १५–४३।

४. फ्रेडहायलमहोदयस्य नवतारापरिकल्पना[1]—कैम्ब्रिजविश्वविद्यालयस्य गणितज्ञः प्रो० फ्रेडहायलमहोदयः १९३९ तमे ईस्वीयवर्षे 'नेचर ऑफ दि यूनिवर्स' नामकमेकं निबन्धमलिखत्। तस्मिन् निबन्धे सौरपरिवारस्योत्पत्तेर्व्याख्या तैः कृता। फ्रेडहायलमहोदयानुसारं सूर्यस्य समीपस्थसुपरनोवातारके विस्फोटमभवत्। तस्य विस्फोटस्य परावर्तनशक्त्या सुपरनोवातारकस्य केन्द्रभागं (क्रोडं) सूर्यस्याकर्षण-शक्तेर्बहिर्गतवान्। तत्रावशिष्टा वायव्यपदार्थाः (गैसीयमेघाः) सूर्यं परितो भ्रमन् सौरपरिवारस्याकारे परिणता बभूवुः (द्रष्टव्यं चित्रम्-३)।

## नीहारिकाग्रहाणुपरिकल्पनयोर्मध्ये तुलना[2]

| निहारिकापरिकल्पना | ग्रहाणुपरिकल्पना |
|---|---|
| (क) सौरपरिवारस्योत्पत्तिरेकेनैव तारकेणाभवत्। | (क) सौरपरिवारस्योत्पत्तिर्द्वयोस्तारकयो-र्मध्ये सङ्घर्षणेनाभवत्। |
| (ख) आद्यावस्थायां गैसीयपदार्था आसन्। | (ख) आदिग्रहाणवः कठिनस्वावस्थाया-मासन्। |
| (ग) आरम्भे ऊष्माऽवस्थाऽऽसीत्। | (ग) आरम्भे शीतलाऽवस्थाऽऽसीत्। |
| (घ) तापमानं क्रमशो न्यूनतामगच्छत्। | (घ) तापमानं क्रमशो वृद्धिं गतम्। |
| (ङ) आद्यावस्थायां वायुमण्डलमासीत्। | (ङ) आद्यावस्थायां वायुमण्डलं नासीत्। |

**आदित्यः —**

ऋग्वेदेऽघमर्षणसूक्ते सूर्यादीनामुत्पत्तिमुद्दिश्योक्तं विद्यते यत्—'चित्रं देवाना-मुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः। आप्रा द्यावा पृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च'[3]। एवमेव शतपथब्राह्मणेऽपि—'सोऽकामयत्। भूय एव स्यात्तं प्रजायेतेति। स वायुनाऽन्तरिक्षं मिथुनं समभवत्। तद् आण्डं समवर्तत। तद् अभ्यमृशद् यशो बृहतीति। ततोऽसावादित्योऽसृज्यत। एष वै यशः। यदश्रुसंक्षरितमासीत् सोऽश्मा पृश्निरभवत्। अश्रुर्ह वै तमश्मा इत्याचक्षते।........अथ य कपाले रसो लिप्त आसीत्। ते रश्मयोऽभवन्। अथ यत् कपालमासीत् सा द्यौरभवत्'[4]।

वैदिकप्रमाणानुसारेण सर्वप्रथमं पृथिवी स्वकीयास्तित्वमलभत्। भूमेरनन्तर-मन्तरिक्षमस्यानन्तरमादित्यानां च जन्मान्यभवन्। सूर्ये प्राणाग्न्यापश्च समावेशो विद्यते पार्थिवांशस्तु स्वल्पमात्रमेव। पार्थिवांशानां सन्दर्भे योरोपीयवैज्ञानिकस्य मतं निम्नाङ्कितं वर्तते—

---

१. भू-आकृति विज्ञान, पृ० ३५-३७;  २. भौतिक भूगोल के तत्त्व, पृ० १५-४३।
३. ऋ० सं० १।११५।१;  ४. श० ब्रा० ६।१।२।३।

The earths density is some four times as great as the Sun's since the mean density of the earth is 5.5 times that of water, that of the sun ( taking the density of water as unit ) is 1.4. Already we are begnning to glimpse the fact that the Sun cannot be in a solid state, for the constituent materials are on the average much less dense, than those solid materials of which the earth is composed.[१]

पुनश्च—

The Sun's mean density, which is only one quarter of the earth's and since the time of Sacchi and Lockyear it has been realised and repeatedly confirmed that the Sun is a wholly gaseaus globe.[२]

पृथिव्या घनत्वं सूर्यस्य घनत्वात् चतुर्गुणमधिकं वर्तते। यदि उदकस्य घनत्वमेकं मन्यते तर्हि सूर्यस्य घनत्वं १.४ पृथिव्याश्च घनत्वं ५.५ भविष्यति। घनत्वेन स्फुटं प्रतीयते यत् सूर्यः कठोरपिण्डरूपे भवितुं नैव शक्यते। तथा चायं सूर्यो वायव्यानां ( गैसीयकणानां ) गोलकोऽस्ति।

सूर्यस्योत्पत्तिविषये 'वैदिक सृष्टि उत्पत्ति रहस्य' नामकपुस्तके डॉ० विष्णुकान्तवर्ममहोदयैः वेदस्यैका ऋचा प्रस्तुता—'यदेदेनमदधुर्यज्ञियासो दिवि देवाः सूर्यमादितेयम्। तदा रचिष्णुमिथुनावभूतामादितः प्रापश्यन्भुवनानि विश्वा'। अस्या ऋचाया व्याख्यायां ते कथयन्ति यत् सूर्यस्योत्पत्तेः सकाशादेव समस्तानां नक्षत्राणामुत्पत्तिर्जाता। उत्पत्तिसमये केचन लोका युगलावस्थायामुत्पन्ना भवन्ति। समस्तानां लोकानामुत्पत्तयो हाइड्रोजन–हीलियम-नामकयोर्युगलगैसयोः साहचर्येण भवन्ति। तत्त्वमीमांसका एनं सूर्यं मूलशक्तेरदितेः सकाशादुत्पन्नमिति स्वीकुर्वन्ति[३]।

सूर्यतापः—'असौ वै सूर्यो योऽसौ तपति'[४], 'यश्चासौ तपते सूर्यः'[५], 'सूर्यादुष्णं निस्रवते सोमाच्छीतं प्रवर्तते'[६]। स सूर्यस्तपति सूर्याच्चोष्मा प्रभवति। भूमिस्थप्राणिनामुपरि सूर्यतापस्य कः प्रभावो भवति ? अस्य प्रश्नस्योत्तरं पुराणेषु वेदेषु च बहुषु स्थलेषु दरीदृश्यते। यथा च—

१. Abelti, The Sun, P. 40; उद्धृतम्—वेदविद्यानिदर्शने, पृ० १९२–१९३।
२. तत्रैव; ३. वैदिक सृष्टि उत्पत्ति रहस्य, पृ० २०४; ४. कौ० ब्रा० ५।८।
५. ब्रह्माण्डपुराणे, पू० २४।११; ६. तत्रैव—२२।२०।

उद्यान्तं च पुनः सूर्यमौष्ण्यमाग्नेयमाविशत् ।
यश्चासौ तपते सूर्यः पिबन् अम्भो गभस्तिभिः ॥
पार्थिवाग्निविमिश्रोऽसौ दिव्यः शुचिरिति स्मृतः ।
उदिते हि पुनः सूर्ये ह्यौष्ण्यमाग्नेयमाविशत् ॥
संयुक्तो वह्निना सूर्यस्तपते तु ततो दिवा[1] ॥

सूर्यतापे पाश्चात्यवैज्ञानिकानां मतम्[2]—

It has been said that the Sun's atmospheare consists largely of hydrogen. As a working hypothesis, we shall take this to hold good also for the interior. Now we know that the mean density of solar matter is 1.41 g per cc or nearly one and a half times that of water If hydrogen of this density were to behave like a gas, then the elementary gas--law requires that, for a pressure equal to the average calculated above, the temperature must be about 3 million degrees. Under these condition the hydrogen would practically completely ionized and the value given for the temperature takes account of this.

कस्यापि तारकस्य लयोत्पत्तौ कस्माच्चिदपि कारणविशेषाद् भवति । अस्माकं सूर्योऽपि पञ्चशतकोटिवर्षाणि प्रागनया प्रक्रियया उत्पन्नोऽभूत् । नूनमेव वक्तुं शक्यते यदयं शनैश्शनैर्रक्तदानवतारको भविष्यति । तदानीञ्च पञ्चशतकोटिवर्षानन्तरं 'श्वेतवामन'तारकस्य स्थितिं प्राप्य तस्य मरणं (नाशो) भविष्यति । इयमस्ति वैज्ञानिकानां धारणा ।

प्रलयकाले सूर्यः —स्वयं प्रकाशकाः सूर्यादयो लोका अपि नाशवन्तः सन्ति । इमे लोकाः प्रकाशस्य नित्यस्रोता न सन्ति । सर्वेषां लोकानां प्रकाशकः केवलमेको परब्रह्मपरमेश्वरोऽस्ति । उक्तञ्च —

वैश्वानरं विश्वहा दीदिवासं मन्त्रैरग्निं कविमच्छावदामः ।
यो महिम्ना परिबभूवोर्वोऽतावस्ताहुत देवः परस्तात्[3] ॥

'Both Sun and earth on account of Sun's superior gravity have a relative movement bassed on mutual attraction.'[4]

---

१. ब्र०पू०,पु० २४।१७-२३, द्रष्टव्यम्—ब्र०पु०,पू० २१।५७; विष्णुपुराणम्, २।८।२१-२५ ।
२. वेदविद्यानिदर्शने, पृ० १९८ ।
३. उद्धृतम्—वैदिक सृष्टि उत्पत्ति रहस्य, पृ०२०६ ;  ४. तत्रैव, पृ० २०७ ।

सहस्ररश्मिः सूर्योऽपि विनष्टो भवति। यथोक्तञ्च ब्रह्माण्डपुराणे—

सहस्रं यत्तु रश्मीनां सूर्यस्येह विनश्यति।
ते सप्त रश्मयो भूत्वा एकैको जायते रविः॥
निर्दग्धेषु च लोकेषु तदा सूर्यस्तु सप्तभिः[१]॥

**बुधः —**

बुधश्शशिजश्चन्द्रजः सोमपुत्रः श्विषिपुत्रः ज्ञश्चेत्यादिभिर्नामभिर्विभूषितः पुराणेषु। वेदशास्त्रस्य विज्ञं बुधमित्युक्तम्। यथा—'नारायणं बुधं प्राहुर्वेदज्ञानविदो बुधः[२]'। अयं बुधः सूर्यस्य समीपवर्ती ग्रहोऽस्ति, तथा चान्येषां ग्रहाणामपेक्षया सूर्यतापेनाधिकतरः प्रभावितोऽस्ति सूर्यस्यासन्नतया खे प्रातःसायंकालयोरितरकाले न दृश्यते। सूर्योदयात् प्राक् पूर्वाकाशे सूर्यास्ताच्चानन्तरं पश्चिमाकाशे कदाचिद् दृष्टिगोचरं भवतीति। बुधस्योपरि वायुमण्डलं न विद्यते। अष्टाशीतिदिनेष्वयं सूर्यं परितो भ्रमति। शनेः सदृशो बुधस्यापि वलयो वर्तते[३]। डॉ. जे. जे. रावलमहोदयानां मते तु सर्वेषां ग्रहाणां वलया भवन्ति[४]।

**बुधस्य भौतिकं स्वरूपम्—**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम्[५] | ५७९०९१०० कि. मी. |
| २. व्यासमानम् | ४८७८ कि. मी. |
| ३. अक्षपरिभ्रमणकालमानम् | ५८.६ दिनानि |
| ४. सूर्यं परितः परिक्रमकालमानम् | ८८ दिनानि |
| ५. उपग्रहाणां संख्या | ० (शून्यम्) |
| ६. द्रव्यमानम्[६] | ०.०५५ (पृथिव्याः सापेक्षम्) |
| ७. कक्षीयोत्केन्द्रता[७] | ०.२०६ मितम् |
| ८. कक्षीयतिर्यङ्मानम् | ७°००" मितम् |
| ९. कक्षीयगतिमानम्[८] | ४७.८ (कि.मी./सेकेण्ड) |
| १०. पलायनगतिमानम् | ४.२ (कि.मी./सेकेण्ड) |
| ११. गुरुत्वाकर्षणम् | ०.३८ (पृथिवी=१) |

---

१. ब्रह्माण्डपुराणे, पृ० ५।१२३,१२४,१३० ; २. तत्रैव—२४।४९।
३. धर्मयुग-पत्रिका, २८ अगस्त, १९८८, पृ० १७ ; ४. तत्रैव।
५. १-५ नवीन राष्ट्रीय एटलस, पृ० २; ६. विज्ञान, भाग–२. एन.सी.ई.आर.टी., पृ० १२१।
७. ७–८ ग्रह और उपग्रह, पैट्रिकमूर, परिशिष्ट–५।
८. अन्तरिक्ष की ओर, परिशिष्ट–१।

| | |
|---|---|
| १२. घनत्वम् | ०.९८ (पृथिवी = १) |
| १३. पृष्ठीयतापमानम्[1] | ४०० सेंटीग्रेटमितम् । |

**शुक्रः —**

शुक्रः सित-उशना-काव्य-भार्गवश्चेति नाम्ना प्रथितः। अयं ग्रहः सूर्यसदृशः प्रभासम्पन्नो दृश्यते । शुक्रस्य विषये ब्रह्माण्डपुराणस्य मतमस्ति यत्—

भार्गवस्य रथः श्रीमान् तेजसा सूर्यसन्निभः।
पृथिवीसंभवैर्युक्तो ना वा वर्णे हयोत्तमैः॥
श्वेतः पिशङ्गः सारङ्गो नीलः पोतो विलोहितः।
कृष्णश्च हरितश्चैव पृषत् पृश्निरेव च[2]॥

उपर्युक्तमतमाधुनिका वैज्ञानिका अपि स्वीकुर्वन्ति । उक्तञ्चापि—

Venus reflects about 60 Percent of the sunlight that falls upon it.[3]

पश्चिमाकाशे सूर्यास्तादनन्तरं चतस्रो वेलां (घण्टां) यावत् पूर्वाकाशे च सूर्योदयात् पूर्वं चतस्रो वेलां यावद् दृश्यते। दर्शने दीप्तिमान् सुन्दरश्च प्रतिभाति। अस्य ग्रहस्य वायुमण्डलं त्वस्ति परन्तु संलग्नं वायुमण्डलम् 'आक्साजन' इत्यनेन रहितो वर्तते[4] । २२४.७ दिनेषु एकं भचक्रं पूर्णं करोति ।

**शुक्रस्य भौतिकं स्वरूपम् —**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम्[5] | १०८२०८९०० कि.मी. |
| २. व्यासमानम् | १२१०० कि.मी. |
| ३. अक्षपरिभ्रमणकालः | २४३ दिनानि |
| ४. सूर्यं परितः परिक्रमणकालः | २२४.७ दिनानि |
| ५. उपग्रहाणां संख्या | ० (शून्यम्) |
| ६. द्रव्यमानम्[6] | ०.८ पृथिव्याः सापेक्षम् |
| ७ कक्षीयोत्केन्द्रता[7] | ०.००७ |
| ८. कक्षीयावनतता | ३°२४" |
| ९. कक्षीयगतिमानम्[8] | ३५.० (कि.मी./सेकेण्ड) |

१. ताराभौतिकी, पृ० २६५; २. ब्रह्माण्डपुराणम्, पू० २३।८१-८३ ।
३. लाइफ ऑन अदर वर्ल्ड्स्, पृ० १०२ ; उद्धृतम्—वेदविद्यानिदर्शने, पृ० २९७ ।
४ पृथ्वी की आयु, पृ० २६ ; ५. १-५ नवीन राष्ट्रीय एटलस, पृ० २ ।
६. विज्ञान. भाग--२, एन सो.ई.आर.टो. ; ७. ७-८ ग्रह और उपग्रह, परिशिष्ट--५ ।
८. ९-१२ अन्तरिक्ष की ओर, परिशिष्ट-१ ।

| | |
|---|---|
| १०. पलायनगतिमानम् | १०.३ (कि.मी./सेकेण्ड) |
| ११. गुरुत्वाकर्षणम् | ०.८९ (पृथिवी=१) |
| १२. घनत्वम् | ०.८८ (पृथिवी = १) |
| १३. पृष्ठीयतापमानम्[1] | ५५-२० सेंटीग्रेटमितम् । |

**पृथिवी —**

एकस्मिन् समये खे यत्र-तत्र सर्वत्र वाष्पकणा व्यापकरूपेण व्याप्ता आसन् । तेषां वाष्पकणानामाकर्षणविकर्षणयोः सकाशाद् अणु-परमाण्वादयः समुत्पन्नाः । एत एव पृथिव्युत्पत्तौ कारणभूताः । अस्मिन् विषये जैनदर्शनस्य मतं वर्तते यत्[2]— 'अण्वादानां संघाताद् द्व्यणुकादय उत्पद्यन्ते । तत्र स्वावस्थिताकृष्टशक्तिरेवाद्यसंयोगे कारणभावमापद्यते' । ख्रीष्टमते भूमेरुत्पत्तिः —'आरम्भ में ईश्वर ने आकाश और पृथ्वी को सिरजा, पृथ्वी बेडौल और सूनी थी और महिराव पर अन्धकार था और ईश्वर का आत्मा जल के ऊपर डोलता था'[3] । यावनपावनग्रन्थस्य 'कुरान'स्य मते भूमेरुत्पत्तिः—'अल्लाह ने आसमानों और पृथ्वी को ६ दिनों में उत्पन्न किया'[4] ।

पृथिव्या वर्णनमेतदतिरिक्तेषु बहुषु धर्मग्रन्थेषु विभिन्नरूपेणोपलभ्यते; परमत्र तेषामुल्लेखो विस्तरभयान्न क्रियते । यतो ह्यस्मिन् शोधप्रबन्धे भुवनकोशवर्णनप्रसङ्गे मया पृथिव्याः सविस्तरं विवेचनमुपस्थापितम् ।

**पृथिव्याः भौतिकं स्वरूपम्[5] —**

| | |
|---|---|
| १. व्यासमानम्— | |
| • भूमध्यरेखीयः | १२७५६ कि.मी. |
| • ध्रुवीयः | १२७१४ कि.मी |
| २ घनत्वम् | ५.५२ (जलस्यापेक्षागुण्यम्) |
| ३. पृष्ठीयतापमानम् | २२ सेंटीग्रेटमितम् |
| ४. सूर्यं परितः परिभ्रमणकालः | ३६५.५ दिनानि |
| ५. अक्षीयपरिक्रमणकालः | २३ घण्टा, ५६ मिनट, ४ सेकेण्ड |
| ६. सूर्याद्दैर्घ्यमानम् | १४९६००००० कि.मी. |
| ७. कक्षीयगतिः | २९.८ कि.मी./सेकेण्ड |
| ८. अक्षीयावनतता | २३.५ अंशात्मकम् |
| ९. पलायनगतिः | ११.२ कि.मी./सेकेण्ड |

१ ताराभौतिकी, पृ० २६५ ; २. पृथ्वी की आयु, पृ० ४७ ।
३-४. उद्धृतम्—पृथ्वी की आयु, पृ० ४८ ; ५. प्रतियोगिता दर्पण, जनवरी, ८७, पृ. ५६५ ।

१०. वायुमण्डलस्य मुख्यावयवाः

- नाइट्रोजनम्  ७८.५ प्रतिशताङ्काः
- आक्सीजनम्  २१ प्रतिशताङ्काः

११. भूपटलस्य मुख्यावयवाः

- ऑक्सीजनम्  ४७ प्रतिशताङ्काः
- सिलिकनम्  २८ प्रतिशताङ्काः
- एल्युमिनियम  ८ प्रतिशताङ्काः
- लोहकम्  ५ प्रतिशताङ्काः

१२. भूतलस्य क्षेत्रफलम्  १४८३२६००० वर्ग-कि० मीटराणि
१३. भूतलम्  २९ प्रतिशताङ्काः
१४. जलीयक्षेत्रफलम्  ३६१७४०००० वर्ग-किलोमीटराणि
१५. जलीयक्षेत्रम्  ७१ प्रतिशताङ्काः
१६. सर्वोच्चपर्वत ऐवरेस्टशिखरस्य दैर्घ्यमानम्  ८८४८ मीटराणि
१७. गहनतमं प्रशान्तमहासागरस्य मैरीयानागर्तमानम् ११०३३ मीटराणि
१८. आयतनम्[1]  १०८३२०८८४०००० घनकिलोमीटराणि
१९. परिक्रमणमार्गस्य दैर्घ्यमानम्  ९६ कोटि-किलोमीटराणि
२०. उपग्रहः  १ ( चन्द्रमा ) ।

**भूपटलस्य रासायनिकयोगाः[2]—**

आधुनिकानुसन्धानानुसारेण निम्नाङ्कितानि तत्त्वानि सन्त्यस्माकं भूमौ (द्रष्टव्यं चित्रम्–४)।

| तत्त्वानि | तत्त्वानां प्रतीकाः | प्रतिशताङ्काः |
|---|---|---|
| १. आक्सीजनम् | O | ४६.७१ |
| २. सिलिकॉन | Si | २७.६९ |
| ३. एल्युम्यूनियम | Al | ८.०७ |
| ४. लौहकम् | Fe | ५.०५ |
| ५. कैलसियम | Ca | ३.६५ |
| ६. सोडियम | Na | २.७५ |
| ७. पोटेशियम | K | २.५८ |
| ८. मैगनीशियम | mg | २.०८ |
| ९. टाइटेनियम | TI | ०.६२ |
| १०. हाइड्रोजन | H | ०.१४ |

१. १८-२० नवीन राष्ट्रीय एटलस, पृ० २;  २. पृथ्वी की आयु, पृ० ४१–४२।

| | | |
|---|---|---|
| ११. फास्फोरस | P | ०.१३ |
| १२. कार्बन | C | ०.०९४ |
| १३. मैगनीज़ | Mn | ०.०९० |
| १४. गन्धक | S | ०.०५२ |
| १५. बेरियम | Ba | ०.५० |
| १६. विरल तत्त्व | | ०.२४४ |
| | योगः | १००.०० |

भूपटलस्याणूनां योगः[१]—

| अणवः ( OXIDE ) | अणुसूत्राणि | प्रतिशताङ्काः |
|---|---|---|
| १. सिलिका | $SiO_2$ | ५९.०७ |
| २. ऐल्यूमिना | $Al_2O_3$ | १५.२२ |
| ३. कौहिक आक्साइड | $FeO_3$ | ३.१० |
| ४. लोहस आक्साइड | $FeO_2$ | ३.७१ |
| ५. मैगनोशिया | $MgO$ | |
| ६. कैलसियम आक्साइड | $CaO$ | ५.१० |
| ७. सोडियम आक्साइड | $Na_2O$ | ३.७१ |
| ८. पोटाशियम आक्साइड | $K_2O$ | ३.११ |
| ९. हाईड्रोजन आक्साइड | $H_2O$ | १.३० |
| १०. कार्बनडाई आक्साइड | $CO_3$ | ०.३५ |
| ११. टाइटेनियम आक्साइड | $TiO_2$ | १.०३ |
| १२. फासफोरस आक्साइड | $P_2O_3$ | ०.३० |
| १३. मैगनीज डाई आक्साइड | $MnO_2$ | ०.११ |
| १४ जिरकॉन आक्साइड | $Zro_2$ | ०.०४ |
| १५. बोरियम आक्साइड | $BaO$ | ०.०५ |
| १६. स्ट्राशियम आक्साइड | $SrO$ | ०.०२ |
| १७. शेषः | | ०.३३ |
| | योगः | १००.०० |

उपर्युक्तसारिण्यनुसारेण स्पष्टमस्ति यद् भूपटलेऽष्टनवतितत्त्वानां मध्ये नवतत्त्वानि प्रमुखरूपेणोपलभ्यन्ते । एतेष्वपि आक्सोजन–सिलिकन–ऐल्यूमिनियम-तत्त्वानामुल्लेखो विशेषरूपेण भवति ।

१. पृथ्वी की आयु, पृ० ४१-४२ ।




चित्रम्-4

**पृथिव्या अन्तर्भागः—**

पृथिव्या गर्भे किमस्ति ? कीदृशी स्थितिस्त्र विद्यते। अस्मिन् विषये बहूनि मतमतान्तराणि सन्ति। केचिद्दग्निगर्भा इति मन्यन्ते पृथिवोम् । प्रसङ्गेऽस्मिन् वैदिक-

साहित्ये उद्धृतमस्ति यत्—'आग्नेयी पृथिवी'[१], 'आग्नेयोऽयं लोकः'[२], 'अग्निगर्भा पृथिवी'[३]। अनेन स्पष्टं भवतीति यद् वैदिककालेऽपीयमेव धारणा आसीद् यत् पृथिव्या आन्तरिकं स्वरूपं प्रदर्शयति चित्रम्–५।

**चन्द्रः —**

प्रजापतिना प्रथमं भूमिरुत्पादिता। तदन्तरञ्चान्तरिक्षं वयांसि–मरुद्गणाश्चोत्पन्ना अभवन् तदा प्रजापतिरादित्यमसृजत्, आदित्यात् चन्द्रस्य सृष्टिरभवत्। अस्मिन् विषये माध्यन्दिनमुनेः प्रवचनम्[४]—'सोऽकामयत। भूय एव स्याम्। प्रजायेयेति। स आदित्येन दिवं मिथुनं समभवत्। तत भाण्डं समवर्तत। तद् अभ्यशूयत्। रेतो विवृहोति। ततश्चन्द्रमसृज्यत। एष वै रेतः। अथ यदश्रुसंक्षरितमासीत्, तानि नक्षत्राण्यभवन्। अथ यः कपाले रसो लिप्त आसोत् ता अवान्तरदिशोऽभवन्। अथ यत् कपालमासीत् ता दिशोऽभवन्'। पुनश्च चन्द्रमधिकृत्यान्येऽपि विचाराः दृश्यन्ते, यथा—'आदित्याद्वै चन्द्रमा जायते'[५], अपि च—'चन्द्रमा मनसो जातः'[६]।

पुनश्च पुराणेषु—'ऋक्षचन्द्रग्रहाः सर्वे विज्ञेयाः सूर्यसम्भवाः'[७], 'शीतरश्मिः समुत्पन्नः कृत्तिकासु निशाकरः'[८]।

**चन्द्रोत्पत्तिविषये पाश्चात्यानां मतम् —**

चन्द्रोत्पत्तिसन्दर्भे सर्वे पाश्चात्यविदुषो मन्यन्ते यत् चन्द्रस्योत्पत्तिः पृथिव्या अभवत्। चार्ल्स-डारविनमहोदयस्य पुत्रस्य जार्ज-एच० डार्विनमहोदयस्य मतं जार्ज-गेमोमहोदयो लिखति—

The separation of the Moon from the parent body of the earth took place during a campartively late stage of evalution.[९]

इमेनुएल-वेलीकोब्सकीमहोदयस्तु कथयति यच्चन्द्रात् पृथिवो समुत्पन्ना। चन्द्रस्य स्वल्पाकारोऽस्य सिद्धान्तस्य बाधको नास्ति। यथा च—

The problem of the origin of the Moon can be regarded as disturbing to the Tidal theory. Being smaller than the earth the

१. ता० ब्रा० १५।४।८; २. जैमिनीयोपनिषद्—१।३७।२।
३. श० ब्रा० १४।९।४।२१; उद्धृतम्--वैदिक वाङ्मय का इतिहास, पृ० १८१-१९१।
४. श० ब्रा० ६।१।२।४; ५. ऐ० ब्रा० ४०।५।
६. तै० आ० ३।१२; ऋ० सं० १०।९०।१०।
७. वायुपुराणे—१।५३।२८; ८. ब्रह्माण्डपुराणे—१।२४।१३०।
९. बायोग्राफी आँफ द अर्थ, पृ० ४३; उद्धृतम्—वेदविद्यानिदर्शने, पृ० २६२।

Moon completed earlier the process of cooling and shrinking, and the lunar volcanoes had already ceased to be active. It is assumed that the Moon possesses a higher specific weight than the earth ( worlds in collision, p. 236 ).

It is assumed that the Moon was produced from the superficial layers of the earth's body, which are rich in light silicon.

But since the specific weight of the Moon is greater than that of the earth it would seem to be more in accord with the theory that the earth was born of the Moon, despite its smallness.[1]

**चन्द्रमसो भौतिकं स्वरूपम्—**

चन्द्रः पृथिव्या एकमात्रप्राकृतिक उपग्रहोऽस्ति। अयं पृथिव्यपेक्षया लघुतमोऽस्ति। अस्य कक्षीयाक्षीयभ्रमणञ्च तुल्यसमये भवति। तत्र वायुमण्डलं नास्ति। अनेन कारणेन तत्र जीवनस्य वानस्पतिकजीवनस्य चास्तित्वं नैव प्राप्नोति। जलविहीन-मरुस्थलमेव केवलं तत्र विद्यते। चन्द्रमसि उल्कापाषाणखण्डानामतिवृष्टिर्भवति। उल्कापातेन तत्र गम्भीराणि बहूनि गर्तानि निर्मितानि सन्ति। तेषां गर्तानामाकार-प्रकाराः पृथक् पृथग् वर्तन्ते। तत्र चोत्तुङ्गोत्तुङ्गतराः पर्वता अपि सन्ति। तेषां मध्येऽपि चन्द्रमसोः दक्षिणध्रुवप्रदेशे सर्वोन्नतपर्वतस्योत्तुङ्गदैर्घ्यमानं १०.६६० मीटरा-त्मकमस्ति। य एवरेस्टपर्वतादप्युत्तुङ्गोऽस्ति। चन्द्रमस एको दिवसः पृथिव्याः पञ्च-दशदिवसानां तुल्योऽस्ति। पञ्चदशदिवसान् यावच्चन्द्रस्यैका भागः सूर्यतापेन तपति तदनन्तरञ्च तावदेव द्वितीयम्। चन्द्रमण्डले वायुमण्डलस्याभावाद् ध्वनि-सञ्चारो न भवति यतो ध्वनिसञ्चाराय कस्यचिन् माध्यमस्यावश्यकता भवति। वायुमण्डलस्याभावेन चन्द्रमण्डलादाकाशस्य वर्णः कृष्णो दृश्यते, न तु नीलः। यथा भौतिकं स्वरूपम्—

| | |
|---|---|
| १. ग्रहाद् दैर्घ्यमानम् | ३८४४०० कि० मी० |
| २. व्यासमानम् | ३४७६ कि० मी० |
| ३. कक्षीयाक्षीयभ्रमणकालश्च[2] | २७.६ दिनानि |
| ४. कक्षीयोत्केन्द्रता | ०.०५५ |
| ५. कक्षीयावनतता[3] | ५° ९' |

१. उद्धृतम्—वेदविद्यानिदर्शने पृ० २६३;    २. १-३ अन्तरिक्ष की ओर, परिशिष्ट २।
३. ४-५ ग्रह और उपग्रह, पृ० २२२।

| | |
|---|---|
| ६. द्रव्यमानम् | ०.०१२३ ( पृथिवी = १ ) |
| ७. घनत्वम् | ३.३४ ( जलम् = १ ) |
| ८. गुरुत्वाकर्षणम्[1] | ०.१६५ ( पृथिवी = १ ) |
| ९. पलायनगतिः | २.३८ ( कि०मी०/सेकेण्ड ) |
| १०. तापमानमधिकतमम्[2] | ११० सेंटीग्रेटमितम् |
| न्यूनतमम् | –१८० सेंटीग्रेटमितम् । |

**पृथिवीग्रहणम्—**

सूर्यचन्द्रमसोर्ग्रहणमिव पृथिव्या अपि ग्रहणं भवति। तत्रापि चन्द्र एव हेतुत्वेन वर्तते। सूर्यकरैरुत्पादिता चन्द्रमण्डलस्य छाया भूमौ पतति, तदेव पृथिव्या ग्रहणम्। इदमपि अमायामेव सम्भवति। पृथिव्या अपेक्षया चन्द्रमसो गुरुत्वाकर्षणबलं न्यूनमस्ति। चन्द्रमसो गुरुत्वाकर्षणबलं पृथिव्या गुरुत्वाकर्षणबलस्य षष्ठांशोऽस्ति। अनेन कारणेन चन्द्रमण्डले मानवा भुवोऽपेक्षया कठिनतममपि कार्यं कर्तुं शक्यन्ते।

**किमभविष्यत् ? यदि न भवेच्चन्द्रः[3]—**

१. पृथिव्या अहोरात्रमानं ११ होरातः १२ होरामितमभविष्यत्।
२. समुद्रीय-'ज्वारा' सदा एकरूपेणागमिष्यत्। तेषामुत्तुङ्गदैर्घ्यमानमपि न्यूनमभविष्यत्।
३. गुरुत्वाकर्षणनियमस्य सत्यापनं विलम्बेनाभविष्यत्।
४. चन्द्रवारो नाभविष्यत्।
५. द्वादशचान्द्रमासा नाभविष्यन्।
६. भूमध्यरेखायभारस्यापेक्षया ध्रुवीयभारमधिकमभविष्यत्।
७. सर्वा रात्रयोऽमावास्यावदन्धकारमया अभविष्यन्।

**कालान्तरे चन्द्रः पृथिव्या उपग्रहो न भविष्यति—**

पृथिवी सर्पिलाकारकक्षायां भ्रमन् शनैश्शनैः सूर्यं प्रत्यग्रसरा भवति। चन्द्रश्च स्वकक्षायां परिभ्रमन् शनैश्शनैः पृथिव्याः सुदूरं गच्छति। यदीयं प्रक्रिया अग्रेऽप्येवंरूपेणैव प्रचलिष्यति, तदा कालान्तरे चन्द्रः सूर्यं परितो भ्रमिष्यति, तदा च सः सूर्यस्य ग्रहो भविष्यति[4]।

---

१ ६-८ताराभौतिकी, पृ० २६५ ; २ ९-१० आविष्कार, फरवरी, १९९१, पृ० ८९।

३. आविष्कार, फरवरी, १९९१, पृ० ८९--९२।

४ प्रतियोगिता दर्पण, जनवरी ८७, पृ० ५६६।

**मङ्गलः —**

भौमस्य वर्णनं पुराणेषु बहुषु स्थलेषु दृष्टिगोचरं भवति। मङ्गलं भौम-लोहिताङ्ग-अङ्गारक-सुरसेनापति-स्कन्द-कुज-भूमिपुत्र-कुमाराश्चापि कथ्यन्ते। यथोक्तं पुराणेषु—

सुरसेनापतिः स्कन्दः पठ्यतेऽङ्गारको ग्रहः[1]।
संयद्वसुश्च यो रश्मिः सा योनिर्लोहितस्य तु[2]॥
अष्टाश्वः काञ्चनः श्रीमान् भौमस्यापि ग्रहो महान्।
पद्मरागारुणैरश्वैः संयुक्तो वह्निसम्भवैः[3]॥
अष्टाश्वः काञ्चनः श्रीमान् भौमस्यापि रथोत्तमः।
असङ्गैर्लोहितैरश्वैः सर्वगैरग्निसम्भवैः ॥
प्रसर्पति कुमारो वै ऋजुवक्रानुवक्रगैः[4] ॥

पुराणेषु भौमो भूमिसुत इत्युक्तः। वैज्ञानिकदृष्ट्या कोऽभिप्राय इति अद्यावधि न स्फुटः। परमस्य वर्णनं ज्योतिषशास्त्रातिरिक्तेष्वन्येष्वपि ग्रन्थेषु दृश्यते। कर्मकाण्डग्रन्थेषु भौमस्य जन्मस्थानं भूमावुज्जयिन्यां निर्दिष्टम्। भारते, अन्यत्रापि चास्य मान्यता युद्धदेवतारूपेण वर्तते। केचनाधुनिका भौमपिण्डस्योपरि वातावरणस्य सत्तां स्वीकुर्वन्ति। तेषां मते तत्र जीवनमस्ति। परं नवीनतमानुसन्धानेन सुस्पष्टं जातं यद् भौमतलस्योपरि स्वल्पं वायुमण्डलमस्ति; परन्तु तत्र जीवनस्य किमपि स्वरूपं नास्ति। भौमस्य वायुमण्डलं पृथिव्या वायुमण्डलस्य घनत्वात् शतगुणं न्यूनमस्ति, तत्र च 'कार्बनडाई आक्साइड-गैस' इत्यस्य मात्राधिकतरा वर्तते। जलमपि तत्र नास्ति। तस्य ध्रुवप्रदेशयोर्यद् हिमं दृश्यते, तन्न हिममिति। तत् कार्बनडाई ऑक्साइड-गैस इति। अनेन कारणेन तत्र पृथिव्याः सदृशं जीवनं न सम्भाव्यते। तत्र दिवसस्य तापमानम् २२ अंशात्मकं यावद् गच्छति तथा च रात्रौ ७० अंशात्मकं न्यूनम् ऋणात्मकं वा भवति।

**भौमस्य भौतिकं स्वरूपम्[5]—**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम् | २२५५६०००० कि० मी० |
| ● अधिकतमम् | २४७०४०००० कि० मी० |
| ● न्यूनतमम् | २०७०००००० कि० मी० |
| २. सूर्यं परितः परिक्रमणकालः | ६८६.९८ दिनानि |

---

१ ब्रह्माण्डपुराणे, पू० २४ ४८ ;        २ वायुपुराणे—५३।४८;
३. वि० पु० २।१२।१८ ;        ४ ब्रह्माण्डपुराणे, पू० २३।८४—८५।
५. विज्ञानप्रगति, अगस्त, १९८८, पृ० ३५६, ३६१।

| | |
|---|---|
| ३. अक्षीयपरिभ्रमणकालः | २४ घं०, २७ मि०, २३ से० |
| ४. कक्षीयोत्केन्द्रता | ०°.०९३ |
| ५. कक्षीयावनतता | १° ५१' |
| ६. द्रव्यमानम् | ० ११ ( पृथिवी = १ ) |
| ७ आयतनम् | ०.१५ ( पृथिवी = १ ) |
| ८. अधिकतमं तापमानम् | २२° सेंटीग्रेटमितम् |
| ९. न्यूनतमं तापमानम् | –७०° सेंटीग्रेटमितम् |
| १०. व्यासमानं विषुवद्वृत्तीयम्[1] | ६७९४ कि० मी० |
| ध्रुवीयम् | ६७५२ कि० मी० |
| ११. कक्षीयगतिमानम्[2] | २४.० ( कि० मी०/सेकेण्ड ) |
| १२. पलायनगतिमानम् | ५ ०० ( कि० मी०/सेकेण्ड ) |
| १३. गुरुत्वाकर्षणम् | ०.३८ ( पृथिवी = १ ) |
| १४. घनत्वम् | ०.७१ ( पृथिवी = १ ) |
| १५. उपग्रहाः | २ |

**भौमस्योपग्रहाः —**

भौमस्य फोबोस-डोमाँसाख्यौ द्वौ उपग्रहौ स्तः । यूनानीभाषायां 'फोबोस' इत्यस्य शब्दस्यार्थोऽस्ति भयः, 'डिमॉस' इत्यस्यार्थश्च संत्रासो वर्तते । 'फोबोस' उपग्रहोऽहोरात्रे भौमं परितस्त्राणि परिक्रमां करोति, 'डिमॉस' इत्यसौ च पञ्चपरिक्रमां करोति[3] ।

**'फोबोस' उपग्रहस्य पतनम्**—फोबोस-उपग्रहं भौमश्शनैश्शनैः स्वीकयं प्रत्याकर्षति । वैज्ञानिकानां मतेनाद्यतः ३–७ कोटिवर्षानन्तरं 'फोबोसः' भौमस्यापरि पतिष्यति[4] ।

**'फोबोस' उपग्रहस्य भौतिकं स्वरूपम्—**

| | |
|---|---|
| १. भौमाद्दैर्घ्यमानम्[5] | ५९५५ कि० मी० |
| २. व्यासमानम् | १६ कि० मी० |
| ३. कक्षीयपरिभ्रमणकालः | ७ घं०, ३९ मि०, १४ से० |
| ४. अन्वेषकः[6] | एफल हॉल ( १९७७ ई० वर्षे ) |

---

१. नवीन राष्ट्रीय एटलस, पृ० २; २. ११-१५ अन्तरिक्ष की ओर, परिशिष्ट–१ ।
३. विज्ञानप्रगति, अगस्त, १९८८, पृ० ३५६; धर्मयुग, २८ अगस्त, १९८८, पृ० ३२-३४ ।
४. विज्ञानप्रगति, १९८८, पृ० ३५९; ५. १-३ अन्तरिक्ष की ओर, पृ० २ ।
६. ४-६ ग्रह और उपग्रह, पृ० २२२ ।

५. कक्षीयोत्केन्द्रता　　　　०°.०१७
६. कक्षीयावनतता　　　　२°

'डिमॉस' उपग्रहस्य भौतिकं स्वरूपम्—

१. भौमाद्दैर्घ्यमानम्[1]　　　　२३४९० कि० मी०
२. व्यासमानम्　　　　८ कि० मी०
३. कक्षीयपरिभ्रमणकाल:　　　　३० घं०, १८ मि०
४. अन्वेषक:[2]　　　　एफल हॉल ( १८७७ ई० वर्षे )
५. कक्षीयोत्केन्द्रता　　　　०°.००३
६. कक्षीयावनतता　　　　०२°

क्षुद्रग्रहा: —

ग्रहोपग्रहातिरिक्तमनेके क्षुद्रग्रहा अपि स्वास्तित्वं रक्षन्तस्तिष्ठन्तीति वैज्ञानिकानुसन्धानेनावगम्यते। तेऽपि सूर्यं परित: परिभ्रमन्ति। सर्वप्रथमं १८०१ तमे ईस्वीयवत्सरे कश्चनैको लघुग्रहो दूरवीक्षणसाहाय्येनावलोकित:। १८४७ ईस्वीयवत्सरं यावदेतेषां संख्या पञ्चमिता सञ्जाता। तदा प्रत्यब्दं नवनवानां क्षुद्रग्रहाणामन्वेषणपरम्परा समारब्धा। खगोलज्ञानामनुमानैरद्यावधि सहस्रद्वयमितानां क्षुद्रग्रहाणां स्थितिरन्तरिक्षे वर्तते[3]।

एषां क्षुद्रग्रहाणां कक्षा भौमबृहस्पत्यो: कक्षयोरन्तर्गता वर्तते। एषु केचन क्षुद्रग्रहा: कदाचिद् भौमकक्षां समुत्तीर्य पृथिव्या: सन्निधिमागच्छन्ति तथा च केचन सूर्यस्यान्तिकं गच्छन्ति। एषां ग्रहाणां कक्षातलं क्रान्तिवृत्तात् ४३ अंशात्मकं यावदवनतमस्ति[4]। अन्यैर्ग्रहै: सह तुलनायामिमे ग्रहा अत्यन्तन्यूना: सन्तीति। अस्मादेवैते क्षुद्रग्रहा इति कथ्यन्ते खगोलज्ञै:।

एषां क्षुद्रग्रहाणामन्वेषणे सर्वप्रथमतया इटलीदेशवास्तव्य: 'गुसेप्पी पीआजो'-महोदयो भाग्यवशात् साफल्यमप्राप्नोत्। १८०१ तमे वर्षे जनवरीमासस्य प्रथमदिने रात्रावेकं क्षुद्रं ग्रहपिण्डं गुरुमङ्गलयो: कक्षयोरन्तरे आसीदेतदुक्तं पियाजोमहोदयै:; परन्तु दुर्भाग्यवशादस्य ग्रहस्य सत्यापनात् पूर्वं ते दिवङ्गता:। तदा पुन: जर्मनगणितज्ञ: 'फ्रेडरिस-ग्रास'-महोदयो नूतनविध्या अमुं क्षुद्रग्रहं १८०१तमे वत्सरे दिसम्बरमासेऽपश्यत्। तैस्तस्य नामकरणं 'सेरेस' इति कृतम्। अस्य ग्रहस्य मध्यमं व्यासमानं ८०० किलोमीटराणि यावदस्तीति। एकाब्दस्यानन्तरं १८०२तमे वत्सरे द्वितीय: क्षुद्रग्रहो दृष्टि-

१. १–३ अन्तरिक्ष की ओर, परिशिष्ट–२;　२. ४–६ ग्रह और उपग्रह, पृ० २२२।
३. सारस्वता सुषमा, ३४ व० ३–४, अ०, पृ० २४६।
४. तत्रैव, पृ० २४६; सौर-परिवार 'गुणाकरमूले', पृ० ५१–५६।

पथं पुनरायातः। वैज्ञानिकास्तु भौमगुरुकक्षयोरन्तरे एकस्य ग्रहस्यानुमानं कुर्वन्ति; परं तत्र प्रत्यब्दं नवं नवं पिण्डं दृश्यतेऽतोऽद्यावधि न काचित् स्थिरा धारणा सञ्जाता यत् कियन्तः पिण्डाः सन्ति। एषु केचन प्रमुखानां पिण्डानां विवरणमत्रोपस्थापितम्।

### प्रथमतो दशक्षुद्रग्रहाणां भौतिकं विवरणम्[1]

| क्रमाङ्काः | क्षुद्रग्रहाणां नामानि | अन्वेषण-ख्रीष्टाब्दाः | सूर्याद्दैर्घ्यम् (माइलानि) | आवर्तकालः (नाक्षत्र-कालवर्षाणि) | कक्षीयाऽवनतता | व्यासमानम् (माइलानि) |
|---|---|---|---|---|---|---|
| १. | सिरीज | १८०१ | २५७०००००० | ४.६० | १०°३७' | ४२७ |
| २. | पालाज | १८०२ | २५७४००००० | ४.६१ | ३४°४८' | २८० |
| ३. | जूनो | १८०४ | २४७८००००० | ४.३६ | १३°००' | १५० |
| ४. | वेस्टा | १८०७ | २१९३००००० | ३.६३ | ७°०८' | २४१ |
| ५. | ऐस्ट्रेआ | १८४५ | २३९३००००० | ४.१४ | ५°२१' | १११ |
| ६. | हेबे | १८४७ | २२५२००००० | ३.७८ | १४°४५' | १०६ |
| ७. | आइरिस | १८४७ | २२१५००००० | ३.६८ | ५°३१' | ९३ |
| ८. | लोरा | १८४७ | २०४४००००० | ३.२७ | ५°५४' | ७७ |
| ९. | मैंटिस | १८४८ | २२१७००००० | ३.६९ | ५°३६' | १३५ |
| १०. | हाइगिया | १८४९ | २९२६००००० | ५.५९ | ३°४९' | २२० |

### केचन पृथिवीं निकषागताः क्षुद्रग्रहाः[2]

| क्रमाङ्काः | नामानि | अन्वेषण-ख्रीष्टाब्दः | आवर्तकाल-वर्षाणि | कक्षीयावनतता | कक्षीयोत्केन्द्रता |
|---|---|---|---|---|---|
| १. | इरोज | १८९९ | १.७६ | १०°.८ | ०.२२ |
| २. | ऐमोर | १९३२ | २.६७ | ११°.९ | ०.४४ |
| ३. | पेपोली | १९३२ | १.८१ | ६°.४ | ०.५७ |
| ४. | ऐडोनि | १९३६ | २.७६ | १°.५ | ०.७८ |
| ५. | हर्मीज | १९३७ | १.४७ | ४°.७ | ०.४८ |
| ६. | इकारस | १९४९ | १.१२ | २३°.० | ०.८३ |

१. ग्रह और उपग्रह, पृ० २२१; २. तदेव, पृ० २२१।

बृहस्पतिः —

बृहस्पतिः सुराचार्यः, देवाचार्यः, गुरुः, आङ्गिरसः[1], बृहत्तेजः, जीवश्चेत्यादि-नामभिः पुराणेषु प्रथितः । वेदानामाङ्गिरसः केवलं बृहस्पतिरेवासीत्[2] । उक्तञ्च ऋग्वेदे—

बृहस्पतिः प्रथमं जायमानो महो ज्योतिषः परमे व्योमन् ।
सप्तास्य तु विजातो रवेण विसप्तरश्मिरधमत तमांसि[3] ॥

तथा च विष्णुपुराणे—

अष्टाभिः पाण्डुरैर्युक्तो वाजिभिः काञ्चनो रथः ।
तस्मिंस्तिष्ठति वर्षान्ते राशौ राशौ बृहस्पतिः[4] ॥

अन्येषां ग्रहाणां तुलनायामस्य गुरुत्वमानं भौतिकं स्वरूपञ्चाप्यधिकं वर्तते । अस्मादेवास्य नाम गुरुरस्ति[5] । आधुनिकानां वैज्ञानिकानां मतेष्वपि गुरोर्घनत्वं सूर्यात् किञ्चिदेव न्यूनमस्ति[6] । बृहस्पतेरुत्पत्तिस्तिष्यनाम्ना नक्षत्रेणाभवदिति केचन कथयन्ति । तद्यथा—

'बृहस्पतिः प्रथमं जायमानः तिष्यं नक्षत्रमभिसम्बभूव'[7] ।

परं बृहस्पतिः पुष्यनक्षत्रादुत्पन्न इति समीचीनं न प्रतिभाति । अस्य प्रथमदर्शनं तदानीमेव जातम् । अतः सहैव पुष्यनक्षत्रस्य गुरोश्च दर्शनं नाभूत् । पुनश्च बृहस्पतेः सन्दर्भे ऋग्वेदस्य मन्त्रमुद्धृतमस्ति—

आ वेधसं नीलपृष्ठं बृहन्तं बृहस्पतिं सदने सादयध्वम् ।
सादद्योनिं दम आ दीदिवासं हिरण्यवर्णमरुणं सपेम[8] ॥

पुरा कैश्चिदियं कल्पना कृता यद् बृहस्पतिरपि सूर्यसदृश एव वर्तते, परं भौतिकदृष्ट्या गहनाध्ययनेन स्फुटं परिज्ञायते यद् बृहस्पतेः पिण्डस्वरूपं सूर्यपिण्डात् सर्वथा भिन्नं विद्यते । तत्र न तथाविधमौष्ण्यं यथा सूर्ये वर्तते; अपि तु तत्र शैत्यं वर्तते । बृहस्पतेर्मण्डलं परितो दृश्यमाना मेघा वस्तुतः कार्बनडाई-आक्साइड-नामकगैस-मिश्रितपदार्थानां पुञ्ज एव वर्तन्ते । गुरोरान्तरिकं भागमुष्णं वायुमण्डलञ्च शीतल-गैसीयपदार्थैर्निर्मितमस्ति[9] ।

---

१. ब्रह्माण्डपुराणे, पृ० २३।८५ ; २. वेदविद्यानिदर्शने, पृ० २९८ ।
३. ऋ० सं० ४।५०।४; अ० सं० २०।८८।४ ; ४. विष्णुपुराणे—२।१२।१९ ।
५. सूर्यसिद्धान्तः, भूमिका, उदयनारायणः, पृ० २८; ६. पृथ्वी की आयु, पृ० २७ ।
७. तै० ब्रा० ३।१।१; ८. सूर्यसिद्धान्तः, भूमिका, उदयनारायणः, पृ० २९ ।
९. सौर-परिवारः, गोरखप्रसादः, पृ० ५६९–५८८; सौरपरिवारः, गुणाकरमूले, पृ० ५७-६२; पृथ्वी की आयु, पृ० २७-२८ ।

**बृहस्पतेर्भौतिकं स्वरूपम्—**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम्[1] | ७७८३३३००० कि.मी. |
| २. विषुवद्वृत्तीयव्यासमानम् | १४२८८० कि.मी. |
| ३. ध्रुवीयव्यासमानम् | १३३५४० कि.मी. |
| ४. अक्षपरिभ्रमणकाल: | ९.९ होरात्मकम् |
| ५. सूर्यं परित: परिक्रमणकाल: | ११.९ वर्षाणि |
| ६. द्रव्यमानम् (भार:)[2] | ३१८.४ (पृथिवी = १) |
| ७. कक्षीयोत्केन्द्रतामानम्[3] | ०°.०४८ |
| ८. कक्षीयावनतता | १°१८' |
| ९. कक्षीयगतिमानम्[4] | १३.०० (कि.मी./सेकेण्ड) |
| १०. पलायनगतिमानम् | ६०.२ (कि.मी./सेकेण्ड) |
| ११. गुरुत्वाकर्षणम् | २.६४ (पृथिवी = १) |
| १२. घनत्वम् | ०.२४ (पृथिवी = १) |
| १३. पृष्ठीयतापमानम्[5] | १४०° सेंटीग्रेटमितम् |
| १४. उपग्रहाणां संख्या[6] | १६ |

**बृहस्पतेरुपग्रहाणां भौतिकस्वरूपविवरणम्[7]**

| उपग्रहाणां नामानि/ अन्वेषका:/ ई० वर्षा: | ग्रहाद्दैर्घ्यमानम् (कि मो.) | व्यासमानम् (कि.मी.) | कक्षीयोत्केन्द्रता | कक्षीयावनतता | आवर्तकाल: (दिनानि) |
|---|---|---|---|---|---|
| १. एलमथिआ/बर्नार्ड:/१८९२ | १८१००० | २४० | ०.००३ | ०°२४' | ०.४९८ |
| २. ईओ/गैलीलियो/१६१० | ४२१७६० | ३६५९ | ०.० | ०° | १.७६९ |
| ३. यूरोपा/गैलीलियो/१६१० | ६७१०५० | ३१०० | ०.० | ०° | ३.५५१ |
| ४ गायनीमीड/गैलीलियो/१६१० | १०७०४०० | ५२७० | ०.० | ०° | ७.१५५ |
| ५. कैलिस्टो/गैलीलियो/१६१० | १८८२६०० | ५००० | ०.० | ०° | १६.६८९ |
| ६. लीडा/ – / – | १११००००० | १५ | ०.० | ०° | २३९.०० |

१. १-५, नवीन भारतीय एटलस, पृ० २ ; २. ताराभौतिकी, पृ० २६५ ।
३. ग्रह और उपग्रह, पृ० २१९ ; ४. ९-१२, अन्तरिक्ष की ओर, परिशिष्ट—१ ।
५. ताराभौतिकी, पृ० २६५ ; ६. नवीन राष्ट्रीय एटलस, पृ० २ ।
७. अवर सोलर सिस्टम, पृ० ९१; अन्तरिक्ष की ओर, परिशिष्ट—२; ग्रह और उपग्रह, पृ० २२२; सोलर सिस्टम, पृ० १४-१५ ।

| | | | | | |
|---|---|---|---|---|---|
| ७. हिमालि/पेरीने/१९०४ | ११४७७६०० | १०० | ०.१५८ | २७°३८' | २५०.५६६ |
| ८. लाइसिथिआ/पेरोने/१९०१ | ११७२०२५० | २० | ०.२०७ | २४°४६' | २५९.२१९ |
| ९. एलारा/निकल्सन/१९३८ | ११७३६७०० | ३० | ०.१३० | २९°०१' | २५९.६५३ |
| १०. एनानको/निकल्सन/१९५१ | २१२००००० | २० | ०.१६९ | १४७° | ६३१.००० |
| ११. कारमे निकल्सन/१९३८ | २२६००००० | २० | ०.२०७ | १६४° | ६९२.००० |
| १२. पासोफे/मेलोते/१९०८ | २३५००००० | २० | ०.३७८ | १४५° | ७४४.००० |
| १३. सिनोपे/निकल्सन/१९१४ | २३६००००० | २० | २.२७५ | १५३° | ७५८.००० |
| १४. थैबे | २२००० | २×५० | – | – | ०.६७५ |
| १५. एड्रास्टिया | १२९००० | २५०×७.५ | – | – | ०.२९८ |
| १६. मैटिस | १२८००० | २० | – | – | ०.२९५ |

**शनिः —**

शनैश्शनैश्चलति यः स शनैश्चरः। सर्वापेक्षया स्वल्पगतिकः शनिः। अत्रेदं कारणं यत् शनेः कक्षा बृहत्तमा विस्तीर्णा चातोऽस्य भगणपूर्तिर्महता कालेन भवति, परिणामतोऽस्य गतिरतीवस्वल्पा भवति। यद्यपि सर्वेषां ग्रहाणां योजनात्मिका गतिस्तुल्यैव भवति[1], परं कोणीयकक्षानुसारतो हीनाधिका भवति।

**वायु-ब्रह्माण्डपुराणयोः शनैश्चरः —**

शनैश्चरं पुनश्चापि रश्मिराप्यायते स्वराट्[2]।
रुद्रो वैवस्वतः साक्षाद् यमो लोकप्रभुः स्वयम्।
महाग्रहो द्विजश्रेष्ठो मन्दगामी शनैश्चरः[3]॥

अस्माकं सौरपरिवारस्य सर्वाधिक आकर्षकोऽयं ग्रहोऽस्ति। अमुं परितो वलयो दृश्यते दूरदर्शकयन्त्रेण। जैफरीमहोदयानां मतेऽस्य ग्रहस्यान्तरिको भागो धातुनिर्मितोऽस्ति, धातुष्वपि लौहस्य मात्राधिकतरा वर्तते। अस्य वायुमण्डले कार्बनडाईआक्साइड-गैसीयपदार्थस्य मात्रा मेघरूपेण विद्यते[4]। शनौ वायुरतितीव्रगत्या प्रचलतीति[5]। अस्य स्वरूपविषये लेखकस्यैवं विचारः —

It is the rings of Saturn that make it such a unique and striking object in the telescope....the rings may therefore be considered as consisting of a great number of tiny moons, Circulating

१. समा गतिस्तु योजनैर्नभःसदां सदा भवेत्।
कलादिकल्पनावशान्मृदुद्रुता च सा स्मृता॥ (सि.शि., ग्र.म.अ., श्लो. २६)

२. वायुपुराणे—१।५३।४९; ३. ब्रह्माण्डपुराणे—१।२४।४९-५०।

४. पृथ्वी की आयु, पृ० २८–२९; ५. विज्ञानप्रगति, मार्च, १९९१, पृ० ३४।

around Saturn....there is little doubt that the fragments of which the ring system is compared are the remnants of a former satellite of Saturn[1].

**शनेर्भौतिकं स्वरूपम्—**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम्[२] | १४२६९७८००० कि० मी० |
| २. विषुवद्वृत्तीयव्यासमानम् | १२०५०० कि० मी० |
| ३. ध्रुवीयव्यासमानम् | १०६९०० कि० मी० |
| ४. अक्षपरिभ्रमणकालः | १०.३ होरात्मकम् |
| ५. सूर्यं परितः परिक्रमणकालः | २९.५ वर्षाणि |
| ६. द्रव्यमानम्[३] | ९५ २ ( पृथिवी = १ ) |
| ७. कक्षीयोत्केन्द्रता[४] | ०°.०५२ |
| ८. कक्षीयावनतता | २°२९' |
| ९. कक्षीयगतिः[५] | ९.६ ( कि० मी०/सेकेण्ड ) |
| १०. पलायनगतिः | ३६.२ ( कि० मी०/सेकेण्ड ) |
| ११. गुरुत्वाकर्षणम् | १ १७ ( पृथिवी = १ ) |
| १२. घनत्वम् | ०.१३ ( पृथिवी = १ ) |
| १३. पृष्ठीयतापमानम्[६] | –१५५° सेंटीग्रेटमितम् |
| १४. उपग्रहाणां संख्या[७] | २२ |

**शनेरुपग्रहाणां भौतिकं स्वरूपम्[८]**

| उपग्रहाणां नामानि/ अन्वेषकाः/ई.वर्षाणि | ग्रहाद्दैर्घ्यमानम् (कि. मी.) | व्यासमानम् ( कि.मी. ) | कक्षीयोत्केन्द्रता | कक्षीयावनतता | आवर्तकालः दि./घ./मि. |
|---|---|---|---|---|---|
| १. एललस(एस.२८)/-/१९८० | १३७१७० | ४०×२० | — | — | — |
| २ प्रोमेथस(एस २७)/-/१९८० | १३९३५३ | २२० | — | — | — |

१. लाइफ ऑन अदर वर्ल्ड्स, पृ० ४६; उद्धृतम्—वेदविद्यानिदर्शने, पृ० ३०३।
२ १-५, नवीन राष्ट्रीय एटलस, पृ० २; ३. ताराभौतिकी, पृ० २६५।
४. ७-८, ग्रह और उपग्रह, पृ० २१९; ५. ९-१२, अन्तरिक्ष की ओर, परिशिष्ट-१।
६. ताराभौतिकी, पृ० २६५; ७. नवीन राष्ट्रीय एटलस, पृ० २।
८. अन्तरिक्ष की ओर, परिशिष्ट-२, अवर सोलर सिस्टम, पृ० ९१, ग्रह और उपगह, पृ० २२३, सोलर सिस्टम, पृ० १४-१५।

| | | | | | |
|---|---|---|---|---|---|
| ३. पैन्डोरा(एस.२६)/-/१९८० | १४१७०० | २०० | — | — | — |
| ४. एपिमैथस(एस.३)/-/१९८० | १५१४२२ | ९०×२२ | — | — | — |
| ५. एस.९/–/१९८० | १५१४२२ | १००×९० | — | — | — |
| ६. जेनस/–/१९८० | १५९००० | ३०० | — | — | ०/१७/५८.५ |
| ७. मोमास/हर्शेल/१७८० | १८५५२० | ५०० | ०.०२० | १°३१' | ०/२२/३७ |
| ८. एनसीलेडस/हर्शेल/१७८० | २३८१०० | ६०० | ०.००४ | ०°०१' | १/८/५३ |
| ९. टेथोस/कासिनी/१६८४ | २९४७०० | १००० | ०.० | १°०६' | १/२१/१८.५ |
| १०. एस.२५/-/१९८० | २९४७०० | ३०-४० | — | — | — |
| ११. एस. १३/-/१९८० | २९४७०० | ३०-४० | — | — | — |
| १२. डिओने/कासिनी/१६८४ | ३७७५०० | ८०० | ०.००२ | ०°०१' | २/१७/४१ |
| १३. रोआ/कासिनी/१६७२ | ५२७२०० | १६०० | ०.००१ | ०°२१' | ४/१२/२५ |
| १४ टीटन/हाइगेन्स/१६५५ | १२२१६२० | ५८०० | ०.०२९ | ०°२१' | १५/२२/४१.५ |
| १५. हाइपेरियन/बॉड/१८४८ | १४८३००० | ५०० | ०.१०४ | ०°२६' | २१/६/३८ |
| १६ इआपेटस/कासिनी/१६७१ | ३५६०२०० | १६०० | ०.०२८ | १४°४३' | ७९/७/५६ |
| १७. फोवे/पिकरिंग १८९८ | १२९५१४४० | २०० | ०.१६३ | १५०° | ५५०/८/५ |
| १८ पेन | | २० | | | |

**अरुणः —**

अरुण एको विशालकायः पिण्डोऽस्ति। अस्यान्वेषकोऽस्ति श्रीमान् विलियमहरशेल-महोदयः। पृथिव्या व्यासस्यापेक्षयाऽस्य ग्रहस्य व्यासमानं चतुर्गुणमधिकं वर्तते। आयतनञ्च चतुःषष्टिगुणमधिकम्। तत्र पृष्ठोयतापमानं १८० अंशात्मकं यावत् शून्यान्न्यूनमस्ति। अस्य पार्श्वे गहनतमं वायुमण्डलमप्यस्ति। चतुरशीतिवर्षेष्वयमेकं भगणं पूर्णं करोतीति[1]।

**अरुणस्य भौतिकं स्वरूपम्—**

| | |
|---|---|
| १ सूर्याद्दैर्घ्यमानम्[2] | २८७०९९१००० कि० मी० |
| २ विषुवद्वृत्तीयव्यासमानम् | ५१४०० कि० मी० |
| ३ ध्रुवीयव्यासमानम् | ५०३०० कि० मी० |
| ४ अक्षपरिभ्रमणकालः | ६० २ होरात्मकम् |
| ५. सूर्यं परितः परिक्रमणकालः | ८४ ० वर्षाणि |
| ६. द्रव्यमानम्[3] | १४.६ ( पृथिवी = १ ) |

१ पृथ्वी की आयु, पृ० २९-३०;	२. १–५. नवीन राष्ट्रीय एटलस, पृ० २।
३. ६–७, ताराभौतिकी, पृ० ६५।

७. पृष्ठीयतापमानम् –१८० सेंटीग्रेटमितम्
८. कक्षीयोत्केन्द्रता[1] ०.०४४
९. कक्षीयावनतता ०°६६'
१०. कक्षीयगतिः[2] ६.८ (कि.मी./सेकेण्ड)
११. पलायनगतिः २२.४ (कि.मी./सेकेण्ड)
१२. गुरुत्वाकर्षणम् १.०५ (पृथिवी=१)
१३. घनत्वम् ०.२३ (पृथिवी=१)
१४. उपग्रहाणां संख्या[3] १५

**अरुणग्रहस्योपग्रहाणां भौतिकस्वरूपविवरणम्[4]**

| उपग्रहाणां नामानि / अन्वेषकाः/ई.वर्षाणि | ग्रहान्मध्यमं दैर्घ्यमानम् (कि.मी.) | व्यास-मानम् (कि.मी.) | कक्षीयो-त्केन्द्रता | कक्षीया-वनतता | आवर्तकालः (दिनानि) |
|---|---|---|---|---|---|
| १. मिरांडा/क्वीपरः/१९४८ | १२९३९० | ४८० | ० ०१ | ०° | १.४१३४८ |
| २. एरियल/लासेलः/१८५१ | १९१०२० | ११५८ | ०.००३ | ०° | २.५२०३८ |
| ३. अमब्रियल/लासेलः/१८५१ | २६६३०० | ११७२ | ०.००४ | ०° | ४.१४४१८ |
| ४. टोटेनिआ/हर्शेल /१७८७ | ४२५९१० | १५८० | ०.००२ | ०° | ८.७०५८७ |
| ५. आवेरान/हर्शेलः/१७८७ | ५८३५२० | १५२४ | ०.००१ | ०° | १३.४६३२४ |
| ६. बेलिन्डा | ४९७७० | ५० | — | — | ०.३३५०३ |
| ७. कॉर्डेलिया | ५३७९० | ५० | — | — | ०.३७६४१ |
| ८. ऑफेलिया | ५९१७० | ५० | — | — | ०.४३४५८ |
| ९. डेस्डिमोना | ६१७८० | ६० | — | — | ०.४६३५७ |
| १०. रोसालिन्ड | ६२६८० | ६० | — | — | ०.४७३६५ |
| ११. क्रैसिडा | ६४३५० | ८० | — | — | ०.४९३०७ |
| १२. बाइनका | ६६०९० | ८० | — | — | ०.५१३२० |
| १३. जूलियट | ६९९४० | ६० | — | — | ०.५५८४६ |
| १४. पोर्सिया | ७५२६० | ५० | — | — | ०.६२३५३ |
| १५. पक | ८६०१० | १७० | — | — | ०.७६१८३ |

१. ८-९, ग्रह और उपग्रह, पृ० २१९; २. १०-१३, अन्तरिक्ष की ओर, परिशिष्ट–१।
३. नवीन राष्ट्रीय एटलस, पृ० २।
४. अन्तरिक्ष की ओर, परिशिष्ट–२; ग्रह और उपग्रह, पृ० २२३; अवर सोलर सिस्टम, पृ० ९१; सोलर सिस्टम, प० १४-१५।

**वरुण: ( नेपच्यून )—**

अन्तरिक्षे स्वकीयस्थितेराभास: स्वयमेवातिशयेन वरुणोऽयच्छत्। वैज्ञानिकैरनुभूतं यत् कश्चिदन्योऽपि पिण्ड आकाशे वर्तते। सततमन्वेषणपरा वैज्ञानिका: स्वल्पेनैव कालेनास्यास्तित्वं परिज्ञातवन्त:। अस्य ग्रहस्य कक्षीयत्रुटियुक्तगत्या एव फ्रांसीसी-विद्वान् लेवेरियरमहोदयोऽस्यान्वेषणमकरोत्। अयं पिण्ड: पृथिव्या अपेक्षया विशालाकारे विद्यमानोऽस्ति। १६५ वर्षेष्वेकं भगणं पूर्णं करोतीति[1]।

**वरुणस्य भौतिकं स्वरूपम्—**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम्[2] | ४४९७०७०००० कि.मी. |
| २. विषुवद्वृत्तीयव्यासमानम् | ४८६०० कि.मी. |
| ३. ध्रुवीयव्यासमानम् | ४७५०० कि.मी. |
| ४. अक्षपरिभ्रमणकाल: | १८.५ होरात्मकम् |
| ५. सूर्यं परित: परिक्रमणकाल: | १६४.८ वर्षाणि |
| ६. द्रव्यमानम्[3] | १७.३ (पृथिवी = १) |
| ७. पृष्ठीयतापमानम् | –२१० सेंटोग्रेटमितम् |
| ८. कक्षीयोत्केन्द्रता[4] | ०.००७ |
| ९. कक्षीयावनतता | १°४६' |
| १०. कक्षीयगति:[5] | ५.४ (कि.मी./सेकेण्ड) |
| ११. पलायनगति: | २३.९ (कि.मी./सेकेण्ड) |
| १२. गुरुत्वाकर्षणम् | ०१.२१ (पृथिवी = १) |
| १३. घनत्वम् | ०.२९ (पृथ्वी = १) |
| १४. उपग्रहाणां संख्या[6] | ८ |

**यम:[7] ( प्लूटो )—**

१९५५तमे ईस्वीयवत्सरे अमेरिकावास्तव्य: खगोलज्ञ: परसिलवलावेल-महोदयोऽस्य ग्रहस्य सन्दर्भे पूर्वानुमानमकरोत्। तत: षोडशवर्षानन्तरं २१ जनवरी, १९३० तमे दिनाङ्के दूरदर्शकयन्त्रेणायं ग्रहो दृष्टिगोचरोऽभवत्[8]। अत्यल्पगत्या भ्रमन् २४८ वर्षेष्वेकं भगणमयं प्रपूरयति। खगोलज्ञा अद्यावधि अस्याध्ययने संलग्ना: सन्तीति।

---

१. पृथ्वी की आयु, पृ० ३०-३१;
२. १-५, नवीन राष्ट्रीय एटलस, पृ० २।
३. ६-७, ताराभौतिकी, पृ० २६५;
४. ८-९, ग्रह और उपग्रह, पृ० २१९।
५. १०–१३, अन्तरिक्ष की ओर, परिशिष्ट–१;
६. नवीन राष्ट्रीय एटलस, पृ० २।
७. कुबेर, नवीन राष्ट्रीय एटलस, पृ० २;
८. पृथ्वी की आयु, पृ० ३१।

**यमस्य भौतिकं स्वरूपम्—**

| | |
|---|---|
| १. सूर्याद्दैर्घ्यमानम्[1] | ५९१३५१०००० कि० मी० |
| २. व्यासमानम् | ३००० कि० मी० |
| ३. अक्षपरिभ्रमणकालः | ६ दिनानि, ९.३ होराः |
| ४. सूर्यं परितः परिक्रमणकालः | २४८.५ वर्षाणि |
| ५. द्रव्यमानम्[2] | ६ ५७ ( पृथिवी = १ ) |
| ६. पृष्ठीयतापमानम्[3] | –२२०° सेंटीग्रेटमितम् |
| ७. कक्षीयोत्केन्द्रता[4] | ०.२४८ |
| ८. कक्षीयावनतता | १७°१०′ |
| ९. कक्षीयगतिः[5] | ४.७ ( कि० मी०/सेकेण्ड ) |
| १०. पलायनगतिः | ५.४ ( कि० मी०/सेकेण्ड ) |
| ११. गुरुत्वाकर्षणम् | ०.५८ ( पृथिवी = १ ) |
| १२. घनत्वम् | ० ९६ ( पृथिवी = १ ) |
| १३. उपग्रहाणां संख्या | १ |

**वरुणग्रहस्योपग्रहाणां भौतिकस्वरूपविवरणम्[6]**

| उपग्रहाणां नामानि/ अन्वेषकाः/ई. वर्षाणि | ग्रहान्मध्यम-दैर्घ्यमानम् (कि. मी.) | व्यास-मानम् (कि. मी.) | कक्षीयो-त्केन्द्रता | कक्षीया-वनतता | आवर्तकालः (दिनानि) |
|---|---|---|---|---|---|
| १. टाइटन/लासेल/१८४६ | ३५५२५० | ३८०० | ०.० | १५९°५७′ | ५.८७७ |
| २. नीरीड/क्वीपर/१९४९ | ५५४५००० | ३०० | ०.७६ | २७°२७′ | ३६०.२ |
| ३. एन. ६/ - /१९८९ | ४८२०० | ५० | — | — | ०.२९ |
| ४. एन. ५/ - /१९८९ | ५०००० | ९० | — | — | ०.३१ |
| ५. एन. ३/ - /१९८९ | ५२००० | १४० | — | — | ०.३४ |
| ६. एन. २/ - /१९८९ | ६२००० | १६० | — | — | ०.४३ |
| ७. एन. २/ - /१९८९ | ७३००० | २०० | — | — | ०.५६ |
| ८. एन. १/ - /१९८९ | ११७५०० | ४२० | — | — | १.१२२३ |

१. १-४, नवीन राष्ट्रीय एटलस, पृ० २; २. अन्तरिक्ष की ओर, परिशिष्ट-१।

३. ताराभौतिकी, पृ० २६५; ४. ७–८, ग्रह और उपग्रह, पृ० २१९।

५. अन्तरिक्ष की ओर, परिशिष्ट–१; ६. अन्तरिक्ष की ओर, परिशिष्ट–२; ग्रह और उपग्रह, पृ० २२३; सोलर सिस्टम, पृ० १४–१५; अवर सोलर सिस्टम, पृ० १०७-१०८।

## यमग्रहस्योपग्रहस्य भौतिकस्वरूपविवरणम्[१]

| | | | | | |
|---|---|---|---|---|---|
| १. चेरॉन/- १९७८ | २×५५९.७ १९१३० | — | — | ६.३८७१८ |

**धूमकेतुः (कोमेट)—**

ग्रहोपग्रहक्षुद्रग्रहान् विहाय सौरमण्डले केचनैतादृशा अपि पिण्डाः सन्ति, ये कदाचिदेव व्योम्नि दृश्यन्ते। एते पिण्डाः केवलं सप्तदिनं यावन्मासपर्यन्तं वाऽवलोक्यन्ते। ते तदनन्तरमदृश्या भवन्ति। एतेषामाकृतयो न तथाविधा भवन्ति यथाऽन्येषां पिण्डानाम्। एषामादौ प्रकाशपुञ्जं किञ्चिद् वर्तुलं भवति। पृष्ठभागे चैकं पुच्छं भवति। यदा यदा ते भ्रमन्तः सूर्यं समया समागच्छन्ति तदा तदा पुच्छस्य दैर्घ्यमानं वर्धते। अस्मात् कारणादेते 'पुच्छल-तारक'नाम्ना प्रसिद्धा अभवन्। पुच्छलतारको जनैर्धूमकेतुरपि कथ्यते। यस्य पुच्छस्य निर्माणं धूमेनाभवत् सोऽस्ति धूमकेतुः। वेदेषु वेदेतरसाहित्येष्वपि धूमकेतूनां वर्णनं बहुषु स्थलेषु विस्तरेणोपलभ्यते। यथा च—

शन्नो मृत्युर्धूमकेतुः शं रुद्रास्तिग्मतेजसः[२] ॥
असंभृष्टो जायसे मात्रोः शुचिर्मन्द्रः कविरुदतिष्ठो विवस्वतः।
घृतेन त्वावर्धयन्नग्न आहुत धूमस्ते केतुरभवद्दिवि श्रितः[३] ॥

एवमेव ब्रह्माण्डपुराणे—

सर्वग्रहाणामेतेषां आदिरादित्य उच्यते।
ताराग्रहाणां शुक्रस्तु केतूनामपि धूमवान्[४] ॥

आचार्यवराहमिहिरस्य प्रसिद्धग्रन्थे बृहत्संहितायां केतूनां वर्णनं विस्तृतरूपेणोपलभ्यते। भारतीयपद्धतावेतेषां नामानि रविपुत्रचन्द्रपुत्रगुरुपुत्र-रविसम्भवबुधसम्भव-शुक्रसम्भवाश्चेत्यादीनि सन्ति। ऋषीणां नामानुसारमपि पुच्छलतारकाणां नामकरणं समुपलभ्यते[५]। यथा—उद्दालककेतुः, काश्यपकेतुश्चादयः। दैवज्ञा भारतीयाः केतूनां वर्णरूपाकारावर्तकानां चापि वर्णनमकुर्वन्। बृहत्संहिताग्रन्थस्य टीकायां केतूनामावर्तकालान् प्रदर्शयन् पराशरसंहिताया मतं भट्टोत्पलः प्रस्तौति। तद्यथा—

पैतामहश्चलकेतुः पञ्चवर्षशतं प्रोष्य उदितः। अथोद्दालकश्वेतकेतुर्दशोत्तरवर्षशतं प्रोष्य दृश्यः। शूलाग्राकाशं शिखां दर्शयन् ब्रह्मराशिं सप्तर्षीन् संस्पृश्य कश्यपः श्वेतकेतुः पञ्चदशवर्षशतं प्रोष्यैन्द्र्यां पद्मकेतोश्चारान्ते नभस्त्रिभागमाक्रम्यापसव्यं निवृत्यार्द्धप्रदक्षिणं जटाकारशिखः। अथ रश्मिकेतुर्विभावसुजः प्रोष्य शतमावर्त्तकेतोरुदितश्चारान्ते कृत्तिकासु धूमशिखः[६]।

---

१. अन्तरिक्ष की ओर, परिशिष्ट-२; ग्रह और उपग्रह, पृ० २२३; सोलर सिस्टम, पृ० १४-१५; अवर सोलर सिस्टम, पृ० १०७-१०८।

२. अ० सं० १०।६।१०;　३. ऋ० सं० ५।११।३;　४. ब्रह्माण्डपुराणे— १।२४।१३९।

५. पृथ्वी की आयु, पृ० ३४;　६. बृहत्संहितायाम्—११।३०-४०।

आचार्यदेवलोऽष्टोत्तरशतं (१०८) केतूनां वर्णनं करोतीति[१]। पराशरस्य मते तु केतूनां संख्या एकोत्तरशतमस्ति। एष्वेको धूमोद्भवोऽस्ति। तस्यैव नाम धूमकेतुरस्ति। एवं संहितानामाधारेण विभिन्नानां केतूनां नामानि तेषां संख्या चात्र सङ्कलिता। यथा—

| केतूनां नामानि | केतूनां संख्या |
|---|---|
| १. आग्नेयाः | १५ |
| २. रौद्राः | २१ |
| ३. उद्दालकिसुताः | १० |
| ४. काश्यपेयाः | १४ |
| ५. मृत्यवः | ४ |
| ६. क्षितितनयाः | २५ |
| ७. सोमसम्भवाः | ३ |
| ८. वारुणाः | ३ |
| ९. यमपुत्राः | १३ |

अद्भुतसारे औद्दालकिश्वेतकेतोर्वर्णने पराशरस्याभिमतमुद्धृतम्। यथा—'औद्दालकिश्वेतकेतुर्दशोत्तरं वर्षशतं प्रोष्य भवकेतोश्चारान्ते पूर्वस्यां दिशि दक्षिणाभिनतशिखोऽर्धरात्रिकाले दृश्यः, तेनैव सह द्वितीयप्रजापतिसुतः पश्चिमेन 'क'नामा ग्रहः केतुर्युगसंस्थायो युगपदेव दृश्यते। तावुभौ सप्तरात्रिपर्यन्तं दृश्यौ[२]।

पाश्चात्यखगोलज्ञैरन्वेषितानां केतूनां मध्ये हेलोधूमकेतुः (द्रष्टव्यं चित्रम्–६), एकोधूमकेतुः, डानाटोधूमकेतुः, टेम्पलधूमकेतुरित्यादयः प्रसिद्धाः सन्तीति। हेलोधूमकेतोर्भगणकालः ७६ वर्षाणि, एकोधूमकेतोर्भगणकालः ३.३३ वर्षाण्यस्ति तथा च टेम्पलधूमकेतुरुल्काराशौ परिणतोऽभवत्[३]।

सौरमण्डलस्य ग्रहसदृशा इमे धूमकेतवोऽपि सूर्यं परिक्रामन्ति। प्रत्येकस्य परिक्रमणकालो पृथक् पृथग् भवतीति। एतेषां परिक्रमणकालस्यावधिः ३.५ वर्षेभ्य आरभ्य १० लक्षवर्षेभ्योऽधिकवर्षाणि यावद् भवितुं शक्यते[४]। अनेकेषां धूमकेतूनां परिक्रमणमार्गो ग्रहाणां परिक्रमणमार्गतो विपरीतो भवतीति। तेषु केचन दक्षिणावर्तिनस्तथा च केचन वामावर्तिनः। तेषां कक्षायाः क्रान्तिवृत्तीयकक्षायाः सापेक्षं कोणीयमानानि $0^\circ$ तः $180^\circ$ यावद् भवन्तीति[५]।

---

१. वेदविद्यानिदर्शने, पृ० ३०४–३०६।

२. अद्भुतसारः, पृ० १८४; उद्धृतम्—वेदविद्यानिदर्शने, पृ० ३०४–३०६।

३. सृष्टि की कथा, पृ० १०७; ४. विज्ञानप्रगति, जुलाई, १९७०।

५. सारस्वती सुषमा, ३४ व० ३-४ अ०।



प्रसिद्धहेलीकेतुः १३ मई, १९१०　　[ लॉवेल वेधशाला ]
[ चित्रम्–६ ]

एतादृशा अपि धूमकेतवः सन्ति येषां कक्षाः परवलयाकृतावथवाऽतिपरवलयाकृतौ प्रनोयन्ते। यदि वस्तुत एषां कक्षाः परवलयाकारातिपरवलयाकारा वा स्युः, तर्हीदृशा धूमकेतव एकदा सूर्यस्य समोपमागत्य परावृत्य पुनर्नैवागमिष्यन्तोति। अत एषां कक्षा दार्घवृत्तीया एव भवितुमर्हन्ति।

उल्का—

रात्री नभसि पतमानान् तारकान् प्रायशः सर्वे जना अवलोकयन्ति। एताः सन्त्युल्काः। उल्केति भङ्गुराणि नक्षत्राण्युच्यन्ते। एषां निरतिशयो वेग एवेदृशो यद्यदैते दृश्यन्ते तदा पृथिव्याः सन्निकट एवानुभूयन्ते। इमे लघुकायाः पिण्डाः पिण्डखण्डा वा भवन्ति, ये ग्रहवत् सूर्यं परिक्रामन्ति, कतिपयास्तु कस्यचिद् धूमकेतोः कक्षायामेव भ्रमन्तो दृश्यन्ते। एतेनानुमोयते यदेते धूमकेतोः पुच्छस्य विकीर्णाः खण्डा एव[1]। यथोक्तमथर्ववेदे—

'शन्नो भूमिर्वेप्यमाना शमुल्का निर्हतं च यत्'[2]।

१. मुख्यत उल्कापिण्डानां त्रयः श्रेण्यो भवन्ति। प्रथमश्रेण्यां लघुकाया उल्कापिण्डा भवन्ति। या उल्का भूमौ पतनात् पूर्वमेव पृथिव्या वायुमण्डले घर्षणेन दग्धा भूत्वा वाष्परूपे रजकणे परिणता भूत्वा नभसि एव विलुप्ता भवन्ति, ते भूमिं यावन्न प्राप्नुवन्ति।

२. द्वितीयश्रेण्यां ता उल्का याः प्रथमश्रेण्या अपेक्षया स्थूला भवन्ति, अत्यधिकं प्रकाशिता च भवन्ति। इमे 'अग्निगोलका' अपि कथ्यन्ते। यदैता भूमेर्वायुमण्डलं प्रविशन्ति तदा भूमेर्वायुमण्डलैः संघर्षणेन प्रचण्डनादं भवति। तदनन्तरमेता उल्का वायुमण्डल एव भस्मीभूता भवन्ति। एताः पृथ्वीं यावन्नागच्छन्ति।

३. तृतीयश्रेण्यां ता उल्का समायान्ति या ज्वलन्तः पृथ्वीं यावत् प्राप्नुवन्ति। इमा उल्कापिण्डा बृहत्काया भवन्ति। उल्कापिण्डाः प्रज्वलन्त्योऽतितीव्रवेगेन भूमौ यत्र पतन्ति तत्र गर्ताः सञ्जायन्ते। अरियोनानाम्नि स्थाने कश्चन गर्तः ५७० फुटमितं गभोरस्तथा ४२०० फिटमितो विस्तृतो वर्तते। अयं गर्तः ५००० वर्षेभ्यः पूर्वमुल्कापातेन निर्मितः। २० जून, १९०८ तमे वत्सरे उत्तरोसाइबेरियाप्रान्ते उल्कापातोऽभवत्। तेन ३–४ वर्गमोलात्मकं क्षेत्रं विनष्टम्। अरण्यास्तृणरहिताः सञ्जाताः। तत्केन्द्रं परितः प्रायेण पञ्चक्रोशं यावत् सर्वाणि वस्तूनि तत्तेजोऽभिभूतानीषद्दग्धानीव व्यजायन्त। उल्कापाताद् भूमौ लघुबृहत्काया विभिन्ना गर्ताः सञ्जाताः। बृहत्तमस्य गर्तस्य विस्तृतिः १५० फुटपरिमिता। फैरिगटनमहोदयानुसारेगोलकापातात् प्राप्तपाषाणे निम्नाङ्कितानां रासायनिकतत्त्वानां योगोऽन्वेषितः। यथा—

१. सारस्वती सुषमा, ३४ व० ३–४ अ० पृ० २४८; २. अ० सं० १९।९।७।



उत्तरीकनाडानामके स्थानेऽयमुल्कापिण्डेन विनिर्मितो गर्तः (क्रेटर) ६ मीलात्मकं विस्तृतं तथा ७०० फुटमितं गम्भीरमस्ति ।



अयं निकेललोहधातुभ्यां विनिर्मित उल्कापिण्डो ग्रीनलैण्डनामके स्थाने प्राप्तमभवत्, यस्य भारः ३६.५ टनमितमस्ति ।

[ चित्रम्-७ ]

| तत्त्वानि | मात्राः |
|---|---|
| १. लोहकम् | ७२.०६% |
| २. ऑक्सीजन | १०.१% |
| ३. निकिल | ६.५% |
| ४. सिलिकन | ५.२% |
| ५. मैगनीशियम | ३.८% |
| ६. अन्यः | ०.५% |

पृथिव्यां बहुषु स्थलेषूल्कापाषाणखण्डा अद्यापि विद्यमानाः सन्ति । बृहत्तमस्य पाषाणखण्डस्य भारः ६० टनमितोऽस्ति[1] (द्रष्टव्यं चित्रम्-७ ) ।

१. विज्ञानप्रगति, नवम्बर, १९७०, पृ० ४०३-४०४; पृथ्वी की आयु, पृ० ३१-३३ ।

# सारस्वती सुषमा

## सम्पूर्णानन्दसंस्कृतविश्वविद्यालयानुसन्धानपत्रिका

१. एषा देशे विदेशे च लब्धप्रसरा त्रैमासिकी संस्कृतपत्रिका।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठ-भाद्रपद-मार्गशीर्ष-फाल्गुनपूर्णिमासु भवति।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धानप्रवृत्तेः समालोचनाप्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति।

४. अस्यां सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाना निबन्धाः प्रकाश्यन्ते।

५. प्रकाशितनिबन्धस्य प्रतिमुद्रणानां पञ्चविंशतिः, पत्रिकायाश्च सोऽङ्को दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।

६. अस्यां पत्रिकायां विशिष्टानां हिन्दीसंस्कृताङ्ग्लग्रन्थानां समालोचनाः प्रकाश्यन्ते। तदर्थं ग्रन्थकृद्भिर्ग्रन्थस्य द्वे प्रतिकृती प्रेषयितव्ये।

७. "वित्त अधिकारी, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)" इति सङ्केतेन ('बैङ्कड्राफ्ट' अथवा 'पोस्टल-आर्डर' इत्येतेनैव) मूल्यं प्रेषणीयम्।

८. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, सम्पूर्णानन्द-संस्कृत-विश्वविद्यालय, वाराणसी–२२१ ००२ (उ० प्र०)" इति सङ्केतेन विधेयः।



पञ्जीकरणसंख्या—६९८१/५७

## सुसङ्ग्राह्याणि अभिनवप्रकाशनानि

१. वास्तुसौख्यम्—श्रीटोडरमल्लविरचितं ज्योतिषशास्त्रस्य वास्तुसम्बन्धिग्रन्थमिदम् आचार्यश्रीकमलाकान्तशुक्लकृतया हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशितम्—१२०-००

२. सङ्ग्रहशिरोमणि: —ज्योतिषशास्त्रस्यापूर्वोऽयं सङ्ग्रहग्रन्थ आचार्यश्रीकमलाकान्तशुक्लप्रणीतया हिन्दी-व्याख्यया समलङ्कृत्य प्रकाशित: — प्रथमो भाग: २५०—००

३. काशीखण्ड: —महर्षिव्यासप्रणीत: स्कन्दपुराणान्तर्गतोऽयं ग्रन्थ आचार्यश्रीरामानन्दकृतया 'रामानन्दी'-संस्कृतव्याख्यया, अथ च पण्डितश्रीनारायणपतित्रिपाठिकृतया 'नारायणी'-हिन्दीव्याख्यया च समलङ्कृत्य प्रकाशित:—प्रथमो भाग: २००—००
द्वितीयो भाग: २००—०० तृतीयो भाग: ३००—००

४. महाभारतसर्वस्वम्—महाभारतमाधारीकृत्य निरूपितोऽयं ग्रन्थ आचार्यश्रीकुबेरनाथशुक्लमहोदयै: स्वोपज्ञतया प्रणीत: — ४००-००

५. रामायण ककविन्—रामचरितवर्णनात्मकोऽयं काव्यग्रन्थ: जावीलिपितो देवनागरीलिप्यन्तरीकृत्य अभिराज-डॉ० राजेन्द्रमिश्रकृतेन हिन्दीभाषानुवादेन समलङ्कृत्य प्रकाशित: — ३००—००

६. शिवमहिम्न: स्तोत्रम् (द्वितीयं संस्करणम्) —स्तोत्रमिदं 'मधुसूदनी', 'नारायणी'—प्रभृतिभि: संस्कृतटीकाभि:, अथ च हिन्दीपद्यानुवाद–हिन्दीव्याख्यादिभि: सनाथीकृत्य प्रकाशितम्— १००—००

७. सौन्दर्यदर्शनविमर्श:—सौन्दर्यशास्त्रस्यापूर्वोऽयं ग्रन्थ आचार्यश्रीगोविन्दचन्द्रपाण्डेयमहोदयै: प्रणीत: । ग्रन्थेऽस्मिन् सौन्दर्यशास्त्रस्येतिहासपरतन्त्रता, नानायुगविर्वात-काव्यशिल्पसङ्गीतादिव्यापकरूपकल्पनाभेदप्रदर्शनपुरस्सरं रूपधर्मनिरूणादिविषया: सम्यक् समालोचिता: — ९०—००

८. भास्करराय भारती दीक्षित—व्यक्तित्व एवं कृतित्व—तन्त्रशास्त्रस्यापूर्वोऽयं ग्रन्थ आचार्यश्रीबटुकनाथशास्त्रिखिस्तेमहोदयै: प्रणीत: । ग्रन्थेऽस्मिन् भास्कररायभारतीदीक्षितस्य जीवनचरितं कृतयश्च हिन्दीभाषया सम्यगालोचिता:—३००—००

९. उत्तरषट्कम्—तन्त्रशास्त्रस्य मूर्द्धन्योऽयं ग्रन्थ: सरस्वतीभवनस्थपाण्डुलिपीनाधारीकृत्य पाठभेदानालोच्य सर्वप्रथमं सुसम्पाद्य 'कुलदीपिका'–व्याख्यया चालङ्कृत्य प्रकाशित: — ८०—००

१०. विश्व-दृष्टि—डॉ० सम्पूर्णानन्द स्मृति-ग्रन्थ—ग्रन्थोऽयं वेद-व्याकरण-धर्मशास्त्र-दर्शन-ज्योतिष-इतिहास-राजनीति-साहित्यप्रभृतिविषयसम्बद्धान् निबन्धान् सङ्कलय्य सुसम्पाद्य च भागद्वयात्मक: प्रकाशित: — ३५०—००

११. डॉ० सम्पूर्णानन्द—जीवन एवं चिन्तन—ग्रन्थरत्नेऽस्मिन् डॉ० सम्पूर्णानन्दस्य समग्रं जीवनचरितं विवेचितम्, विचारा:, कृतयश्च निरूपिता: — ५०—००

१२. शाण्डिल्यसंहिता ( द्वितीयं संस्करणम्)—नारदपाञ्चरात्रसंहितास्वन्यतमायां श्रीशाण्डिल्यविप्रणीतायां संहितायामस्यां जगत: प्रादुर्भाव:, भक्तिसम्प्रदाय:, आचरणीयाचार:, युगपरिमाणादिकलिकर्तव्याकर्तव्यधर्माधर्मादिविषया: सम्यग्रूपेण समालोचिता: — १३२—००

पत्रव्यवहारसङ्केत:—प्रकाशनाधिकारी, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य, वाराणसी—२२१ ००२